श्लोकेष्वपूर्वविधिलक्षणघटकमप्राप्तविशेषणमव्याप्त्याद्युद्भावनेन दूषितम्। द्वादशादिषु षोडशान्तेषु श्लोकेष्वाऽत्यान्तिकत्वविशेषणं बहुधा विकल्प्य दूषितम् . सप्तदशप्रभृत्येकोनविंशपर्यन्तेषु "नियमः पाक्षिके सति" इति नियमविधिलक्षणमनेकधा विकल्प्य उपाय-कार्यादिभेदेन भिन्नानामुदाहरणानामनेन लक्षणेन संग्रहो भवितुं नाऽर्हतीति दूषितं ग्रन्थकृता,

विंशतिश्लोकप्रभृतिषु त्रयोविंशतिपर्यन्तेषु "तत्रचाऽन्यत्र च प्राप्ते" इति परिसंख्यालक्षणं बहुधा विकल्प्याऽऽक्षिप्तं दीक्षितेन्द्रेण ।

चतुर्विंशश्लोकेन विधित्रयलक्षणेषु प्रत्येकमुद्भावितानां दूषणानां परस्परातिदेशं

"विलक्षणान्यप्युदितानि लक्षणान्यपूर्वविध्यादिविभागसिद्धये ।
भजन्ति भूम्नेह कृतां पदावलीं परस्परामप्यपरस्परामिमाम्" इति ।

पद्येन संक्षेपेण निर्दिश्य, तस्यैव विस्तरेण अपूर्वविधिलक्षणे योजनीयः नियमविधिलक्षणाक्षेपोऽपूर्वविधिलक्षणे उभयोराक्षेपः परिसंख्यालक्षणे, परिसंख्यालक्षणाक्षेपोऽपूर्वविधिलक्षणे, नियमविधिलक्षणे च योजनीय इत्येवं त्रयोऽपि विधयस्तुल्यस्थितयः इत्युत्तरोत्तरस्मिन् वर्णिताक्षेपप्रकारोऽपि पूर्वपूर्वस्मिन् संभवन् सञ्चारणीय इत्युक्तम्, पञ्चविंशश्लोकमारभ्य त्रिंशश्लोकपर्यन्तेन ग्रन्थेनाऽपूर्व-नियम-परिसंख्याविधीनामुदाहरणानि क्रमेणाऽऽक्षिप्तानि, प्रसंगागतं चाऽन्यत्, व्रीहीन् प्रोक्षतीत्यत्र व्रीहित्वावच्छिन्नोद्देशेनैव प्रोक्षणं विधीयते, अपूर्वसाधनत्वस्यार्थिकत्वेन न तत्र लक्षणेत्यादि,

एकत्रिंशश्लोकेन तत्सामान्यादितरेषु तथात्वमिति (स्थालीपुलाक) न्यायेन कृत्स्नस्य शास्त्रस्य विरुद्धार्थत्वशंकावह आक्षेपः प्रादर्शि ग्रन्थकृता, द्वात्रिंशश्लोकमारभ्य द्विचत्वारिंशश्लोकपर्यन्तेन ग्रन्थेन प्राक् विस्तरेणोपवर्णितानामाक्षेपाणामनुवादपूर्वकं आक्षेपाक्षेपव्याजेनोद्भावितानि दूषणानि संक्षेपेण समाहितानि,

त्रिचत्वारिंश-चतुश्चत्वारिंशश्लोकाभ्यां नियम-परिसंख्याऽपूर्वविधीनां लक्षणान्युपवर्णितानि, नियम्यप्राप्तिं कुर्वन् नियमविधिः, निवृत्तिप्राप्तिं कुर्वन् परिसंख्याविधिः, नियम्य-परिसंख्याऽन्यप्राप्तिकारी विधिरपूर्वविधिरिति लक्षणानि प्रदर्श्य, "तेन पूर्वोद्भावितसर्वाव्याप्तिनिरासः, उपपन्ना लक्षणानुगतिः, एवमुदाहरणान्तरेष्वपि लक्षणानुगतिर्द्रष्टव्या, इति संक्षेपः" इत्यन्तेन प्रसंगानुप्रसंगतो विविधार्थप्रतिपादनेन सूत्रभाष्यादीनां तात्पर्यनिरूपणेन विधित्रयविवेचनरूपं प्रकरणमिदमुपसमाहार्षीद्दीक्षितेन्द्रः।

अत्रत्यो विशेषः ।

तत्रभवता दीक्षितेन्द्रेण ग्रन्थेऽस्मिन् प्रसंगतोऽनेकान्यधिकरणानि पूर्वोत्तरपक्षाभ्यां विवेचितानि, बहून्यधिकरणानि नामग्राहं गृहीतानि बहुत्र सूत्र-भाष्य-टुप्टीका-तन्त्ररत्न-शास्त्रदीपिका-न्यायसुधादिग्रन्थसंदर्भाणामापाततो विरुद्धत्वेनाऽवभासमानानां तात्पर्यवर्णनेन तेषां सामञ्जस्यं प्रतिपादितमनेन महाभागेन, भवदेवादीनां मीमांसकानां युक्तियुक्तं वचःपुरस्कृतं समादरेण, युक्त्यपेतन्त्ववधीरितमिति ग्रन्थशरीरपरामर्शशीलानां पुरस्तान्नकिञ्चित्पिष्टं पिष्यते,

एतावताऽयमर्थस्संम्पिण्डितो भवति-यदनेन ग्रन्थकृता समग्रमेव मीमांसाशास्त्रं आमूलचूडं सम्यक् समालोडितमिति, दीक्षितेन्द्रस्तु स्वयमेव बहुषु स्थलेषु तत्र तत्र स्वस्याव्याहतां गतिं स्वयमेवोद्घुष्यति । तत्र द्वित्राणि स्थलानि निर्दिश्यन्ते ।

१– किं कुर्मः ? तत्सङ्ग्रहार्थमेकानेकविध्यप्रवृत्त्यपेक्षायां हि बलवन्त्यनिष्टानि दर्शितानि । तस्मादपूर्वविधिलक्षणस्य स्वर्गकामवाक्याद्यव्याप्तिर्वान्नियम-परिसंख्यालक्षणयोरपि तदव्याप्तिरनिवार्यैव इति· पृ· ४३ ।

२—एकत्रिंशश्लोकस्याऽवतारिकायाम्-एवमपूर्वविध्यादिलक्षणगणमाक्षिप्य प्रदर्शितेष्वपि केचिदाक्षेपाश्शास्त्रमर्यादामाश्रित्य प्रदर्शिताः, नतु न्यायमाश्रित्य । न्यायान्वेषणे तु ते शिथिला इत्याक्षेपाक्षेपव्याजेन तत्तदाक्षेपोपजीव्यशास्त्रमर्यादाक्षेपं कृत्स्नस्याऽपि शास्त्रस्य परस्परविरुद्धार्थत्वशङ्कावहं स्थालीपुलाकन्यायेन दर्शयिष्यामीति प्रतिजनीते—

"अत्राप्याऽऽक्षेपवर्गे कतिचन शिथिलाशास्त्रमर्यदया ते
दोषास्स्युर्लक्षणोदाहरणगण इति प्रत्यपाद्यन्त पूर्वम् ।
तत्र स्थालीपुलाकप्रथितनयदृशा केषु चिद्दर्शयामः
शैथिल्यं तद्विरुद्धं सकलमिव भवद्येन दृश्येत तन्त्रम्" ॥इति॥

पृष्ठ सं· ९८ ।

३—अवश्यञ्चाऽत्राऽप्येवमेवोपपादनीयम् । अन्यथा शाब्दान्वयबोधवेलायामपूर्वीयत्वविवक्षायां तस्य जुह्वादिसाधारण्याय जुह्वादिष्ववहननस्य कृष्णलश्रपणवददृष्टार्थताया वक्तव्यत्वाच्च । विधिवैरूप्यापत्तिं तण्डुलप्रणडिकापूर्वीयत्वविवक्षायां विशिष्टानुवाददोषापत्तिं वा को वारयिता पृ· सं· ८५ इति ।

अवशिष्टन्तु दुरूहक्षिशासन्दर्भे वक्ष्यते ।

सत्यमुक्तं नीलकण्ठदीक्षितेन—

"विधित्रयी यदाऽऽक्षिप्ता नाऽन्यत्र लभते गतिम् ।
जयन्त इव दुर्दान्तजानकीशशरार्दितः" ॥इति॥

दीक्षितेन्द्रस्य वैशिष्ट्यम् ।

एतस्य विद्वद्धौरेयस्य सर्वेषु दर्शनेष्वनितरसाधारणे वैदुष्ये सत्यपि पूर्वोत्तरमीमांसयोर्नैपुण्यनन्यसाधारणी ।

"आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मादाचार्यस्स उदाहृतः ॥"

इत्याचार्यलक्षणमुक्तमस्मिन् मखिवर्ये भव्यमन्वयं लभते, श्रीमान् नीलकण्ठदीक्षित एतं विबुधवरेण्यं गंगावतरणे प्रशंसति।

यथा—

यं विद्म इति यद्ग्रन्थानभ्यस्यामोऽखिलानिति ।
यस्य शिष्यास्स्म इति च श्लाघन्ते स्वं विपश्चितः ॥
अमोषणीयैरक्रय्यैरमूल्यैरमलीमसैः ।
यत्प्रबन्धैश्शतेनैव भारती परिकर्मिता" इति ॥

एतस्य विद्वद्धौरेयस्य विषये नेयमतिशयोक्तिः यत्-भगवतीत्यध्वरमीमांसा सहस्राधिकरणी मूर्तिमती मखिवर्यरूपेण आविरासीदिति, परिमले शिवार्कमणिदीपिकायां न्यायरक्षामणौ प्रकृते विधिरसायने वा यदि दृष्टिः प्रक्षिप्यते, तर्हि करतलामलकवदिदं प्रतिभायात् । विषयविवेचनाय मीमांसान्यायसञ्चारेऽस्य कियत्स्वातन्त्र्यमिति, यं कमपि विषयं प्रकृत्य यत्किञ्चिद्विलिखन्नयं पण्डितपुण्डरीको मीमांसान्यायाननायासेन निरर्गलं प्रवर्षति, नाऽस्ति पूर्वत्र परत्र वाऽप्पय्यदीक्षितेन्द्रादन्यः कश्चन-मीमांसकप्रवरः यस्मिन्नस्येव मीमांसान्यायसञ्चारकौशलं दृष्टिगोचरीक्रियेत, किंबहुना खण्डदेवादयो महामीमांसका अपि यस्यानितरसाधारणीं न्यायसञ्चारनैपुणीमनुभूय परवशा मीमांसकमूर्धन्य इति सबहुमानं नाम गृह्णन्ति ।

विधिरसायनव्याख्यानामविचारः ।

पद्यमात्रस्य मूलस्यैव विधिरसायनमिति प्रागत्रवम् , तद्व्याख्यानभूतस्य वाक्यप्रबन्धस्य विधिरसायनसुखोपयोजिनीतिनामेति ग्रन्थकारोऽपूर्वविधिलक्षणाक्षेपान्ते, तथाऽन्यत्र तथैव व्यपदिशति, तथैव पूज्यपादैश्चिन्नस्वामिशास्त्रिचरणैर्ग्रन्थस्याऽस्याध्यापनकाले तथैव संशोध्य पाठितम् । न्यायप्रकाशव्याख्यायां सारविवेचिन्यां वार्तिककारिकाव्याख्यानावसरे सुखोपयोजिनीत्येव तैरुदटङ्कि (न्या. पृ. ११३)। स्वर्णपुरीस्थैः मीमांसाकण्ठीरवेत्याद्यनेकविरुदावलीविभूषितैर्वैद्यनाथशास्त्रिवरेण्यैस्तपर्युल्लिखितमेव नाम संशोध्य स्थापितमस्ति ।

एवमेव पञ्चनदक्षेत्रवास्तव्यैः बालसरस्वतीनारायणशास्त्रिभिः सव्याख्याया (शिवतत्त्वविवेक) शशिखरिणीमालाया उपोद्घाते विधिरसायनव्याख्या सुखोपयोजिनीत्येव (पृ. ६) विलिख्यते ।

तथा-प्रो-ए-बि-कीत्महाशयोपि स्वीये कर्ममीमांसाप्रबन्धे (पृ. १२) सुखोपयोजिनीत्येव निर्दिशति ।

एतैः प्रमाणैर्व्याख्यायास्सुखोपयोजिनीत्येव नाम युक्तमिति निश्चीयते ।

अत्राऽन्येषां केषाञ्चिन्मतालोचनम् ।

अत्र केचन विद्वांसः सुखावबोधिनीति नाम युज्यत इत्युपपादयन्तो दृश्यन्ते, विधित्रयपरित्राणभूमिका तु सुखोपजीविनीति व्यपदिशति (पृ. ५)। प्रो-[१]ए-सी-बर्नेल

[१] Vidhirasanopajiuini by the author Hall p 194 Burnell 86 a ohhert 5163 II 9764 p 576 catalogus catalogorum by theodor Aufnecht.

महोदयोपि स्वीये प्रबन्धे सुखोपजीविनीति वदति। स्वोक्तिद्रढिम्ने स्वहस्तयति व्याख्यागतं श्लोकम्।

यथा—

"यत्कुमारिलमतानुसारिणा निर्मितं विधिरसायनं मया।
पद्यरूपमनतिस्फुटाशयं तत्सुखावगतये विविच्यते" ॥इति।

[1]महामहोपाध्याय पं० गोपीनाथकविराजमहोदयः स्वीये मीमांसाहस्तलिखित-ग्रन्थसूचीपत्रे व्याख्यायाः नाम 'सुखोपयोजनी' इति निर्दिशति।

अत्रेदं बोध्यम्—उपरिनिर्दिष्टं सर्वं संभावनामात्रेण स्वीकारमर्हति, प्रमाणानुपन्यासेन तर्कणमात्रत्वात्। प्रो-ए-सि-बर्नेलमहोदयेन स्वमतोपपादनायोपन्यस्तं पद्यमप्यन्यथैव प्रतिष्ठते, विवेचनमिति नाम्ना भवितव्यमिति, अतः प्राङ्निर्दिष्टानां महामीमांसकानां वचनावलम्बनेन व्याख्यायास्सुखोपयोजिनीत्येवनामेह्यास्थीयते यावद्बलवद्बाधकोपनिपातम्।

व्याख्यायास्त्रेधा विभागः

विधिरसायनव्याख्यायास्सुखोपयोजिन्याः त्रेधा विभागस्संप्रदाये प्रसिद्धः। तत्र प्रथमे भागेऽपूर्व-नियम-परिसंख्याविधीनां त्रयाणां लक्षणाक्षेपः। द्वितीयेऽपूर्व-नियम-परिसंख्या विध्युदाहरणाक्षेपः, तृतीये भागे लक्षणोदाहरणाक्षेपाक्षेपव्याजेनोद्भावितदूषणानां परिहारः, त्रयाणां विधीनामसंकीर्ण-निष्कृष्टानि लक्षणानि प्रदर्शितानि इति विभागविवेकः।

अत्रेदं बोध्यम्—दृष्टार्थस्सर्वोऽपि नियमविधिरि"त्यनेन दृष्टार्थत्वं नियमविधेर्लक्षणमित्युक्तं ग्रन्थकृता, अस्य च मूलं टुप्टीकावाक्यम्। यथा—"अपि च यस्य नियमार्थं, तस्य दृष्टोऽर्थः। यस्याऽवलोपः, तस्याऽनाकांक्षितत्वाददृष्टार्थः॥ पृ. १६७४-९-१-८) इति, इदं भट्टवचनं मनसि निधायैव ग्रन्थकृता दृष्टार्थत्वं नियमविधेर्लक्षणमित्युक्तम्। दीक्षितेन्द्रेणैव कारी-पुत्रेष्ट्यादौ लक्षणस्याऽतिव्याप्तिमाशंक्य अदृष्टाद्वारकत्वं लक्षणे निवेशनीयमित्यभिहितम् इदमपरामृश्यैव दीक्षितेन्द्रस्योपरिसमाक्रमणं शङ्करभट्ट-खण्डदेव-सोमनाथ—वेकंटाध्वरि-अनन्तदेव-कोल्लूरनारायणशास्त्रिपर्यन्तानां शिवद्रोहे तात्पर्यमित्यवधेयं सुधीभिः।

एवं समग्रस्य ग्रन्थस्य परिशीलनेन सम्पूर्णोऽयंग्रन्थ इति सुविशदं प्रतीयते। तथाहि—तस्मादयुक्तं वैकृताग्निविधिष्वपूर्वविधिलक्षणस्याऽव्याप्तिकथनमित्येवं प्रथमाक्षेपः प्रपञ्चेनाऽऽक्षिप्तः। अथाऽऽक्षेपान्तराण्यपि यथा संभवमाक्षिप्यन्ते (पृ. १११) इति।

---

[1] Appayas own commentary on this work beaes the name 'सुखोपयोजनी'—Saraswati Bhavan studies Vol. VI page 17.

नियम्यप्राप्तिं कुर्वन् नियमविधिः निवृत्तिप्राप्तिं कुर्वन् परिसंख्याविधिः नियम्य-परिसंख्याऽन्यप्राप्तिकारी विधिरपूर्वविधिः इति, तत्र प्राप्तिकारित्वञ्च यथाकथञ्चिद्विवक्षितम्, तेन पूर्वोद्भावितसर्वाव्याप्तिनिरासः, एवञ्च नियमविधौ परिसंख्याविधौ चाऽतिव्याप्तिरापततीत्येतावदवशिष्यते, तन्निरासाय नियम-परिसंख्याभिन्नत्वं प्रापणीयविशेषणं कृतम्, तस्माद्युक्तमपूर्वविधिलक्षणम्, उपपन्ना लक्षणा-नुगतिः, एवमुदाहारणान्तरेष्वपि लक्षणानुगतिर्द्रष्टव्या, इति संक्षेपः इत्यादिग्रन्थशरीरं परामृशन्तो वयं निर्धारयामो यत्समग्रोऽयं ग्रन्थः—इति ।

तत्रैव प्रमाणान्तरोपन्यासः ।

किञ्च मद्रपुरीविश्वविद्यालयीयपुस्तकागारे (म-वि-लाइब्रेरी अड्यारपुस्तागारे, वारणसेय-सं-वि-विद्यालयीयसरस्वतीभवने च विद्यमानेषु विधिरसायनकोशेषु सर्वेष्वपि "इतिसंक्षेपः" इत्यस्याऽनन्तरं विधिरसायनं समाप्तमिति लेखो दृश्यते, इदमप्युपर्युपर्युक्तमेवार्थं द्रढयति ।

एतेन प्रथमसंपादकस्य अडकरोपनामकस्य मुकुन्दशास्त्रिणः "खण्डितत्वञ्चाऽस्य ग्रन्थस्येत्यादिरग्रलेखः, तेन भ्रामकेण ग्रन्थशरीरापरामर्शनिबन्धनेनाऽपरेऽपि केचन भ्रान्तिमापेदिरेमे च निरस्ता इति मन्तव्यम् ।

विधिरसायनस्य वैशिष्ट्यम् ।

विधिरसायनकृताऽस्मिन् ग्रन्थे नूतनतया प्रतिपादिता विषया इमे । तथाहि—

१—व्रीहीन् प्रोक्षतीति नाऽपूर्वविधिः ।

२—व्रीहीनवहन्तीति न नियमविधिः ।

३—इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इति न परिसंख्याविधिः,

४—प्राप्तपरिसंख्यायास्त्रैदोष्यम्, अप्राप्तपरिसंख्यायाञ्च तदभाव इति व्यवस्था न संभवतीत्याक्षेपः,

५—व्रीहीन् प्रोक्षतीत्यत्र व्रीहित्वावच्छिन्नोद्देशेनैव प्रोक्षणं विधीयते, अपूर्वसाधनत्वमर्थाल्लभ्यते, अतोऽत्र न लक्षणेत्यादि ।

६—अभ्युदितेष्टेः कर्मान्तरत्वम् ।

७—अनारभ्याधीतं साप्तदश्यवाक्यं सौर्यादिषु पाञ्चदश्येन विकलिपतं साप्तदश्यं बोधयति, मित्रविन्दादिप्रकरणगतन्तु साप्तदश्यनियमार्थम् ।

८—अदृष्टार्थत्वं नियमविधेर्लक्षणमित्यादि । उपरिसमुल्लिखितान्निमान् विषयानधिकृत्य प्रवृत्तस्य तदुपपादनप्रकारस्य दीक्षितेन्द्रोपज्ञस्य खण्डनाय शंकरभट्ट-खण्डदेव-सोमनाथ-वेंकटाध्वरि—अनन्तदेव-कोल्लूर नारायणशास्त्रिपर्यन्तानां भगीरथ (अनितरसाधारणः) प्रयत्नस्समुदभूत् ।

शङ्करभट्टः

एतानानेव विषयानधिकृत्य तदुपपादनप्रकारस्य दीक्षितेन्द्रोपज्ञस्य निरासायाऽर्वाचीनानां शङ्करभट्टप्रभृतिकोल्लूरनारायणशास्त्रिपर्यन्तानां भगीरथप्रयत्नः, तत्र

महामीमांसकशङ्करभट्टो विधिरसायनदूषणं नाम लघुकायं कञ्चन प्रबन्धं निर्ममे, स च प्रबन्ध चौखम्बामुद्रणालये प्रकाशं नीतः। अत्र सम्पादकमहोदयेन प्रभावलीस्थसन्दर्भस्योद्धरणेन त्रुटितांशपूरणमकारीति विज्ञेयं विद्वद्भिरिति। अस्य विधिरसायनदूषणस्य निरासः प्रभावल्यां कृत इति, नेह प्रयत्यते। तत्परिशीलनेनेदमवगम्यते यद्बहुषु स्थलेषु तदुद्भावितानि दूषणानि सुपरिहराणि, परिहृतानि च खण्डदेवादिभिः।

मीमांसाबालप्रकाशनामके ग्रन्थे तत्रोक्तानर्थान् खण्डयति यथा—"दृष्टार्थत्वं नियमविधिलक्षणं दीक्षितोक्तमज्ञानमूलकमेवेति मी· बा· २२। इदञ्च दूषणमदृष्टाद्वारकत्वविशेषणेन दीक्षितेन्द्रेणैव निराकृतम्।

एवं षष्ठाध्यायार्थनिरूपणावसरेऽभ्युदयेष्टिवाक्यमधिकृत्य प्रवृत्ते विचारे "तदेवदाक्षिपन्ति दीक्षिता इत्यादिना दधिवाक्ये शृतवाक्ये प्रतिद्रव्यं देवतासम्बन्धबोधनाद्वाक्यभेदो दुष्परिहर इति, कर्मान्तरस्य पूर्वपक्षो दुष्परिहर इत्यादिना पूर्वपक्ष एव परावर्तेत" इत्यन्तेन विधिरसायनोक्तमर्थमनूद्य दूषयति स्म मी· बा· सं· ११४।

अतश्शङ्करभट्टस्य विधिरसायनदूषणोपक्रमोपसंहारस्थपद्ये पाठकानां सुखावगतयेऽत्रोद्ध्रियेते। यथा—

"विध्यादित्रयलक्षणानि रचितान्याचार्यवर्यैर्निरा-
कुर्वन्तोऽप्पयदीक्षिता व्यरचयन् सिद्धान्तजाते क्वचित्।
आक्षेपं त्विह कुर्वते बहुमतिं ये तन्निरासक्षमाः
तेषामेष कृते तु शङ्करबुधस्याऽऽरम्भ उज्जृम्भते॥
विधिरसायनकीर्तितवार्त्तिकोदितजरद्विधिलक्षणदूषणे।
सुविहितं न विभावनया विना प्रतिविधानमनादरमर्हति" ॥इति॥

खण्डदेवः।

तदनन्तरं खण्डदेव उपतिष्ठते—षोडशशतद्व्यां वर्तमानः खण्डदेवाचार्यः स्वोपज्ञे भाट्टमीमांसाकौस्तुभे भाट्टदीपिकायाञ्च मन्त्राधिकरणे, अन्यत्र, तत्र तत्राऽधिकरणे विधिरसायनसुखोपयोजिन्योः प्रदर्शितानाक्षेपान्महताऽभिनिवेशेनानूद्य निरस्यति। तत्र ब्रवीति—"एतानि च लक्षणानि सुधीभिर्विधिरसायनोक्तोदाहरणेषु योज्यानि—इति।

तथा—'अतश्चोक्तलक्षणानां तदुदाहरणानाञ्च तत्र वार्त्तिकोक्तानामनुपपत्त्यभावात् विधिरसायनोक्तलक्षणाक्षेपः, उदाहरणाक्षेपश्च न सङ्गच्छते। आक्षेपप्रसङ्गेन न्यायशैथिल्यकरणन्तु तत्तदधिकरणप्रसङ्गेन तत्र-तत्र प्रायशो निराकरिष्यत इति विधिरसायनोक्तदूषणानामनवकाश इति।

अत एव नियम-परिसंख्यातिरिक्तफलकविधित्वमपूर्वविधित्वमिति तल्लक्षणमपि सुस्थम्। एतेषाञ्चोपाधीनां क्वचिदुदाहरणे साङ्कर्येऽपि न दोष इति, न विधिरसायनोक्तविधिलक्षणावकाशः। विस्तरेणैतदस्मत्कृतमीमांसाकौस्तुभे द्रष्टव्यमिति (पृ· ८८-

९३)। एवमेव भाट्टदीपिकायामपि विधिरसायनोक्ताक्षेपाणामाक्षेपो दृश्यते भा· दी· पृ ४१। दीक्षितेन्द्रोक्तमर्थं खण्डयतोऽप्यस्य खण्डदेवाचार्यस्य दीक्षितेन्द्रे महानादरो दृश्यते यतः स्वोक्तेऽर्थे दीक्षितेन्द्रं प्रमाणयन्नब्रवीति "तदुक्तं मीमांसकमूर्धन्येन विधिरसायनकृतेति।

यथा—

एव विधिविषये विशिष्टान्तर्गतस्य विधेयसन्दष्टस्य प्राप्तस्याऽपि विशेषणस्य विधेयत्वमुक्तं मीमांसकमूर्धन्येन विधिरसायनकृता मी· कौ· पृष्ठ २३३ इति।

## सोमनाथदीक्षितः।

एवं शास्त्रदीपिकाव्याख्याता निख्लिकुलतिलकस्सोमनाथदीक्षिश्शास्त्रदीपिकाव्याख्यायांमयूखमालिक वायां (३६५-३८३-४९८-५८३-६१३-७२८-८३२ इत्याद्यंकितैषु पृष्ठेषु विधिरसायनोक्तान् विषयानुपक्षिप्य, स्वयं वदति विधिरसायनोक्तं चिन्त्यम्-इति। तद् ग्रन्थशरीरान्तरंगपरीक्षकाणां नकिञ्चित्तिरोहितम्—इति।

## वेंकटाध्वरी।

श्रीमानयं दिगन्तविश्रान्तकीर्तेः श्रीनिवासदीक्षितस्य पौत्रो विद्वद्वरेण्यस्य रघुनाथदीक्षितस्य पुत्र आत्रेयगोत्रो वेङ्कटाध्वरी विधित्रयपरित्राणकर्त्ता काञ्चीपुरपरिसरस्थअरशाणिपालैग्रामाभिजनः समुपतिष्ठते, यं विश्वगुणादर्शाद्यनेकप्रबन्धकर्तारं नीलकण्ठदीक्षितस्य समसमयवर्तिनं सहाध्यायिनञ्चाऽभियुक्ता वदन्ति, विधित्रयपरित्राणञ्च ईसवीये १९५४ वर्षे श्रीपदपुरीतः प्रकाशितम्। विधित्रयपरित्राणकृता त्रयाणामपूर्वनियम-परिसंख्याविधीनां लक्षणानि परिष्कृतानि, तेषां भट्टवार्त्तिकतो लाभप्रकारमभिधाय, विधिरसायनोक्तदूषणान्यनूद्य परिहृतानि, अत्र मूल-व्याख्ययोर्विधिरसायनीयारीतिरेवानुसृता ग्रन्थकृता, परिच्छेदत्रयात्मना ग्रन्थविभागश्च सुखोपयोजिन्यास्त्रेधा विभागवत् प्रबन्धा, विधिरसायनस्यैव रूपान्तरमिति वक्तुं शक्यते, कचित्खण्डदेवं निरस्यतीत्येतावानेव विशेषः—इति।

## सोमेश्वरसूरिः।

एवं विद्वद्वरसुब्रह्मण्यसूरितनूजो रामेश्वरसूरिर्विधिविवेकनामानं कञ्चन प्रबन्धमरीरचत्। तत्राधस्तनाः पङ्क्तय इमा उपक्रमोपसंहारयोरुपलभ्यन्ते—"एवमुक्तरीत्याऽपूर्वविधिलक्षणे निर्दिष्टे सम्भवति सति, विधिरसायनेऽप्पयदीक्षितचरणैः "विधिरत्यन्तमप्राप्ते"इति वार्त्तिकमुदाहृत्य, इदं केषाञ्चित्प्रसिद्धविधीनां स्वरूपकथनम्, न तु लक्षणं दोषग्रस्तत्वादिति प्रतिपादितम्। तदभिप्रायं न विद्म इति।

एवमेव ग्रन्थोपसंहारे "एवं सति वार्त्तिकोपरि विधिरसायने यानि दूषणानि, तेषां निरवकाशत्वेऽपि दीक्षितचरणैर्यल्लिखितं तच्छिष्यपरीक्षार्थमेवेति" शिवमिति। अतोऽस्य ग्रन्थस्याऽऽमूलचूडं परीशीलनेनेदमायाति यद्दीक्षितेन्द्रेऽनितरसाधरणी मान्यताबुद्धिरस्याऽऽसीदिति।

### वेङ्कटनारायणः ।

एवं रामचन्द्रस्य पुत्रः, मीनाक्षीवल्लभस्य पौत्रः लक्ष्मणाचार्यस्य शिष्यो भारद्वाजगोत्रो वेङ्कटनारायणाख्यो बुधाग्रणीर्विधिभूषणनामकं ग्रन्थं प्रणिनाय। यत्र 'विधिरत्यन्तमप्राप्तौ' इत्यादिभट्टवार्त्तिकमेव व्याख्यातव्यमिति, तेन प्रतिज्ञायते, इदञ्च वार्त्तिकोक्तोदाहरणं सम्भावितदूषणनिरसनपूर्वकं संक्षेपाद्व्याख्यायते। अस्य-ग्रन्थस्य परिशीलनेनाऽव्ययमेवाऽर्थः प्रतीयते। दीक्षितेन्द्रेण विधिरसायनोक्तानामाक्षेपाणां परिहार एव तात्पर्यमस्य ग्रन्थस्येति।

### नायनार्यः ।

एवं श्रीनिवासार्यस्य तनूजो नायनार्यनामकः पण्डिताग्रणीर्विधिचमत्कारचन्द्रिकानामकं कञ्चन प्रवन्धमरीरचत्। अस्याऽऽद्यन्तयोः परिशीलनेऽयमपि प्रवन्धो विधिरसायनदूषणपर एवेति स्फुटमवगम्यते। ग्रन्थोपक्रमेऽयं वाक्यसन्दर्भो दरीदृश्यते—"यत्तु विधिरसायने "व्रीहीन्प्रोक्षति, व्रीहीनवहन्ती"ति विधी नाऽपूर्व नियमविधी, तद्विधेययोर्मन्त्रवर्णप्राप्तत्वात्-इति, तदापातचमत्कारमात्रमित्यादि।

एवमपूर्वविधिविचारसमाप्तौ वाक्यमिदं दृश्यते—"श्रीवत्सकुलतिलकसर्वलोकशरण्यविराजमानचक्रवर्तिवंशपयःपारावारसुधाकिरणेन श्रीनिवासार्यपुत्रेण नायनार्येण विरचितायां विधिचमत्कारचन्द्रिकायामपूर्वविध्युदाहरणसमर्थनम्—इति।

### कोल्लूरनारायणशास्त्री ।

श्रीमानयं कोल्लूरुपनामको नारायणशास्त्री शास्त्रदीपिकाव्याख्यातुस्सर्वतोमुखसोमयाजिनस्सोमनाथदीक्षितस्य शिष्यो विधिदर्पणनामकं विधिरसायनदूषणपरं कञ्चन प्रबन्धं व्यरीरचत्। नारायणशास्त्री चाऽपूर्व-नियम-परिसंख्याविधीनां निष्कृष्टानि लक्षणानि प्रतिपादयति, अपाकरोति च विधिरसायनोक्तं दूषणजातम्। अस्य ग्रन्थस्य अवसाने "इति कोल्लूरुनारायणशास्त्रिविरचिते विधिदर्पणे विधित्रयनिरूपणं सम्पूर्णम्" —इत्यन्तिमा पङ्क्तिर्दृश्यते। यद्यप्यनेन विधिविवेकनामकोऽपरोऽपि कञ्चन प्रबन्धो निर्मित इति प्रतिभाति। परन्तु विचार्यमाणस्स प्रकृतासम्बद्धः केवलविध्यादिविचारपर इति प्रतीयते।

एवं ए० बी० कीतमहोदयेन निर्मितात् कर्ममीमांसनामकग्रन्थाद्गोपालभट्टपण्डितेन मीमांसाविधिभूषणनामकः कश्चन ग्रन्थः कृतोऽस्तीति ज्ञायते, परन्त्वयमद्यत्वे नाम्नैव प्रथते न केनाऽपि जीवेन रक्षितः। तथा चाऽनेन प्रकारेणाऽप्पयदीक्षितेन्द्रेण-विधिरसायन-सुखोपयोजिन्योरुक्तानामर्थानां निरासाय दीक्षितेन्द्रसमकालिकानां तदर्वाचीनानां मीमांसकानाञ्च भगीरथप्रयासो दरीदृश्यते, परन्त्वेतेषां प्रयासः कियान्सफल-इत्यत्र विवेचका एव विमृशन्तु।

### अनन्तदेवः ।

श्रीमान् द्वितीयोऽनन्तदेव आपदेवात्मजो न्यायप्रकाशव्याख्याने भाट्टालंकारनामके ग्रन्थे मंत्रै रेवस्मर्त्तव्यमिति नियमप्रतिपादनपूर्वकं विधिरत्यन्तमप्राप्त इत्यादिमूल व्यख्यानप्रसंगे विधिरसायनोक्तान् आक्षेपान् अनूद्य तन्निरसनपूर्वकं विधित्रयस्य

लक्षणानि वर्णयति पृ० सं० २४३ तः ३४३। अत्रेदं पर्यालोचनीयं यत्-मखीन्द्रेण उक्तोयं नियमोऽनिच्छद्भिरपि सर्वैरङ्गीकरणीयः। यथा—सर्वेष्वपि वाक्येषु विषय-भेदेन विषयैक्येन वा क्रमेण यौगपद्येन वा नैकफलतात्पर्यकत्वम्, उपधेयसाङ्कर्येऽपि उपधीनामसांकर्यादिति न्यायेन उपधेयानां सांकर्येऽपि अन्तरङ्गतया क्वचिद् केनचित् व्यवहारस्य ऐच्छिकत्वेन न दोष इत्यादि। युक्त्युपबृंहितस्य मीमांसा-न्यायानपेतस्य दीक्षितेन्द्रेणोक्तस्यार्थजातस्याभिनिवेशेन निरासे भावं नाकलयामः।

## शम्भुभट्टः।

अवशिष्यते खण्डदेवाचार्यस्याऽन्तेवासी बालकृष्णसूनुः कविमण्डनः शम्भुभट्टः शंकरभट्टादिभिः कृतानि विधिरसायनखण्डनदूषणानि अनूद्य प्रभावल्यां तत्र-तत्र नीराकुर्वन् खण्डदेवोक्तं विधिरसायनदूषणोद्धारप्रकारसमर्थयमानो दरीदृश्यते। विमर्श-कानामग्रणी रयं शंकरभट्ट—सोमनाथ—अनन्तदेवादीनां मतानि खण्डयति, शम्भु-भट्टेनैव तेषां निरासः कृत इति, नाऽत्र तन्निरासाय प्रयत्यते।

क्वचिद् यद्यप्यत्र गुरोः-कृतावपिमयाह्युद्भाव्यते मद्वाक्यं परिहृत्य इतिवदन् स्वगुरुक्तमपि अर्थं निरस्यति। दीक्षितेन्द्रेऽस्य महती श्रद्धा तत्र चेदं कारणं दीक्षितेन्द्रस्य विषयविवेचनशैली अनन्यसाधारणी सुदुष्परिहरा इति विस्मयाकृष्टचेताः तस्मिन् श्रद्धतमाम्। तत्र-तत्र कथयति च विधिरसायन अयमाशय इति। परं खण्डना-वसरे महान् आडम्बरः प्रदर्श्यते। तद्द्रष्टॄणामिदं प्रतिभायात् यत्-दीक्षितमतं ईषदपि नाऽयं मृष्यति-इति। परन्तु मखिवर्येणोक्तमेवार्थं हृदयेन स्वीकरोति स्वोक्तिदाढ़र्याय संवादयति। कानिचिदुस्थलानि अधस्तात् उट्टङ्क्यन्ते।

तथाहि—

(१) एतच्च नित्यात्काम्यस्येत्यादित्रयस्त्रिंशत्तमश्लोकविवरणे विधिरसायनकृदुपपादितोक्तरीत्योक्तम् पृ. २११ नि. सा. सं.।

(२) मुख्ययैव वृत्त्या प्रयोग उपपादितः नक्षत्रावादवल्यां मीमांसकमूर्धन्येन पृ. २२९।

(३) ते मीमांसकमूर्धन्यैरेवोपक्रमपराक्रमवादे शिक्षिताः, तत्रैवद्रष्टव्याः पृ. २७१।

(४) अपूर्वसाधनत्वलक्षणांगीकारे फलचमसे सामानविध्यापत्तिर्विधिरसायनोक्ता दुष्परिहरा पृ. २०१ म. स.।

(५) वाचस्त्वग्रेद्विरात्रप्रभृतिष्वित्यादिविधिरसायनश्लोकोक्तरीत्या ....वाक्यानामिति बोध्यम् पृ. ६४१।

(६) एवञ्च सर्वस्याप्यत्रत्यविधिरसायनग्रन्थस्याऽपूर्वीयत्वस्याऽर्थाल्लभ्यत्वसंभवान्न लक्षणाजन्यबोधविषयत्वम्, उद्देश्यता तु व्रीहित्वाकारेणैवेत्येव तात्पर्यम्, तद्ग्र-न्थपर्यालोचनयैव सुधियो विदांकुर्वन्तु, विस्तरभयान्नोपपाद्यते, १४४ पृ.

(७) ते नक्षत्रवादावल्यां शिक्षितास्तत्रैव द्रष्टव्याः, विस्तरभयान्नेह प्रपञ्च्यते पृ. ७५६

(८) अत एवोद्देश्येऽन्यत्रयेत्यादिविधिरसायनश्लोकविवरणे दीक्षितैरपि फल-विध्येकवाक्यतैव स्पष्टीकृता, ७९०। विस्तरेणेतमर्थं शास्त्रदीपिकाभूमिकायां वक्ष्यामः। प्रसंगागतेन विचारेण दूरमन्तरिता वयम्।

प्रकृतमनुसरामः—

दीक्षितसमकालीनैः तदनन्तरकालिकैश्च कृताः निबन्धाः पुस्तकागराणिपरं शोभयन्ति। शाणोल्लीढमणिरिवाऽयं प्रबन्धराजः सर्वत्र अध्ययनाऽध्यायपनादौ मीमांसककुलेऽप्रतिहतप्रचारः अस्मिन् हिन्दूविश्वविद्यालये मीमांसाशास्त्राचार्यकक्षायां पाठ्यत्वेन निर्धारितः आसीत् स्थास्यति च। अतः अस्य महत्त्वविषये विमर्शका विद्वद्वरेण्याः परमं प्रमाणम् इति।

विधिरसायनोक्तार्थसमर्थनम्

विधिरसायनखण्डनप्रवृत्तानां ग्रन्थानां समालोचनेन विधिरसायनोक्तदूषणोद्धारार्थं प्रवृत्तेषु पण्डिताग्रणीः तिरुमलिशैग्रामाभिजनो वाधूलगोत्रो नृसिंहार्यतनूजः श्रीनिवासदासः प्रथमः। अनेन विधिरत्नावलीनामकः कश्चन ग्रन्थः प्राणायि। अस्मिन्-ग्रन्थे कोल्लूरनारायणशास्त्रिविरचितस्य विधिदर्पणनामकस्य ग्रन्थस्य खण्डनमुखेन विधिरसायनोक्तानामर्थानां दूषणोद्धारेण समर्थनं कृतं दरीदृश्यते। परन्तु परं शोकस्थानमिदं यदसम्पूर्णोऽयं ग्रन्थः। अस्य ग्रन्थस्योपक्रमेऽधोनिर्दिष्टानि पद्यान्युपलभ्यन्ते।

यथा—

विधिरसायनविस्तृतयुक्तिभिः विविधतर्कविकर्कशवर्त्मनि।
विविधलक्षणलक्ष्यविधास्वसौ वितनुते विधिदर्पणदूषणम् ॥१॥

विधिरत्नावली सेयं विबुधानन्ददायिनी।
सुखोपयोजिनी कण्ठे भासतां भावुकार्पिता ॥२॥

भूसारपुरवाधूलवंशवारिधिसम्भवः।
श्रीनिवासोऽधुनाऽऽनन्दं कर्तुमारभते सताम् ॥३॥इति॥

दुरुहशिक्षायाः प्रवृत्तिः।

साम्प्रतं विधिरसायनस्योपरि समापादितदूषणोद्धारपूर्वकं विधिरसायनोक्तार्थानां समर्थनपरो दुरूहशिक्षानामको द्वितीयेनाऽप्पयदीक्षितेन व्यरचि। अयञ्च अप्पयदीक्षितो रुक्मिणीपरिणयालङ्कारतिलकादिकर्ता प्रसिद्धाप्पय्यदीक्षितेन्द्रज्येष्ठभ्रातुः पौत्रः। अस्य पिताऽय्यप्पदीक्षितनाम्ना प्रसिद्धः। अयञ्च ग्रन्थो दुरुहशिक्षानामको विधिरसायनदूषणोद्धारपरस्समग्रोऽस्माभिस्समालोचि। मुद्रणार्थं सज्जीकृतोऽस्ति। इत एव प्रकाशं नेष्यते। अस्य ग्रन्थस्य परिशीलनेनेदं करतलामलकवत्प्रतीयते यद्विधिरसायनदूषणार्थमभिनिवेशेनप्रवृत्तानां शङ्करभट्ट-खण्डदेव-सोमनाथ-नारायणशास्त्रिप्रभृतीनां सर्वेषामाक्षेपा निराकृताःदुर्भेद्ययुक्तिकदम्बकेन। तत्र खण्डदेवमतं "कौस्तुभकारा इति" उद्धृत्य साऽवहासं निरस्यति। "युष्मद्गुरव इत्यादिना शास्त्रदीपिकाव्याख्यातुस्सोमनाथदीक्षितस्य मतमपाकरोति। कोल्लूरनारायणशास्त्रिणो मतं

पदे-पदे तदप्यबुद्धिपूर्वं तदप्यज्ञानविजृम्भितमित्यादिना न्यक्करोति। एवं प्रागुदाहृतानां शङ्करभट्टप्रभृतीनां नारायणशास्त्रिपर्यन्तानां मतं निरस्य विधिरसायनप्रतिपादिता एव विषयाः स्थाप्यन्ते।

एतेनाऽऽधुनिकानां केषां चिन्मीमांसकानामयं ग्रन्थश्शङ्करभट्टकृतविधिरसायन-दूषणनामकस्य ग्रन्थस्य खण्डनपर इत्युक्तिर्निराकृता, न वा कोल्लूरनारायणशास्त्रिकृतत्वेन यो निर्दिष्टः तद्दूषणमात्रविश्रान्त इत्यपि वक्तुं न शक्यते। सर्वेषाम्मतमत्र चिकित्सितमिति प्रघट्टकार्थः।

दुरूहशिक्षायाः प्रतिपाद्यस्य संक्षेपः।

अयञ्च ग्रन्थकारो ग्रन्थोपक्रमोपसंहारयोस्स्वग्रन्थस्य वैशिष्ट्यं विस्तरेण समुपवर्णयति,

यथोपक्रमें—

'यद्रसायनसमीरितं विधौ क्षुद्रधीः परिजहार दूषणम्।
तन्निराकरणकौतुकी जनः सन्निधापयतु मामिकां कृतिम्॥
यद्यपि न विधिरसायनमास्कन्दति गुरूक्तमपि।
तदपि तदाधुनिकानां मन्दविषन्यायतो निराकुर्मः॥
प्रायेण सिद्धवत्कृत्य पदार्थान् विलिखामि तान्।
कृतोपपादना ये स्युर्मूले विधिरसायने'॥

"व्रीहीन्प्रोक्षति" इति विधिनाऽपूर्वविधिरित्याक्षिप्तं विधिरसायने। तत्र केचित्परिहरन्ति—अयमपूर्वविधिरेव। एतद्विध्यभावे व्रीहिषु प्रोक्षणासिद्धेः, मन्त्र-लिङ्गकल्प्यं प्रोक्षणन्तु प्रस्तर एव स्यादिति। तदसारम्—मूल एव दर्शपूर्णमासप्रकरणेन तदपूर्वार्थतयाऽवगतस्येत्यादि"उदाहरणाक्षेपप्रथमवाक्यं लिखितमस्ति किल, तदर्थानालोचनमूलत्वादिति दृश्यते। एवमुपसंहारेपि तस्माद्विरुद्धं सकलमेव भवद् दृश्यते येन तन्त्रमिति दीक्षितैर्यदुक्तम्, तथैव वज्रलेपायते।

कथं बत निरुध्यतां कमलनालसूत्रैस्त्वया
मदत्रुटितशृंखलावलयबन्धनः सिन्धुरः।
कृतं विधिरसायने तदिह दूषणान्वेषणैः
वरं पुरहरे चिरं मन इदं सखे! स्थाप्यताम्॥इति॥

सिंहावलोकनन्यायेनोक्तार्थस्याऽनुसन्धानम्।

विधिरसायनखण्डनाय, मण्डनाय वा प्रवृत्तानां समेषां मीमांसकानां शंकरभट्टप्रभृतीनां नारायणशास्त्रिपर्यन्तानां मार्गदर्शी महर्षिकल्पोऽयं दीक्षितेन्द्र इति वस्तुस्थितिरियम्। एवं तदुक्तमर्थमभिनिवेशे निरस्यन्तोपि, तदुक्तान्नियमान् सर्वेऽपि तेनैव शब्देन, शब्दभेदेन वा समभ्युपगच्छन्ति।

ते यथा—

(१) नानालक्षणसमावेशानुसारेणानेकविधिरूपत्वांगीकारे दोषाभावः, उपधेयसांकर्येऽपि तत्तल्लक्षणरूपोपाधीनामसांकर्यात्—इति।

(२) एकैकस्मिन्नपि विषयभेदेनाऽपूर्वविध्यादिलक्षणानामुपजीव्योपजीवकभावेन तत्फलानां सांकर्यम्।

(३) अपूर्व-नियम परिसंख्याविधिलक्षणानामाश्रयभेदेन सांकर्यम्-इति।

(४) तत्फलानामपि प्रथम-चरमभावेन सांकर्यम्,—इति।

(५) केषु चित्किञ्चित्फलमन्यलभ्यमननुनिष्पादि, केषुचित्किञ्चित्फलमनन्यलभ्यमनुनिष्पादि-इति, तथा चोपरिनिर्दिष्टान् सर्वानपि नियमान् स्वीकुर्वन्तोऽपि तन्निरासाय तेषां प्रयासः किंनिबन्धनोऽन्यत्राऽभिनिवेशात्।

खण्डनाय प्रवृत्तैरसमाहितकतिपयविषयप्रदर्शनम्।

विधिरसायनोक्तानामक्षेपाणामयुक्तत्वप्रतिपादनाय प्रवृत्तेष्वस्पृष्टान्यसमाहितानि कानिचित्स्थलान्यधस्तान्निर्दिश्यन्ते। तानि यथा—

१—'अभागिप्रतिषेधादित्यर्थवादाधिकरणगुणसूत्रे "पशुकामश्चिन्वीत" इति वाक्यस्य फलार्थत्वं वार्त्तिकन्यायसुधयोरङ्गीकृतम्। इदञ्च विधिरसायनमूले स्पष्टम्। उक्तवार्त्तिकस्य दाशमिकसूत्रविरोधो ग्रन्थकृतोद्भावितः पृ० सं० ९९।

अस्यदूषणस्य सूत्रविरोधरूपस्योद्धाराय सन्नद्धैर्नव्यैर्मीमांसकैश्चर्चैव नाकारि। परिहारस्तु दूरे, अर्थान्न कोऽपि परिहारोऽभिहितः।

२—मखिवर्येण प्रतिबन्ध्याभिधानावसरे "यस्योभयं हविरार्तिमार्च्छेत्, ऐंद्रं पञ्चशरावमोदनं निर्वपेत् इति वाक्ये भङ्ग्यन्तरेण कर्मान्तरपरत्वसिद्धान्तः। तेन यदि सत्राय दीक्षितानामित्यादिवाक्यमधिकृत्य प्रवृत्तस्य षाष्ठस्याऽधिकरणस्य सिद्धान्तखण्डनमपि सूचितं विधिरसायनकृता पृ० ११५। अस्याऽयमभिप्रायः। तथाहि—यदि सत्राय दीक्षितानां सार्म्युत्तिष्ठासेत् सोममपभज्य विश्वजिता यजेत" इत्यधिकरणावष्टम्भन सोमविभागवदैन्द्रत्वस्याऽपि पाक्षिकानुवादविषयत्वे सम्भवति प्रकृतहानादेरयुक्ततया प्रकृते कर्मण्येवाऽऽर्त्तदोहप्रतिनिधित्वेन पञ्च शरावद्रव्यमात्रविधानोपपत्तेः। तथा चैन्द्रवत्सोमापभागस्याऽपि पाक्षिकानुवादत्वविषयसम्भवात्। सोमक्रयणानन्तरमेव साम्युत्तिष्ठासोर्विश्वजित्प्रायश्चित्तं वक्तव्यमिति। अत्र विधिरसायनोक्तदूषणनिराकरणाय बद्धपरिकरैर्नव्यैश्शङ्करभट्टादिभिर्नारायणशास्त्रिपर्यन्तैर्न कश्चित्परिहारोऽभ्यधायि।

३—"सर्वं ब्रह्मणे परिहरति" इति नियमविधिरिति सर्वसम्प्रतिपन्नोऽयं विषयः। एवञ्च नियमविधित्वेन सम्प्रतिपन्नेऽस्मिन्नुदाहरणे पूर्वविधिलक्षणस्याऽतिव्याप्तिरुद्भाविता रसायनकृता पृ० ५५। अस्मिन्विषये दीक्षितोक्तार्थ (दूषण) निरासाय साभिनिवेशं प्रवर्त्तमानैर्न कश्चित्परिहारोऽभिहितः। दिङ्मात्रमत्र प्रादर्शि, विस्तरेण दूरूहशिक्षाभूमिकायां वक्ष्यते।

अत्रेदं वक्तव्यम्—विधिरसायने दीक्षितेन्द्रेण शास्त्रमर्यादयाऽध्वरमीमांसान्यायसञ्चारनैपुण्येन च प्रतिपादितानां पदार्थानां तदुक्तानां नियमानाञ्च स्वीकार एवोचित इति प्रतिभाति, यतो हि कश्चिद्ग्रन्थकारश्शास्त्रोक्तानेव पदार्थान् शास्त्रीयमर्यादामवलम्ब्योपपादयति युक्तियुक्तञ्च ब्रवीति, न तु किञ्चिदपि युक्त्यपेतम्। अत एव अभियुक्तैरुच्यते "न हि कस्यचिद्ग्रन्थकृतोयुक्तिवलाद्विपरीतलेखनं वस्तुसिद्धौ बाधकमिति। व्यु. पृ. सं. ५। तथा चाऽयमर्थः परिनितिष्ठति, यत् खनं व दीक्षितेन्द्रेण विधिरसायने या समवलम्बिता रीतिः, ये च नियमास्तैश्शास्त्रमर्यादयाऽङ्गीकार्यत्वेनोक्ताः एतत्सर्वमन्यूनानतिरिक्तमभ्युपगच्छद्भिस्तदुपर्याक्रमणं शिवद्रोहे तात्पर्यमितिन्यायमनुकरोति अन्यत्राऽभिनिवेशादिति।

ग्रन्थकर्तुः परिचयः।

भारद्वाजं यस्य गोत्रं शाखा यस्य च कौथुमी
द्राह्यायणं यस्य सूत्रं स जयत्यप्पदीक्षितः
जनश्रुतिं समाश्रित्य तद्ग्रन्थालोचनेन च
चरित्रं मखिवर्यस्य संग्रहेण निरूप्यते ॥

श्रीमानप्पय्यदीक्षितेन्द्रश्छन्दोगः भारद्वाजगोत्रः सकलश्रौतस्मार्तक्रियाकलापनिपुणः, सर्वतन्त्रस्वतन्त्रप्रतिभस्तुण्डीरमण्डलान्तर्गते काञ्चीपुरसमीपवर्तिनि अडयपलनाम्न्यग्रहारे समुदभवदिति सर्वसम्प्रतिपन्नो विषयः। तेषां मातृभाषा द्राविडी (तमिल)। यद्यप्येवेऽपि तत्प्रान्तनिवासिनः कतिचन तद्वंश्या इति प्रथन्ते। यस्य पितामह आचार्यदीक्षितः प्रातःस्मरणीयनामधेयस्समभवदिति समवगम्यते। यं विद्वद्भिरेयं वक्षःस्थलाचार्य इत्यभियुक्तास्सवहुमानमाचक्षते, दीक्षितेन्द्रोऽपि न्यायरक्षामणावाद्यपद्येनाऽमुमेवाऽर्थं प्रत्यपीपदत्।

यथा—

"आसेतुबन्धमा च तुषारशैलादाचार्यदीक्षित इति प्रथिताभिधानम्।
अद्वैतचित्सुखमहाम्बुधिमग्नभावमस्मत्पितामहमशेषगुरुं प्रपद्ये" ॥इति॥

चित्रमीमांसायां सन्देहालङ्कारनिरूपणावसरे दीक्षितेन्द्रो वदति। यथाऽस्मत्कुलकूटस्थवक्षःस्थलाचार्यविरचिते वरदराजवसन्तोत्सवे—

'कश्चित् काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम्।
वरदस्संशयापन्नो वक्षःस्थलमवैक्षत' ॥इति॥

नीलकण्ठदीक्षितस्तु नलचरित्रनाटकप्रस्तावनायां वदति। तद्यथा—पारिपार्श्वकः—आः स्मृतमस्य कुलकूटस्थाः साक्षात्कृतब्रह्माणः सर्वविद्यागुरवः छन्दोगाः सोमपीथिनो द्वैतवादासहिष्णवो जगद्विदिता एव, न. च. ना. पृ. ३-४,। अमीष्वपि विशेषात् तत्रभवान् (आचान दीक्षित) आचार्यदीक्षित इति। तस्य भरद्वाजकुलचूडामणेः द्वे जाये आस्ताम्। तयोरेका वैकुण्ठाचार्यवंश्यश्रीरंगराजाचार्यदुहिता

तोताम्बी नाम्नी। तस्यामुदभवंश्चत्वारः पुत्राः। तेषु ज्यायान् माता[१]महप्रार्थनया प्रसन्नेन पित्रा दत्तरंगराजनामधेयो रंगराजाध्वरीति सुप्रसिद्धः। यः प्रकृतकथानायकस्य दीक्षितेन्द्रस्य पिता सर्वविद्याविशारदोऽद्वैतविद्यामुकुर-विवरणदर्पणाद्यनेकप्रौढ़-प्रबन्धनिर्माता। तस्यैव द्वयोः सुतयोर्दीक्षितेन्द्रः प्रथमः कनीयांश्चाचान्दीक्षित इति।

अयञ्च दीक्षितेन्द्रः स्वपितुरेव सकला विद्या अधिजग्मे। सिद्धान्तलेशसङ्ग्रहे वेदान्तकल्पतरुपरिमले, न्यायरक्षामणौ, शिवतत्त्वविवेके च तेनैवाऽयं विषय उट्टङ्कितः।

यथा—

'विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः।
श्रीरंगराजमखिनः श्रितचन्द्रमौलिः
अप्पय्यदीक्षित इति प्रथितस्तनूजः॥

यं ब्रह्मनिश्चितधियः प्रवदन्ति साक्षात्
तद्दर्शनादखिलदर्शनपारभाजः।
तं सर्ववेदसमशेषबुधाधिराजं
श्रीरंगराजमखिनं गुरुमानतोऽस्मि॥

एतेषामुत्पत्तिस्थानविषये विचारः।

केचन तद्वंशीयाः स्वग्राम एवास्य जन्मेति कथयन्ति। दीक्षितेन्द्रविजयकर्ता शिवानन्दयोगीन्द्रस्तु स्वप्रणीतदीक्षितेन्द्रचरिते विरञ्चीश (विरिञ्चि)पुर एतस्य जन्मेति निबबन्ध। यथोक्तम्—

'वीणातत्त्वज्ञ (४६५४) संख्यालसितकलिसमाभाक्प्रमातीचवर्षे
कन्यामासे तु कृष्णप्रथमतिथियुतेऽप्युत्तरप्रोष्ठपाद्भे।
कन्यालग्नेऽद्रिकन्यापतिरमितदयाशेवधिर्वैदिकेषु
श्रीगौर्यैं प्राग्यथाऽऽह स्म समजनि विरिञ्चीशपुर्यां कलेशः'॥

तत्र केचन चिदम्बरक्षेत्रे एतस्य जन्मेति मन्यन्ते किंवदन्तीमात्रेण, अत्राऽयं निर्णयः—यत्तस्य विरिञ्चिपुर एव जन्म प्रादुरभूत्। ततः परं कियताऽनेहसा पितृभिस्सामडयपलग्रामं प्रापेति यावद्बलवद्बाधकोपलम्भं मन्यामहे।

---

[१] श्रीवैकुण्ठार्यवंशाम्बुधिहिमकिरणश्रीमदद्वैतविद्याचार्यश्रीरङ्गराजाह्वयविसृतयशो विश्वविद्याजिसूनोः। ग्रन्थे वेदान्तकल्पद्रुवरपरिमले सर्वविद्याविनोदेऽस्मिन् पूर्णः पादोऽजनिष्टभ्रमरहितहिते निवशेष प्रधानः॥

नामविचारः ।

एतेषां नाम ग्रन्थेषु त्रेधोपलभ्यते। यथा—(१) अप्पदीक्षितः (२) अप्पयदीक्षितः (३) अप्पय्यदीक्षित इति च ।

(१) 'अप्पदीक्षित किमित्यतिस्तुतिं वर्णयामि भवतो वदान्यताम् ।
सोऽपि कल्पतरुरर्थलिप्सया त्वद्गिरामवसरं प्रतीक्षते

(इति बालकवेः)

अस्त्यप्पदीक्षित इति प्रथितस्तनूजः ।

(२) श्रीमानप्पयदीक्षितः

(३) अप्पय्यदीक्षितमणेरनवद्यविद्याकल्पद्रुमस्य कुरुते कनकालवालम् ।

इति यात्राप्रबन्धचम्प्वां समरपुंगवदीक्षितस्योक्तिः ।

भट्टोजीदीक्षितोऽपि—

'अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनहं वन्दे ।
यत्कृतिबोधाबोधौ विद्वदविद्विभाजकोपाधी' ।इति ब्रवीति ।

अत एतेषां अप्पदीक्षितः, अप्पयदीक्षितः, अप्पय्यदीक्षित इति त्रेधा व्यवहारोऽभियुक्तेषु दृश्यते। एतेषां पितृभिः नामकरणसंस्कारकाले कृतं नाम विनायकसुब्रह्मण्य इति तद्वंशीयाः कथयन्ति। द्राविडदेशेषु अप्पा अय्या अप्पय्या इत्यादिव्यवहारो स्नेहातिशयेनाऽद्यापि दृश्यत एव। तदेव नाम लोके सुप्रसिद्धमभूदिति मन्महे ।

अयञ्चातिबाल्य एव पित्रा कृतोपनयनसंस्कारोऽधरीकृतबृहस्पतिशेमुषीवैभवो स्वपितृचरणेभ्यः सर्वतन्त्रस्वतन्त्रेभ्यः श्रीरंगराजाध्वरीन्द्रेभ्य एव सर्वा अपि विद्याः अध्यगीषत, अयं विषयोऽस्माभिः प्राक्समुदलेखि ।

विंशतिवर्षदेशीयोऽयं सकलशास्त्रपारंगतो वाग्मी समेषां विदुषां चेतांसि समाचकर्ष, अस्य पाण्डित्येन प्रहृष्टान्तरङ्गः (शञ्जिसमीपे) सत्यमङ्गलाग्रहाराभिजन श्रीमान् रत्नखेट-श्रीनिवासदीक्षितः स्वसुतां मंगलनायकीं ब्राह्मेण विधिना दत्वा तयोरुद्वाहसंस्कारं निरवर्तयत्, दीक्षितेन्द्रेऽधिवीथि गच्छति तत्रत्याः सतीकुलमणयः पुरन्ध्रयः परस्परं अयमेवाचालोः पतिरि'त्यब्रुवन्। तच्च वचनं दीक्षितेन्द्रस्य कर्णपथमारुरोह। तदा तेन मनसि चिन्तितं मम भार्याया नामाऽस्मिन्ग्रामे आचालु इति प्रसिद्धिरिति, साम्प्रतमपि तद्वंश्या सादरसतिशयमिममाभाणकं श्रावयन्ति। सुप्रसिद्धविरचितबहुप्रबन्धः, प्रख्यातचरित्रः चूडामणिदीक्षितः (राजचूडामणिदीक्षितः) वेंकटेशदीक्षितस्य शिष्य एतस्या श्यालक आसीत्। यस्य नाम सबहुमानं वासुदेवदीक्षितो गृह्णात्यध्वरमीमांसा-कौतूहले पृ० २२। ततो ज्योतिष्टोम-वाजपेयादीन् महाक्रतूनन्वतिष्ठत् ।

एतस्य लोकाविश्रुतमनितरसाधारणं पाण्डित्यम्, दरेन्दुवतंसिनि पुरहिंसिनि पुंसि भूयसीं च भक्तिं धर्मनिष्ठतां श्रुत्वा वेलूरपुराधीशः चिन्नबोम्मनामकः राजचूडामणिः स्वसभायांमेतासभापण्डितपदे न्ययूयुजत्। तस्य च शिवभक्ताग्रगण्यस्य प्रार्थनया शिवार्कमणिदीपिकाप्रभृतीन्बहून् शैवोत्कर्षप्रतिपादकान् ग्रन्थान्व्यरीरचत्। एतस्य पाण्डित्यप्रकर्षेण समुल्लसितान्तरङ्गः कनकेनाऽभ्यषिञ्चदेनम्।

यथा—

'हेमाभिषेकसमये परितोनिषण्णसौवर्णसंहतिमिषाच्चिनबोम्मभूपः।
अप्पय्यदीक्षितमणेरनवद्यविद्याकल्पद्रुमस्य कुरुते कनकालवालम्' ॥

एतत्सर्वं साम्प्रतमपि अडयपलाग्रहारे विराजमानश्रीकालकण्ठेश्वरदेवालय उट्टङ्किते शिलाशासने दरीदृश्यते।

वेंकटगिरिराज्ये दीक्षितेन्द्रस्य प्राधान्यवर्णनमुखेन तन्नाम्नो विधिरसायने ल्लेखवर्णनम्

एवं वेङ्कटपतिराजस्याऽपि सभायां सभापण्डितोऽयं महाभागः। 'यस्योल्लेखो दीक्षितेन्द्रेण स्वोपज्ञे विधिरसायने कृतः।

'निष्प्रत्यूहाग्निहोत्राहुतियुगलमिताधारसङ्कीर्तनेऽपि'। विधि. र. पृ. १७इति

चतुर्थश्लोकस्य तुरीयचरणव्याख्याप्रसङ्गे सुखोपयोजिन्यामित्थं अयमत्र सङ्ग्रहश्लोकः—

'द्वे आहवनीये' इति श्रुतो विधिः, अग्निहोत्रमधिकृत्य फलसम्बन्धविधानं विनाऽस्य नाऽन्यत्फलं किञ्चित्।

प्राप्तं तत्प्रापणीयं किलयदिह कियान् पूरणीयोऽस्ति नांऽशो
'नाऽनिष्टं वा निवर्त्यं निजविषयतया दृश्यते किञ्चिदस्य।
किन्तु व्यापारमेव प्रथयति फलसंयोजनार्थं परेषां
प्राप्तः पुण्यैरगण्यैरिव विबुधगणो वेंकटक्षोणिपालम्' ॥इति॥

अत्रेदमभियुक्ताः कथयन्ति यत्-दीक्षितेन्द्रस्य पुत्र्याः विवाहप्रसङ्गे वेङ्कटक्षोणिपाल उपस्थित आसीत्। तदात्वे सर्वेमाङ्गलिके कर्मणि व्यापृता आसन्। येन कोऽपि राजानं वाचाऽपि न सच्चकार। तदा तेषां पत्न्या दीक्षितेन्द्रो बोधितो यदयं महाराज आगत्य गृहकोणे तिष्ठतीति, तदानीं दीक्षितेन्द्रेणोक्तम्—'अस्मिन्प्रसङ्गे सम्मानं राजा लभतां न वा लभताम्, अहन्तु तादृशस्थाने सर्वलोकस्पृहणीये राजानं स्थापयिष्यमि, येनाऽऽचन्द्रार्क महाराजस्सम्मानितो भवेदि'ति। किञ्च चित्रमीमांसानामकेऽलङ्कारग्रन्थे परिणामोत्प्रेक्षाप्रकरणयोः—

'द्विर्भावः पुष्पकेतोः विबुधविटपिनां पौनरुक्त्यं विकल्पः
चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः।

द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्
आनन्दं कोविदानां जगति विजयते श्रीनृसिंहः क्षितीन्द्रः ॥
नरसिंहधरानाथ के वयं तव वर्णने ।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते ॥
तथा नरसिंहमहीपालविदुस्त्वां मकरध्वजम् ।
मार्गणास्तस्य सञ्जाताः कथं सुमनसोऽन्यथा ॥इति॥
अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेः निरुपाधिकृपानिधेः' ॥इति॥

शिवमन्दिरनिर्माणपरिमलविरचनवर्णनम् ।

अयं मखिवर्यो विरिञ्चिपुरप्रान्ते तत्रतत्र बहूनि शिवमन्दिराणि निर्ममे, तत्र पूजादिकञ्चाचीक्लृपत्, यानि अद्यापिसंदृश्यन्ते सुदृढानि, किन्तु कचिद् जीर्णानि न पुनः इदादीन्तनेन केनापि धर्मबुद्धिना समुद्धृतानि। कदाचिदयं मखीन्द्रो दक्षिणयात्राप्रसंगेन मध्यमार्जुनक्षेत्रं जगाम। तत्राऽच्युतरायस्य मंत्रिवर्यः मूलाण्डग्रामाभिजनः (मुल्लंड्नं) षड्दर्शनीसागरपारदृश्वा गोविन्ददीक्षितः वेदान्तकल्पतरुमध्यापयन् दृष्टः। सः कानिचिद् संशयस्थलानि कल्पतरौ विवरितुं प्रार्थयाम्बभूव। श्रुत्वा दीक्षितेन्द्रः तस्य विवरणमुपचक्रमे। विवरणे च तस्य विषयविवेचनपटुतां समीक्ष्य तं प्रार्थयामास कल्पतरोः व्याख्यां कर्त्तुम्। अतएव अभियुक्ताः वदन्ति यत् अधोनिर्दिष्टेन पद्येन कल्पतरुव्याख्यानकरणे प्रावीवृतत् यथा –

अप्पदीक्षित किमित्यतिस्तुतिं वर्णयामिभवतोवदान्यतां ।
सोऽपि कल्पतरुरर्थलिप्सयात्वद्गिरामवसरं प्रतीक्षते ॥ इति

काशीयात्राप्रसङ्गः, केषाञ्चिन्मतेन खण्डदेवेन सङ्गतिश्च ।

ततस्तीर्थयात्राप्रसङ्गेन वाराणसीं प्राप्तवानयं दीक्षितेन्द्रः। तत्र गांगास्नानविश्वेश्वरार्चन-भागीरथीनिषेवणादिनिरताः कञ्चनकालं न्यवात्सीत्, अत्रकेचनमन्वते तदात्व एव मीमांसकवरेण खण्डदेवाचार्येण पण्डितराजपितुः पेरुभट्टस्य मीमांसागुरुणाऽस्यमेलनमभूत्। तस्मै विधिरसायनार्पणमित्यादि। अयञ्च खण्डदेवाचार्यो विधिरसायनं समग्रं परिशीलयन् तदीयां सरणिं स्वग्रन्थेषु भाट्टदीपिकादिष्वनुचकार, पाण्डित्यपूर्णस्याऽस्य विधिरसायनस्य परिशीलनेन प्रमुदितान्तरङ्गः स्वप्रणीते मीमांसाकौस्तुभे प्रथमाध्यायस्य चतुर्थचरणस्याऽऽग्नेयाधिकरणे "अत एव विधिविषयविशिष्टान्तर्गतस्य विधेयसन्दष्टस्य प्राप्तस्याऽपि विशेषणस्य विधेयत्वमुक्तं मीमांसकमूर्धन्येन रसायनकृता" (पृ. २३३) इतिग्रन्थसन्दर्भं सबहुमानं स्वोक्तार्थद्रढिम्ने प्रमाणयति स्मेति।

परन्त्वत्र न किमपिप्रमाणमुपलभ्यते, एतावदेववक्तुं शक्यम्, दीक्षितेन्द्रस्यचरमेवयसि खण्डदेवस्याऽवस्थितिः, परकालेवेति अन्यत्सर्वंयुक्तमेव, मेलनन्तुनिर्मूलम्।

तत्रैव भट्टोजिदीक्षितः शाब्दिकसार्वभौमस्तमेव विद्यागुरुं प्रार्थयमानस्तस्मादेव कौमारिलं तन्त्रम्, श्रीमच्छङ्करभगवत्पादीयं ब्रह्मसूत्रभाष्यञ्चाध्यगीष्टेत्यौत्युत्तराः कथयन्ति।

दाक्षिणात्यास्तु-एवं व्यवहरन्ति श्रीमान् भट्टोजिदीक्षितः स्वविरचितां सिद्धान्तकौमुदीं लेखकैर्लेखयित्वा प्राहिणोत्पण्डितेभ्यः। ते च विद्वांसोऽतिमञ्जुलां तां नवीनां पद्धतिं स्वशिष्यानपीपठन्। अथ बहुना कालेन भट्टोजिदीक्षित एव दक्षिणां दिशं प्रपेदे शिष्यैस्सह। तत्र दीक्षितेन्द्रस्य सकाशे वैयासिकम्, जैमिनीयञ्च शासनं समग्रमध्यगीष्ट–इति। सत्यप्येषां सकलतन्त्रस्वातन्त्र्ये विशेषतः पूर्वोत्तरमीमांसयोरनितरसाधारणी नैपुणी इति, तदीयग्रन्थानां समवलोकनेन समवगम्यते। अयमर्थ एवाऽर्वाचीनानां सर्वज्ञकल्पानां मधुसूदनसरस्वतीनामद्वैतसिद्धौ सर्वतन्त्रस्वतन्त्रैर्भामतीकार-कल्पतरुकार-परिमलकारैरित्यादिवाक्यसन्दर्भेण सुस्पष्टं प्रतीयते।

एवं गुरुचन्द्रिका-लघुचन्द्रिकाद्यनेकप्रबन्धकर्त्रा ब्रह्मानन्दगौडेनाऽपि बिन्दुटीकायां न्यायरत्नवल्यां –

"श्रीशंकराचार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य।
वेदान्तशास्त्रश्रवणालसानां बोधाय कुर्वे कमपि प्रयत्नम्" ॥

इति पद्यस्थवेदान्तशास्त्रपदस्य व्याख्यानावसरे वेदान्तशास्त्रस्य श्रीबादरायणचतुर्लक्षणीरूपसूत्रनिचय-भगवत्पादीयतद्भाष्य–तट्टीकावाचस्पत्य–तट्टीकाकल्पतरु-तट्टीकापरिमलरूपग्रन्थपञ्चकमर्थ इति विवृण्वता उपर्युक्तार्थो विशदीक्रियते स्म।

तस्यान्तिमस्थितिवर्णनम्।

एवं स दीक्षितन्द्रः चतुराधिकशतं प्रबन्धान्निर्मायाऽऽसेतु आच हिमाचलं वैदिकसिद्धान्तान् प्रासीसरत्। अन्ते चिदम्बरक्षेत्रं गत्वा तत्रत्यं भगवन्तं नटनसभापतिमाराधयन् कानिचिद्दिनानि निवसतिस्म। तत्रैव भौतिकीं तनुं परित्यज्य शिवेन सह सायुज्यं लेभे। निर्याणात्पूर्वकाले च श्लोकोऽयं पठित इत्यभियुक्ताः कथयन्ति। यथा—

चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलम्
सुताश्च विनयोज्वलाः सुकृतयश्च काश्चित्कृताः।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किञ्चिदहमर्थये शिवपदं दिदृक्षे परम्' ॥ इति

नटराजस्य स्वरूपं ध्यायन्नेव श्लोकमिमं पठितुमारभत—

"आभाति हाटकसभा नटपादपद्म
ज्योतिर्मयो मनसि मे तरुणारुणोऽयम्"।

इत्यर्धश्लोकपठनसमय एव तस्य ज्योतिः पांचभौतिकाच्छरीरान्निष्क्रम्य, समेषामेव पश्यतां जनानां पुरतः भगवति चित्सभेशे लिलिल्ये। तदनन्तरं तदुत्तराधंमस्य पुत्रा अश्रुपूर्णाकुलेक्षणा विनीताश्शान्ताः पितृभक्ता अपूपुरन्निति।

यथा—

नूनं जरामरणघोरपिशाचकीर्णा
संसारमोहजननी विरतिं प्रयाता ॥इति॥

तत्प्रणीतानां ग्रन्थानां सूचनी

तैर्विरचिता ग्रन्था (१०४) श्चतुरधिकशतमिति तदीयविरुदावलीलेखनक्रमगत [१]चतुरधिकशतप्रबन्धनिर्वाचकपदेनाऽवगम्यते ।

ते च ग्रन्थाः श्रोत्रयोर्नेत्रयोश्च पथमधिरूढास्सन्ति । क्वचिदासां कृतीनां परिगणनमपि तैरेव प्रायशः कृतं दरीदृश्यते ।

तद्यथा—

"श्रीवीरवेङ्कटपतिक्षोणिपालस्य साज्ञतः ।
कृतः कुवलयानन्दश्चित्रमीमांसया सह ॥१॥
अभिधालक्षणावृत्तिविवृतिर्वृत्तिवार्तिकम् ।
यादवाभ्युदयाख्याया व्याख्यानं च कृतं कृतेः ॥२॥
नामसङ्ग्रहमाला च व्याख्या तस्याश्च विस्तृता ।
काञ्चीवरदराजस्य दिव्यविग्रहवर्णनम् ॥३॥
व्याख्या तस्य च सङ्क्लृप्ता नातिसङ्क्षेपविस्तरा ।
सर्वपापप्रशमनी श्रीकृष्णध्यानपद्धतिः ॥४॥
सर्वदुर्गातितरणी दुर्गाचन्द्रकलास्तुतिः ।
आदित्यस्तोत्ररत्नञ्च तद्व्याख्यानञ्च विस्तृतम् ॥५॥
नानापद्यात्मकचतुर्मतसारार्थसङ्ग्रहः ।
न्यायमुक्तावली तद्वन्मध्वाचार्यमतानुगा ॥६॥
मयूखमालिका हृद्या लक्ष्मणाचार्यवर्त्मना ।
श्रीकण्ठाचार्यपद्धत्या निर्मिता मणिमालिका ॥७॥
शङ्कराचार्यदृष्ट्या च प्रक्लृप्ता नयमञ्जरी ।
न्यायमुक्तावलीव्याख्या नातिविस्तरसङ्ग्रहा ॥८॥
अद्वैतशास्त्रसिद्धान्तलेशसङ्ग्रहनामकः ।
न्यायरक्षामणिस्सर्वसूत्रतात्पर्यवर्णकः ॥९॥

[१] चतुरधिकशतप्रबन्धनिर्मित्यवगमिताखिलशास्त्रतत्त्वबोधः ।

तथा परिमलः कल्पतरुगूढतात्पर्यभेदनः ।
श्रीकण्ठभाष्यव्याख्या च शिवार्कमणिदीपिका ॥१०॥

श्रीशिवानन्दलरी शिवाद्वैतविनिर्णयः ।
रत्नत्रयपरीक्षा च पञ्चरत्नस्तवस्तथा ॥११॥

तथा शिखरिणीमाला ब्रह्मतर्कस्तवादयः ।
शिवतत्त्वविवेकश्च शिवकर्णामृतं तथा ॥१२॥

शिवार्चनप्रकाशार्थचन्द्रिका बालचन्द्रिका ।
मीमांसायाश्चित्रपटः[1] तथा विधिरसायनम्[2] ॥१३॥

मीमांसान्यायनिर्गूढ उपक्रमपराक्रमः ।
एते चाऽन्ये च बहवः प्रबन्धाः प्राग्विनिर्मिताः" ॥१४॥

अनया परिगणनयैव तत्कृतिपौर्वापर्यमपि सूचितमिति ध्येयम् ।

दीक्षितेन्द्रस्य समयनिर्धारणम् ।

शङ्करभट्ट --खण्डदेवप्रभृतिभिर्नव्यमीमांसकैर्विधिरसायनखण्डनकरणादेतेभ्यः प्राचीनो दीक्षितेन्द्र इति सिद्धमेव । शिवानन्दयतीन्द्रेण 'आत्मार्पणस्तुतिव्याख्याने' दीक्षितेन्द्रचरितप्रस्तावे 'वीणातत्त्वज्ञे' त्यादिपद्यमवलम्ब्य महालिङ्गशास्त्रिणा दीक्षितेन्द्रस्य समयः १५२०—खिस्ताब्दतः १५९३ यावदिति निरणायि, स्वर्गीयरामस्वामिशास्त्रिणा [3]तत्त्वबिन्दोराङ्गलभाषानिबद्धभूमिकायामयमेव समयो दीक्षितेन्द्रस्येति निरणायि । स एवाऽस्माभिरङ्गीक्रियते यावद्बलवद्बाधकोपनिपातम् ।

केषाञ्चिन्मतेन शंका ।

यत्त्वत्र पी-वि काणेप्रभृतिभिः कैश्चिदितिहासविद्भिः पूर्वोक्तपद्यं गलज्जातकमिति, तदनादृत्य महालिङ्गशास्त्र्युक्तसमयो न घटते, यतस्तदनुसारेण त्रिंशत्तमे वयसि श्रीकण्ठभाष्यव्याख्यायाः शिवार्कमणिदीपिकायाः प्रणनयनं तत्प्रयुक्तकनकाभिषेकादिवर्णनं च न सङ्गघटीति, तस्मिन्वयसि बुद्धिविकासपौष्कल्यासम्भवादिति ।

तन्निरासः ।

इदमापातरमणीयमिति विचारचातुरीचर्चितचेतसो मन्वते । तेषामिदमाकूतम् । परमेश्वरावतारेषु सर्वमुपपद्यत इति । अत्र सन्ति बहूनि निदर्शनानि । दृष्टिर्निधीयतां यथा शङ्करभगवत्पादा द्वादशे वर्षे शारीरकभाष्यमरीरचन्नित्यादि । एवं सन्त्यन्ये बहवो विद्वत्पुण्डरीकाः ज्ञानशक्त्यवताराः ।

---

[1] अज्ञातविषयस्सुदुर्लभश्च ।

[2] प्रस्तुतमिदं संस्करणम् ।

[3] तत्त्वबिन्दु—भू० पृ० ९४ ।

अयञ्च दीक्षितेन्द्रश्शिवरहस्यनवमांशे स्मर्यते।

"दीक्षितोऽपि भवेत्कश्चिच्छैवश्छन्दोगवंशजः।
भासुराचारनिरतश्शिवभक्ताग्रणीस्सुधीः ॥
शैवशास्त्रं तदा भूमौ लुप्तं विस्तारयिष्यति" ॥इति॥

अत एवभियुक्ता उदाहरन्ति—भगवतो भवानीपतेरंशावतीर्णं कमपि शाम्भवगणपारिषदमेनं दीक्षितेन्द्रम्। अत एव नीलकण्ठदीक्षितो नीलकण्ठविजयचम्प्वां 'श्रीकण्ठोऽवततार यस्य वपुषे'त्यादिपद्येनोपर्युक्तमेवाऽर्थमुक्तम्भयति, कालेन शंभुः किल तावताऽपि कलाश्चतुष्टिमिताः, द्वासप्ततिं प्राप्य समाः प्रबन्धान् शतं व्यधादप्पयदीक्षितेन्द्र इति, अतो हेत्वाभासेन पूर्वोक्तनिर्णयो न विकम्पनमर्हति। पद्योक्तजातकस्य गलज्जातकत्वकल्पने प्रमाणाभावाच्चेति पूर्वोक्तं सर्वं सुस्थमिति।

विधिरसायनविषये वक्तव्या विशेषाः

अस्मिन्प्रबन्धे यत्र तत्राऽशुद्धयो विपर्यस्ता वा पाठा उपलभ्यन्ते, यथा—छन्दोगधर्मः, यद्योन्यां तदुत्तरयोर्गायति, वाग्वा एषा यदैन्द्रवायवाग्रा गृह्यन्त इत्यादयः। ताश्च छन्दोमधर्मः, यद्योन्यां गायति वाग्वा एषा यदैन्द्रवायव इत्यादिरूपेण संशोधिताः। एवमुद्धृतवाक्येष्वपि केचन नोपलभ्यन्ते, उपलभ्यमाना अपि मुद्रितपुस्तकधृतपाठेभ्यो विलक्षणाः पाठास्तथैव मुद्रापिताः। यत्राऽनैकेषामादर्शकोशानामेकस्मिन्पाठे संवादः मुद्रितपुस्तके तु विसंवादस्तत्र बहुकोशसंवादिनः पाठस्योपरि स्थापनेन मुद्रितपाठस्य मूलग्रन्थविनाशभीत्याऽधस्ताट्टिप्पण्यां निवेशनेन त्याज्योपादेयविभागोऽप्यसूचि। पारायणं चिकीर्षूणामुपकाराय मूलश्लोकास्संगृहीताः, ग्रन्थक्रमेण विषयसूची ग्रन्थमध्ये ग्रन्थान्तरधृतानां वाक्यानां यथासंभवमुपलब्धानुब्धस्थलप्रदर्शिकाचापरा सूची समयोजि।

प्रकृतसम्पादनम्।

विधिरसायनञ्च सुखोपयोजिनीसहितमडकरोपनामकेन पं० मुकुन्दशास्त्रिणा (१९०१) तमे ईशवीयेऽब्दे विद्याविलासनाम्नि मुद्रणालये प्रकाशमनायि। तस्य कृते मीमांसककुलमखिलमृधमर्णम्। इदञ्च पुनर्मुद्रणात्मकं द्वितीयं संस्करणं विशिष्टभूमिकादिभूषितं विधित्रयतत्त्वविचारणविनोदरसिकानां प्रियपाठकानां करकमलयोरुपह्रियते।

कृतज्ञताप्रकाशनम्।

विशिष्यैतस्यां पुनर्मुद्रणग्रन्थमालायामेतस्य प्रबन्धस्य प्रकाशने भारतसर्वकारानुमतकेन्द्रीयशिक्षामन्त्रालयस्य, एवं हिन्दूविश्वविद्यालयोच्चतमाधिकारिणाञ्च प्रोत्साहनेन प्रवृत्तोऽयं संस्कर्ता नितरामेवाऽधमर्ण इति।

एतत्सम्पादनाय प्रवृत्तस्याऽध्ययनकालादस्य निबन्धस्योद्दिधीषोर्ममोपकारिष्वान्यतमाः संस्कृतमहाविद्यालयाध्यक्षा विद्यावारिधयोऽव्याजकरुणामूर्तयो वी. एस्. रामचन्द्रशास्त्रिमहाभागाःसंशोधितं स्वकीयं पुस्तकं मयि निधाय महन्तमुपकारमची-

करन्। इदञ्च पुस्तकमस्मिन्संस्करणे महत उपकारायाकल्पिष्ट। अतस्तेषां कृतज्ञता-मनारतमाविभर्मि।

मम प्रियसुहृत् आद्योपनामको मध्वाचार्यः पूर्वोत्तरमीमांसाचार्य विषयानुक्रमणिकादीनां प्रतिलिपीकरणे प्रूफसंशोधने च स्वकार्यातिक्तं समग्रं विनियुज्य मामत्यन्तमुपाकार्षीत्, अतस्तमपि वैदिकेनाशिषां राशिना संयोजयामि भगवन्तमन्नपूर्णाजानिं विश्वेश्वरं कर्माध्यक्षं प्रार्थयेऽभिलषितार्थ प्रदानेनाऽनुगृह्णात्वेतमिति।

दुर्लभवेद-दर्शनशास्त्रग्रन्थसङ्ग्रहतत्प्रकाशनबद्धपरिकरस्य प्राचीनप्रौढनिबन्धदर्शनरसास्वादरसिकान् विद्वद्वरेण्यान्प्रमोदयितुकामस्य कोषाध्यक्षस्य श्रीमतो ज्योतिर्भूषणगुप्तमहाशयस्याऽनुमत्याऽस्यां ग्रन्थमालायां प्रबन्धेनाऽनेन प्रथमं स्थानं लब्धमिति महदिदं प्रमोदस्थानमिति निवेद्यते। आशास्यते चाऽस्यां ग्रन्थमालायां न्यायकणिकासहितस्य विधिविवेकस्य विशिष्टं पुनर्मुद्रणमचिरेणैव भविष्यतीति।

## उपसंहारः।

अध्यापनादिकार्येषु व्यापृतेन मयाऽङ्गलपुस्तकमुद्रणवदत्यन्तशुद्धिसम्पादनाय विहितेऽपि महति प्रयासे दृष्टिदोषान्मनुष्यमात्रसुलभात्सञ्जातानामशुद्धीनां परिहाराय शोधनपत्रमप्यन्ते समयोजि, यतो हि संशोधानावसरे जागरूकैर्गवेष्यमाणा अप्यशुद्धिपिशाचिकास्तदात्वे काऽपि निलीना न दृष्टिगोचरतामुपयान्ति। अवसिते च शोधनावसरे यत्रैव चिररात्रायाऽन्विष्टम्, तत्रैवाऽऽत्मानमवभासयन्ति। एवं मुद्रणावसरे इकारैकारैकारौकारौकारादिमात्राक्षराणांभङ्गतोऽनिवारणीयान्मात्राच्युत्यादिदोषान्कचित्कचित्तकारदकारद्वित्वादिदोषानुपलभ्यमानान्प्रियपाठका एव संशोधयितुं सादरमनुरुध्यन्ते।

## अस्य प्रसाधने सामग्री।

अस्य सम्पादनाय समाहृता आदर्शकोशा एते—

१—म० म० चिन्नस्वामिशास्त्रिचरणानां संशोधितः प्रथमः

२—द्वितीयस्तु ब्रह्मश्री वी० एस्० रामचन्द्रशास्त्रिमहाभागनाम्।

३—सं० महाविद्यालयस्याऽऽदर्शकोशस्तृतीयः, अयञ्च कोशो महाविद्यालयस्याध्यक्षस्य सौहार्देन प्राप्तः।

४—वाराणसेयसंस्कृतविश्वविद्यालयीयसरस्वतीभवनस्थः कोशः सम्पूर्णः। अन्येऽपि चत्वारः (१-२९३३१, २-२९७६, ३-२९३५६, ४-२९७६८, ५-२९७१३) संख्याका एतेऽपि परामृष्टाः। एते च डां० सुभद्रझामहोदयानां सौहार्देन प्राप्ताः। अतस्ते धन्यवादार्हाः। एतेष्वाद्याश्चत्वार आंशिकमुपकारमजीजनन्। अन्तिमस्तु महत उपकाराय कल्पते स्म। एतानादर्शकोशानाधारीकृत्येदं सम्पादनकार्यमकार्षम्।

अन्ते च विद्वद्वरेण्याः प्रार्थ्यन्ते यत्-सदसद्व्यक्तिहेतवो गुणैकपक्षपातिनः प्राज्ञवरा मधुलिह इव विधिरसायनसाररसं पायं पायं सफलयन्तु मत्परिश्रममिति।

येषां प्रातस्स्मरणीयचरितानां महामहोपाध्यायशास्त्ररत्नाकराद्यनेकविरुदावलि-परिकर्मितसिंहसंहननानां विश्वविख्यातवैदुष्याणां श्रीमद्वेङ्कटसुब्रह्मण्यापरनामधेयानां चिन्नस्वामिशास्त्रिचरणानां सुतनिर्विशेषं पोषणाध्यापनादिनाऽनितरसाधारणेनाऽनुग्रहेण विधिरसायनादिग्रन्थसम्पादने समर्थोऽभूवम्, तेषां किमपि कर्तुमनीशानोऽनन्तां प्रणामपरम्परां पूज्यपादानां चरणनलिन्योर्विनिवेदयामि। तेषामाशीर्वचनेनैवाऽनन्य-सुलभेन विधिविवेकादिग्रन्थानां सम्पादने समुत्साहमावहामि।

"कालकूटसमो दोषो यस्य कण्ठे लवायते।
गुणोऽपि वा कलामात्रो यस्य भूषायते सतः॥
तमहं पुरुषं वन्देऽविद्यादोषहरं परम्"। इति शम्

म०-म०-चिन्नस्वामिशास्त्रिचरणानां शिष्यः
मीमांसारत्नम्० अ० सुब्रह्मण्यशास्त्री
कपालतडागपुराभिजनः
मीमांसादर्शनप्राध्यापकः
हिन्दूविश्वविद्यालयान्तर्गतसंस्कृतमहाविद्यालयस्य

दीपावली
१३-११-६६
वाराणसी

———

## विधिरसायन—सुखोपयोजिन्योर्विषयसूची

॥ समाप्ता विषयसूची ॥

———

# विधिरसायनस्य मूलश्लोकाः ।

## प्रकरणार्थप्रतिज्ञा ।

विख्याता मुनिवर्यसूक्तिषु विधास्तिस्रो विधिस्रोतसाम्
आचार्यैर्विशदं विविक्तविषयास्ताश्च व्यवस्थापिताः ।
किं तत्राऽस्ति विचार्यमार्यमथिते मार्गे निसर्गोज्ज्वले
नानोदाहरणैस्तु ताः प्रविशदीकर्तुं प्रवर्तामहे ॥१॥

## अपूर्वविधिलक्षणाक्षेपः ।

अत्यन्ताप्राप्तियुक्ते विधिरिति विषये सप्तमी वर्ण्यते चेत्
अव्याप्तिः प्राप्तियुक्तं विषयमुपगतेष्वग्निविध्यादिषु स्यात् ।
अग्रे दृष्ट्वैव सप्तम्यविषमगतये योज्यते चेत् त्र्यनीका-
भाजोरग्रत्वविध्योः प्रथमपदजुषोः स्यात्तदाऽव्याप्तिदोषः ॥२॥

अप्राप्तिं प्राप्तिभाजामपि यदि परमावान्तरापूर्वकृत्त्व-
व्यावृत्तोद्देश्यधर्मैः सृजसि विघटयन्नेनमव्याप्तिदोषम् ।
तस्मादादाय लक्ष्मत्रयकृति निहितं स्यादतिव्याप्तिवक्त्रे
व्रीह्युद्देशोऽपि हन्तौ नियमविधिपदे खल्वपूर्वावलीढः ॥३॥

यूपः सर्वोऽप्यपूर्वः स्वयमपि विविधादृष्टसंस्कारयोगात्
तस्मिन् दैत्तेऽपि दृष्टं खदिरनियमनं तत्र का प्राप्तिवार्ता ।
तस्मात्तत्तत्स्वरूपे परमनवगतं रूपभेदं विहाय
प्राप्त्यप्राप्ती विचार्ये कथमपि तदिहाऽव्याप्तिदोषान्न मुक्तिः ॥४॥

अव्याप्तिः पौर्णमास्यामपि यजनविधावत्र कल्पे प्रसर्पेत्
प्राप्तोद्देश्यस्य तेन ह्यधिगतफलतोपांशुयाजस्य लभ्या ।
स्यात्किञ्चैषाऽऽपराग्न्याहुतिषु फलसमायोजनार्थप्रवृत्ते
निष्प्रत्यूहाग्निहोत्राहुतियुगलमिताघारसङ्कीर्तनेपि ॥५॥

आकाङ्क्ष्यादर्थवादादुपनमति फले कर्मणो यद्विधानम्
तत्राऽप्येषा तदङ्गीभवनकृति भवेत्सन्निधानश्रुतानाम् ।
यत्किञ्चिद्यत्र कुत्राप्यनधिकृतवतीत्येव लक्ष्मस्थितिश्चेत्
हन्त्याद्येषु प्रसिद्धो नियमविधिरपि स्यादपूर्वं विधानम् ॥६॥

उद्देश्येऽन्यत्र वा यद्विधिपदमितरद्वाऽपि न प्राप्तिमत्स्यात्
तत्प्राप्तिं तत्र तन्वन्विधिरिति करणेऽप्येवमव्याप्तिरेव ।
ज्योतिष्टोमादिकानां त्रिदिवगतिफले सर्वकामोक्तिसिद्धे
किं प्राप्यं धर्मजाते प्रकरणगमिते स्वर्गकामश्रुतिस्याम् ॥७॥

नानाशाखाग्निहोत्रप्रभृतिविधिषु चाऽव्याप्तिरेवं सति स्यात्
तत्तद्विध्यप्रवृत्तावपि तदधिगतिः स्याद्धि विध्यन्तरेण ।
सा सा प्राप्तिस्तु नैवाऽभ्युदयफलवतीत्येवमप्राप्तिसत्त्वम्
कृत्वाऽव्याप्तेर्निरासे न नियम-परिसंख्यानुवृत्तेर्निवृत्तिः ॥८॥

तत्तद्विध्यप्रवृत्तौ सुलभमितरविध्यप्रवृत्त्या युतायाम्
तेषामप्राप्तिमत्त्वं नियमपदयव-व्रीहिपक्षाप्तितावत् ।
नानाकर्मोपसंहृत्युचितनियततत्साप्तदश्याप्तिवच्चे-
त्येवं सृष्टौ तु पृष्ठस्तुतिनियममुखातिप्रसक्तिः प्रसर्पेत् ॥९॥

यद्येकानेकविध्यप्रसृतिमुखभवः सङ्करो लक्षणानाम्
इष्येताऽन्याश्रयत्वप्रथम-चरमताद्युक्तसाङ्कर्यरीत्या ।
दैक्षादन्योऽपि दण्डः प्रकृतिजुषि भवेत्प्रैषकार्ये प्रशास्तुः
स्यात्पक्षे स्तोत्रसाम्नां क्रतुनिकरजुषामुत्तरास्वेव गानम् ॥१०॥

किञ्चाऽप्राप्ते सतीति प्रभवति परिसंख्यानिवृत्तिं न कर्तुम्
नित्याप्राप्तां निवृत्तिं घटयति खलु साऽप्यत्र को वा विशेषः ।
भावाप्राप्तिर्निषेधात्मकविधिनिकरव्यापकाव्याप्तिदुष्टा
सत्यप्येवं निषेधश्रुतिमुखपरिसंख्यासु चाऽतिप्रसक्तिः ॥११॥

येनाऽतिव्याप्तिभङ्गः किल नियमविधौ किं तदात्यन्तिकत्वम्
सर्वोद्देश्यानुवृत्तिर्यदि पुनरुदिताव्याप्तयः स्युर्विकल्पे ।
प्राप्तोद्देश्यैकदेशा अपि खलु कुहचिच्चारितार्थ्यं भजन्तः
श्रूयन्ते सार्वकाम्यप्रभृतिषु विधयस्तेषु चाऽव्याप्तयः स्युः ॥१२॥

उद्देश्यव्यापिका सा यदि भवति तदाऽऽप्यादिमाव्याप्तिबन्धः
स्यादव्याप्तिश्च गावामयनिकषडहे पृष्ठसाम्नोर्विधाने ।
अन्यार्थप्रापणोद्यन्नियम-हरणयोरप्यतिव्याप्तिरित्थम्
तच्चेत् त्रैकालिकत्वं न तु विधिरपवादापवादस्तथा स्यात् ॥१३॥

युज्येताऽपाक्षिकत्वं तदिति यदि निरुच्येत तत्पाक्षिकत्वम्
प्राप्त्य क्किम्मेलितत्वं कथिततदधिकाव्याप्तिदुष्टं न युक्तम् ।
त्यक्त्वाऽवच्छेदभेदं तदिति तु नियमातिप्रसक्त्या निरास्यम्
तत्रोपायान्तरं तद्विरह इति तयोर्ह्यस्त्यवच्छेदभेदः ॥१४॥

तद्भिन्नत्वं निवेश्यं यदि खलु तदवच्छेदभेदे ततो न
व्यावृत्तिः कार्यषोडश्यृतुगमनबृहत्संश्रिताया नियत्याः ।
स्थाने वैकल्पिकोक्तिः क्रियत इति मतं यद्युपायान्तराणाम्
तद्वाच्यं पाक्षिकत्वव्यतिकररहितं किन्तु वैकल्पिकत्वम् ॥१५॥

यद्युच्येताऽन्तरेण त्वधिकरणभिदा प्राप्तिसंमेलनं तत्
तत्राऽपि प्राक्षु पक्षेष्वपि समुदयते तावदव्याप्तिरेका ।
कार्त्स्न्ये नैवोपहव्यप्रभृतिभृति-हविश्शेषयोर्ब्राह्मणोक्तौ
पूतीकाधारमन्त्रान्तरमुखनियमातिप्रसक्तिस्तथाऽन्या ॥१६॥

इत्यपूर्वविधिलक्षणाक्षेपः ।

---

अथ नियमविधिलक्षणाक्षेपः ।

हेतुः कुत्राऽपि कार्यं क्वचन तदुभयं कुत्रचिद्विध्युपात्तम्
विध्यस्पृष्टं नियम्यं क्वचिदुभयविधं पाक्षिकत्वेन दृष्टम् ।
तस्यैव प्रत्यनीकं क्वचिदपि कुहचित्पाक्षिकं नैव दृष्टम्
नानारूपं तदित्थं नियमविधिशतं दुर्ग्रहं लक्षणेन ॥१७॥

तच्चाऽतिव्याप्तमग्नेर्विकृतिजुषि विधौ मीलनस्याऽग्रतायाः
नैमित्तिक्याश्च विध्योरखिलविधिषु च प्रापकावर्तकेषु ।
अप्राप्तांशस्य पूर्तिः फलमपि यदि तत्राऽधिकं योजनीयम्
शेषांशव्यर्थता स्यादखिलफलकताविध्यतिव्यापनं च ॥१८॥

अप्राप्तत्वं विरोध्याक्रमणकृतमिहाऽपेक्ष्यते यद्यथाऽपि
स्याद्दोषोऽयं हि पृष्ठ्यः षडह इति विधावप्ययं निर्निरोधः ।
अप्राप्तांशं विशेष्टुं क्रियत इति मतं यद्यनिर्धारितत्वम्
श्यावाश्वब्राह्मणोक्तिप्रभृतिविधिगणातिप्रसक्तिस्तथाऽपि ॥१९॥

इति नियमविधिलक्षणाक्षेपः

---

अथ परिसंख्याविधिलक्षणाक्षेपः

तत्राऽन्यत्रेति राशिद्वितयमभिहितं लक्षणे पारिसंख्ये
पश्यामस्तत्र लक्ष्योपगतमनुगतं भिन्नधर्मोपगूढम् ।
पाठप्राप्ताग्रताविध्यनुगतिरहितं विध्युपात्तानुपात्तम्
ग्राह्यं व्यावर्तनीयं तदपि च न भजत्यावपन्तीति लक्ष्यम् ॥२०॥
प्राप्तिः शेषद्वये चेदिह विविदिषिताशेषयुग्मे न सा स्यात्
अव्याप्तिस्त्वाश्रयादिद्वितयजुषि भवेच्छेषशेषित्वतश्चेत् ।
यत्किञ्चिद्योगतश्चेत् बहुषडहशतोक्त्थ्यादिविध्याक्रमः स्यात्
सर्वत्र ब्राह्मणोक्तिप्रमुखविधिषु चाऽतिप्रसक्तिः समाना ॥२१॥
तत्राऽन्यत्राऽपि चाऽऽप्तिर्नियमविधिषु चाऽस्तीत्यतिव्याप्तिरेव
नित्यप्राप्तिर्विवक्ष्या न खलु विरहतः कूर्मकीशादिभक्ष्ये ।
नित्याऽनित्याऽपि वाऽस्मिन्कथमपि च समुच्चित्य चेत्प्राप्तिरिष्टा
पत्नीसंयाजान्ततायां नियमकृति विधौ सा तथाऽप्यप्रणोद्या ॥२२॥
योज्यस्तत्रैव बाधः फलमपि यदि तद्वाऽर्थ एवाऽवशिष्टः
तस्याऽप्युक्त्या निषेधात्मकविधिनियमातिप्रसक्तेररोधात् ।
प्राप्तं सर्वत्र किञ्चित्खलु सुलभतरं वर्जनीयेन साकं
गृह्यन्ते तेऽपि लक्ष्या यदि तदपि विधौ सर्वथाऽतिप्रसक्तिः ॥२३॥

इति परिसंख्याविधिलक्षणाक्षेपः

---

अथ त्रिविधविधिलक्षणाक्षेपस्य परस्परातिदेशः

पूर्वाक्षेपप्रकारः प्रभवति परमप्यात्मवश्यं विधातुम्
प्रायः सूक्ष्मं विभागं विधिषु गमयतां लक्षणानाममीषाम् ।
शक्यं तन्न्यायसाम्यं प्रणिहितमतिभिर्बोद्धुमित्यप्रदर्श्य
त्रिष्वप्येतेषु भिन्नस्थितिषु नवनवो वर्णितस्तत्प्रकारः ॥२४॥

अथापूर्वनियमपरिसंख्योदाहरणाक्षेपः ।

उत्पश्यामो न चोदाहरणगणमपि प्राप्तरूपं विधीनाम्
प्राप्तं खल्वग्निदीक्षाहवनमिव हविःप्रोक्षणं मन्त्रलिङ्गात् ।
नैयत्यं सोमपात्रग्रहण इव ततः प्राप्तमेवाऽवहन्तौ
प्राप्तं तद्दृष्टकार्यान्वयपरमुसलोलूखलाम्नानतश्च ॥२५॥

तस्मादत्रोभयस्मिन् यवपरिहृतये पारिसंख्यो विधिः स्यात्
नोचेत्प्राप्त्यै नियत्यै कथमपि भवन्न प्रसिद्धोऽपि सःस्यात् ।
यद्वाऽपूर्वो विधिः स्यान्नियमपर इहाऽऽध्वर्यवत्वं नियच्छन्
अन्यस्मिन्द्वन्द्वसम्पादनविधिवशगे तत्प्रयच्छन्नपूर्वः ॥२६॥

एवञ्चाऽश्वाभिधानीग्रहविधिरपि तत्कर्तृनैयत्यमात्र-
प्राप्त्यर्थः पर्यवस्येत्प्रथनविधिरिव प्राप्तमन्त्रानुवादी ।
मन्त्रेऽप्यन्याप्रसक्त्यै विधिमिह सगुणप्राकृताङ्गोक्तनीतिः
न क्षाम्येन्मन्त्रमात्रे सति विधिविषये स्याद्विशिष्टानुवादः ॥२७॥

उद्देश्योऽत्राऽश्व एवेत्यपि न फलवति स्पष्टलभ्ये विधेये
भावार्थे को हि विद्वान्विधिमिह तमुपेक्ष्याऽन्यसंक्रान्तिमिच्छेत् ।
कर्तुर्नैयत्यमेतदत्फलमपि परिसंख्यावसाय्यस्तु नाम
स्पृष्टा नैषाहि दोषैर्न च भवति विधेर्विध्यनर्होपयानम् ॥२८॥

यद्व्रीहिप्रोक्षणादेर्यवमपि विषयं तन्वते तच्च चिन्त्यम्
युक्ताऽपूर्वेण दध्यानयनविधिनयादर्थवत्ता विधीनाम् ।
नो चेन्नैमित्तिकोऽपि प्रतिनिधिवदियात्सोमधर्मोपदेशान्
ऋच्छेत्सम्मीलनादीनपि च बृहदपि स्तुत्यपूर्वाविभेदात् ॥२९॥

मन्त्रेणाऽश्वस्य रज्जोर्ग्रहणविधिफलं मन्त्रबाधोऽन्यरज्जौ
त्रैदोष्यं प्राप्तबाधे प्रसरणमयते न त्विहेत्यप्ययुक्तम् ।
आग्नेयीन्यायतस्तामपि पुनरुपयत्केन मन्त्रो निवार्यः
त्रैदोष्यं चाऽऽज्यकार्यान्तरमुखपरिसंख्यासु केनोपपाद्यम् ॥३०॥

अत्राऽऽप्याक्षेपवर्गे कतिचन शिथिलाः शास्त्रमर्यादया ते
दोषास्स्युर्लक्षणोदाहरणगण इति प्रत्यपाद्यन्त पूर्वम् ।
तत्र स्थालीपुलाकप्रथितनयदिशा केषु चिद्दर्शयामः
शैथिल्यं तद्विरुद्धं सकलमिव भवद्येन दृश्येत तन्त्रम् ॥३१॥

अथाऽपूर्व-नियमपरिसंख्योदाहरणाक्षेप-समाधानम् ।

पश्वाद्यर्थो हि नैव प्रकृतिषु विकृतिष्वध्वरेष्वग्निरङ्गम्
का तत्रामूलभग्नात्कथय विकृतिषु प्राप्तिवार्ताऽतिदेशात् ।

अग्निष्टोमादिवाक्यानि तु फलजननायाऽऽश्रयार्थानि लिङ्गात्
तत्प्राप्तिर्न प्रकृत्यां न च विकृतिषु सा तद्विधौ तत्र वृत्तेः ॥३२॥

नित्यात्काम्यस्य शैध्र्यात्प्रकृतिमपि समापद्यतां लिङ्गतोऽग्निः
सोऽङ्गं संस्थाद्यवाक्यैः प्रकृति-विकृतिषु स्याद्द्विरात्रादिगोऽपि ।
तद्वाक्यान्याद्यवाक्यैस्त्रिभिरपि निखिलाहर्गणान्प्रापितेऽग्नौ
किं कुर्वन्त्वगत्या प्रकृतमिह विधिव्रातमग्नेः स्तुवन्तु ॥३३॥

अग्निष्टोमादयश्चेत्प्रकृतय इह स्यात्समानं विधानम्
सङ्कोचश्च श्रुतीनां क्वचन नयविदां निर्निमित्तो न युक्तः ।
तस्मादव्याप्तिरग्नेर्विधिषु न घटते वैकृतेष्वि-
त्याक्षेपेऽस्मिन्प्रवक्तुं नयसरणिचणैः शक्यमेतावदेव ॥३४॥

अग्निष्टोमादिशब्दाः प्रकृति-विकृतिसंस्पर्शिनस्सन्तु नाम
प्राप्यत्वाम्नातसंस्थान्प्रथममथ न ते यान्त्यनाम्नातसंस्थान् ।
तत्त्यक्तं द्विरात्रप्रभृतिषु विघयश्चोदकप्राप्तमग्निं
श्येनाकृत्यादिलब्ध्यै विदधत इति तेष्वक्षताव्याप्ततेति ॥३५॥

तत्रैतद्दूषणं स्यान्न गुणफलविधिष्वत्र वाऽन्यत्र वाऽग्निः
प्राक्किञ्चित्क्रत्वपूर्वान्वयमुपगतवानाश्रयोऽत्रानुवाद्यः ।
किन्त्वग्निष्टोममुख्यक्रतुसमधिगमात्प्रागनारभ्यवादे
शुद्धोऽग्निस्तस्य नैव क्वचिदपि विकृतावाश्रयत्वेऽस्ति भेदः ॥३६॥

वाचस्त्वग्नेर्द्विरात्रप्रभृतिषु परिसञ्चक्षतामन्यतोऽग्निम्
तेष्वन्याङ्गानि यद्वा नियमनमथ वा तेषु कुर्वन्तु तस्य ।
येष्वेताः क्लिष्टगत्या गुणफलभवनप्रापणार्था भवेयुः
षोडयर्थेष्विव स्यात्तदपि विधिफलं तेष्ववश्यं तथाऽपि ॥३७॥

उक्थ्यादिस्तृक्फलानां क्रतुसमधिगतिं मन्वते येऽपि तेष्याम्
तेनाऽग्निष्टोमसंस्थक्रतुविकृतितयोक्थ्यादिसंस्था न सिध्येत् ।
किन्तु स्यात्सार्वकाम्योक्त्युदितफलभिदासाधिकायां प्रकृत्याम्
उक्थ्यादीनां व्यवस्था प्रकरणपठनात्सर्वतस्तत्प्रसक्तौ ॥३८॥

तासु स्यात्साप्तदश्यं प्रकरणरहितं यासु न श्रूयते तत्-
तास्वस्य स्याद्विकल्पो विकृतिषु कथिते चोदकात्पाञ्चदश्ये ।

सत्येवं मित्रविन्दादिषु नियमविधिस्तस्य भूयो विधिस्स्यात् ।
सार्थक्ये सम्भवत्यभ्युदयफलकता केवलं नैव कल्प्या ॥३९॥

नास्त्येवोपांशुयाजोदधि-शृतसहितः पौर्णमास्यां विधानात्
तद्वश्यंदर्शतन्त्रे पठितमप्यृगाम्नातयाज्यानुवाक्यम् ।
कृत्वाचिन्तैव तस्य क्वचिदधिकरणे दार्शिकेष्वस्तितोक्तिः
तत्त्रेधा तण्डुलानित्यनुवदनमतस्तत्र नाऽव्याप्तिरस्ति ॥४०॥

प्रत्येकं द्रव्ययुग्मे न पटु घटयितुं देवतां वाक्यमेकं
सारूप्यस्याऽपि भङ्गः पशुफलवचसा केवलं तद्विधाने ।
तस्मात्तावद्विशिष्टान्वयिनि सति विधावर्तिवाक्योक्तरीत्या
वक्तव्यो देवतानामपनयनविधिः कल्पनं क्वोपयुक्तम् ॥४१॥

तर्हि स्याद्देवताभ्यः प्रविभजनविधिस्तत्र तद्गामिनीभ्यो
न स्यादेवं हि सर्वास्वपि दधि-शृतयोर्देवतास्वन्वयः स्यात् ।
तस्मिन्वाक्ये विधेयं विभजनमिह चेद्वक्ष्यमाणप्रकारं
न स्यादौपांशुयाजे हविषि तदिति तत्सर्वथा व्यर्थमेव ॥४२॥

अथ नियमपरिसंख्याविधीनां निष्कृष्टलक्षणानि ।

एवं प्राप्ते भणामस्त्रिविधविधिजुषां लक्षणानां विभागम्
दृष्टार्थो यः स सर्वो भवति नियम इत्यभ्युपेत्य व्यवस्थाम् ।
अर्थाद्वा शब्दतो वा स्वविषयगलितादेवकारान्नञो वा
यः स्यात्कस्यापि बाधः स भवति परिसंख्येति रीतिं च कृत्वा ॥४३॥

नित्यौदास्यान्यकिञ्चिद्विगलितनियतं यस्य तत्प्राप्तिमात्रम्
तत्कालं यस्य बोधः समुदयति निवृत्त्यात्मनाऽवश्यमेव ।
प्राप्तिं भिन्नस्य ताभ्यां कथमपि विदधत्स्यादपूर्वो विधिर्नः
कुर्वन्प्राप्तिं तयोः स्यात्स नियमपरिसंख्याभिधानः क्रमेण ॥४४॥

समाप्ताः मूलश्लोकाः ।

———

## व्याख्यानश्लोकाः ।

उद्घाट्य योगकलया हृदयाब्जकोशम्
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥१॥

जन्म-स्थेम-लयं समस्तजगतां यस्यैव लीलायितम्
यस्मिन्नाऽऽयतते भवस्थिरमहापाशक्षयः प्राणिनाम् ।
तद्ब्रह्मादिभिरप्यगम्यविभवं विश्वाधिकं शाश्वतम्
साम्बं ब्रह्मरसालमूलरसिकं पश्येयमन्तर्दृशा ॥२॥

यत्कुमारिलमतानुसारिणा
निर्मितं विधिरसायनं मया ।
पद्यरूपमनतिस्फुटाशयं
तत्सुखावगतये विविच्यते ॥३॥

प्राप्तं तत्प्रापणीयं किल यदिह कियान्पूरणीयोऽस्ति नांऽशो
नाऽनिष्टं वा निवर्त्यं निजविषयतया दृश्यते किञ्चिदस्य ।
किन्तु व्यापारमेव प्रथयति फलसंयोजनार्थं परेषाम्
प्राप्तः पुण्यैरगण्यैरिव विबुधगणो वेङ्कटक्षोणिपालम् ॥४॥

विलक्षणान्यप्युदितानि लक्षणा-
न्यपूर्वविध्यादिविभागसिद्धये ।
भवन्ति भूम्नेह कृतां पदावलिं
परस्परामप्यपरस्परामिमाम् ॥५॥

व्याख्यानश्लोकाः समाप्ताः ।

———

# विधिरसायनम् ।

## श्रीमदप्पय्यदीक्षितेन्द्रविरचितम् ।

## स्वोपज्ञसुखोपयोजिनीसहितम्

---

### सुखोपयोजिनी-व्याख्या

उद्धात्य योगकलया हृदयाब्जकोशं धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥१॥
जन्म-स्थेम-लयं समस्तजगतां यस्यैव लीलायितम्
यस्मिन्नायतते भवस्थिरमहापाशक्षयः प्राणिनाम् ।
तद्ब्रह्मादिभिरप्यगम्यविभवं विश्वाधिकं शाश्वतं
साम्बं ब्रह्म रसालमूलरसिकं पश्येयमन्तर्दृशा ॥२॥
यत्कुमारिलमतानुसारिणा निर्मितं विधिरसायनं मया ।
पद्यरूपमनतिस्फुटाशयं तत्सुखावगतये विविच्यते ॥३॥

प्रारिप्सितप्रकरणाविघ्नसमाप्तये सूत्रकारस्य महर्षेरनुस्मरणरूपं मङ्गलमाचरन्नेव [1]प्रकरणारम्भं तावदाक्षिप्य समाधत्ते—

प्रकरणार्थप्रतिज्ञा

विख्याता मुनिवर्यसूक्तिषु विधास्तिस्रो विधिस्रोतसाम्
आचार्यैर्विशदं विविक्तविषयास्ताश्च व्यवस्थापिताः ।
किं तत्राऽस्ति विचार्यमार्यमथिते मार्गे निसर्गोज्ज्वले
नानोदाहरणैस्तु ताः प्रविशदीकर्तुं प्रवर्तामहे ॥१॥

मुनिवर्यस्य-भगवतो जैमिनेः सूत्रेषु "विधिर्वा स्यादपूर्वत्वात्" मी० सू० १।२।२।१९। "नियमार्थो वा [2]श्रुतिः" ४।२।९।२४। "परिसंख्या" १।२।४।३४। इत्येवमादिषु त्रयो विधिप्रकाराः प्रसिद्धाः—अपूर्वविधिः, नियमविधिः, परिसंख्याविधिश्चेति। ते च भट्टपादैः परस्परासंकीर्णविषयतया स्पष्टमेवोपपादिताः। तत्र स्वत एव निरवद्ये ग्रन्थकारैश्च बहुभिर्निष्कर्षं प्रापितेऽपूर्वविध्यादिविभागे नूतनं किञ्चिद्विचारणीयं नास्त्येव; यद्यप्येवम्। तथाप्यपूर्वविध्यादीनां द्वादशस्वप्यध्यायेषु विप्र-

---

[1] शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥ इति प्रकरणलक्षणम् ।

[2] मुद्रितेषु भाष्य-शास्त्रदीपिकादिषु पुनश्शब्दो न दृश्यते ।

कीर्णैरिहापूर्वविध्यादिलक्षणविचारव्याजेन तत्र-तत्र प्रदर्शनीयैरुदाहरणविशेषैस्तमेवार्थमतिस्पष्टीकर्तुं प्रकरणमिदमारभ्यत इत्यर्थः ॥१॥

इति प्रथमश्लोकस्य व्याख्या

---

### मन्त्राधिकरणस्थवार्तिकोक्तत्रिविधविधिविवरणम् ।

अथ—"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चाऽन्यत्र च प्राप्ते परिसंख्येति गीयते ॥"

इति श्लोकेनऽऽचार्यैरपूर्वविध्यादीनां लक्षणमुखेन विभागः कृतः । तत्र "व्रीहीन् प्रोक्षती" त्यत्राऽपूर्वविधिः । एतदभावे हि दार्शपौर्णमासिकेषु व्रीहिषु प्रोक्षणं कथमपि न प्राप्नोति । "व्रीहीनवहन्तीति" नियमविधिः । एतदभावे पुरोडाशार्थमुपात्तेषु व्रीहिषु तुषविमोके लोकसिद्धकारणत्वात्; [1]तदाक्षिप्ततयाऽवघातः प्राप्नोत्येव; किन्तु लोकसिद्धकारणत्वाविशेषात्कदाचिन्नखविदलनमपि प्राप्नोतीति पाक्षिकी तस्याऽऽक्षेपतः प्राप्तिः । "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त" इति परिसंख्याविधिः । एतदभावेऽप्यगृभ्णन् रशनामिति लिङ्गादग्निचयनप्रकरणाम्नातो मन्त्रस्तत्रत्याश्वरशनाग्रहणे नियतमेव प्राप्नोति; किन्तु लिङ्गाविशेषात्तत्रत्यगर्दभरशनाग्रहणेऽपि प्राप्नोतीति तत्र चाऽन्यत्र च प्राप्तिः ।

### नियम-परिसंख्ययोरप्यपूर्वविधित्वापादनम्

यद्यपि नियम-परिसंख्योदाहरणयोः पाक्षिकी; नियता च प्राप्तिर्वस्तुतो नास्त्येव; तुषविमोकेन कार्येणाऽऽक्षिप्ततया ह्यवघातस्य पाक्षिकी प्राप्तिर्वक्तव्या; आक्षेपात्प्रागेव "व्रीहीनवहन्तीति" प्रत्यक्षशास्त्रं झटिति प्रवर्तते । तदनन्तरं प्रत्यक्षशास्त्रसिद्धेनैकेनोपायेन नैराकाङ्क्ष्यादनियतोपायाक्षेप एव न प्रवर्तते । एवं प्रत्यक्षशास्त्रेणाऽश्वरशनाग्रहणे झटिति विनियुक्तस्य मन्त्रस्य तेनैव नैराकाङ्क्ष्याद्रशनाद्वयसाधारण्येन लैङ्गिकविनियोगकल्पनं न प्रवर्तते । एवञ्च नियम-परिसंख्ययोरप्यपूर्वविधिवद्वस्तुतोऽत्यन्ताऽप्राप्त एव विषयः ।

### फलद्वाराऽपूर्वविधितो नियम-परिसंख्ययोर्भेदनिरूपणम्

तथापि नियम-परिसंख्याशास्त्रयोरप्रवृत्तौ अर्थाक्षेपेण नखविदलनस्याऽपि कदाचित्प्राप्त्याऽवघातस्याऽपि पाक्षिक्येव प्राप्तिः स्यात् । मन्त्रस्य लिङ्गाविशेषेण गर्दभरशनाग्रहणेऽपि विनियोगः स्यात् । तयोः प्रवृत्तौ त्वाक्षेप-मन्त्रलिङ्गावतारप्रतिबन्धद्वाराऽवघातस्य नियतता; मन्त्रस्य गर्दभरशनातो निवृत्तिश्च लभ्यत इति नियम-परिसंख्याविध्योः प्रवृत्तावपूर्वविध्यविशेषेऽप्याक्षेप-मन्त्रलिङ्गावतारप्रतिबन्धद्वाराऽवघातनियमेन; गर्दभरशनायां मन्त्रवर्जनेन च फलवत्त्वात्फलतो नियम-परिसंख्याव्यपदेश इति; अपूर्वविधितस्तयोर्भेदः ।

---

[1] तुषविमोकाक्षिप्ततयेत्यर्थः,

### इतरव्यावृत्तेरेवकारेण फलविवरणस्य चैक्येन नियम-परिसंख्ययोः साङ्कर्यशङ्का-परिहारौ

यद्यपि नियमे नखविदलनादिनिवृत्तिः; परिसंख्यायां गर्दभरशनादिनिवृत्तिः, इतीतरनिवृत्तिलाभ उभयत्राऽप्यविशिष्टः। अवघातेनैव तुषविमोकः कार्यः, अश्वरशनायामेव मन्त्रः कार्य इति;एवकारेण फलविवरणमप्यविशिष्टम्, तथाऽप्यवघातशास्त्रेणाऽवघातनियमस्याऽऽक्षेपतोऽवघाताऽप्राप्यव्रीह्यंशेष्ववघातप्रापणरूपस्याऽकरणे उपायान्तरसाधारणेनाऽऽक्षेपेणाऽऽपतत[1] उपायान्तरस्य निराकर्तुमशक्यतया तन्निवृत्त्यसम्भवेन नियमस्य प्रथमोपस्थितत्वात्; विधेयगतत्वेन प्रत्यासन्नत्वाच्चाऽप्राप्तांशप्रापणरूपो नियम एव फलम्। उपायान्तरनिवृत्तिस्तु चरमोपस्थितत्वात्, अविधेयगतत्वेन विप्रकृष्टत्वाच्च तदनुनिष्पादिनी न फलम्। परिसंख्योदाहरणे तु द्वयोरपि नित्यप्राप्तिसंभवेन स्वरूपप्राप्तेः; नियमस्य वा फलत्वायोगादितरनिवृत्तिरेव फलम्। एवं नियम-परिसंख्याविध्योः फलभेदे स्थिते सति; एवकारेण फलविवरणमेकत्राऽयोगव्यवच्छेदार्थम्; अन्यत्राऽन्ययोगव्यवच्छेदार्थमिति विशेषो द्रष्टव्यः। एवमाचार्यश्लोकार्थं मनसि निधाय, तत्र कांश्चिदर्थानाक्षेप-समाधानाभ्यां विचारयितुं तदुक्तमपूर्वविधिलक्षणं तावदाक्षिपति—

> अत्यन्ताप्राप्तियुक्ते विधिरितिविषये सप्तमी वर्ण्यते चेत्
> अव्याप्तिः प्राप्तियुक्तं विषयमुपगतेष्वग्निविध्यादिषु स्यात्।
> अग्रे दृष्टैव[2] सप्तम्यविषमगतये योज्यते चेत्त्र्यनीका-
> भाजोरग्रत्वविध्योः प्रथमपदजुषोः स्यात्तदाऽव्याप्तिदोषः॥२॥

अत्यन्तमप्राप्ते विधिरित्यपूर्वविधिलक्षणमयुक्तम्। तत्र ह्यप्राप्त इति विषयसप्तमी, सतिसप्तमी वा स्यात्? आद्ये यो विधिविषयत्वेनाऽन्वेति; तस्यैवाऽप्राप्तिर्वक्तव्या। द्वितीये विधिविषयस्य प्राप्तिसत्वेऽपि तदन्यस्य यस्य कस्यचिदप्राप्त्या लक्षणमुपपद्यत इति विशेषः।

### विषयसप्तमीपक्षे प्रकारद्वयेऽपि दूषणोद्भावनम्

तत्र विषयसप्तमीपक्षे विधिविषयत्वेनाऽभिमतस्य सर्वथाऽप्राप्तिर्विवक्षिता; उद्देश्यसम्बन्धित्वेन वा? आद्ये "य एवं विद्वानग्निं चिनुते" "अग्निहोत्रं जुहोति" "दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्य" मित्यादिविधिभिः स्वरूपेण प्राप्तानामग्न्यग्निहोत्रप्राजापत्ययागादीनां क्रतु-निमित्त-फलादिसम्बन्धार्थेषु "अथातोऽग्निमग्निष्टोमेनानुयजन्ति" "यावज्जीवमग्निहोत्रं जुहोति" "चित्रया यजेत पशुकाम" इत्यादिविधिषु; लोकतः स्वरूपेण प्राप्तानां[3] विदेवनादीनां राजसूयादिसम्बन्धार्थेषु "अक्षैर्दीव्यती"त्यादिविधिषु चाऽव्याप्तिः स्यात्। द्वितीये वैकृतेष्वग्नि-

---

[1] मु. पु. पाठः आपाततः।

[2] मु० पु० दृष्टैव इति० पा०।

[3] इति. मु. पु. नास्ति।

विधिषु; अतिग्राह्यविधिषु चाऽव्याप्तिः स्यात्। तथा हि "य एवं विद्वानग्निं चिनुते" इति प्रकृत्य श्रूयते "अथाऽतोऽग्निमग्निष्टोमेनाऽनुयजन्ति; तमुक्थ्येन; तमतिरात्रेण; तं द्विरात्रेण; तं त्रिरात्रेणे" त्यादि। तत्राग्निं चिनुत इति–चयनेनाऽग्निं संस्कुर्यादित्यर्थः। चयननिष्पादिते स्थण्डिलेऽग्निं स्थापयेदिति यावत्। स्थण्डिलनिष्पादकस्य चयनस्य साक्षादग्निसंस्कारकत्वायोगात्; अथातोऽग्निमित्यादेश्चयननिष्पादिते स्थण्डिले आहवनीयाग्निस्थापनानन्तरं तस्मिन्नग्नावग्निष्टोमादिभिर्यजेतेत्यर्थः। तथाऽतिग्राह्या-नाम केचन ग्रहाः। तानधिकृत्य श्रूयते "उक्थ्ये गृह्णीयाद्विश्वजिति ग्राह्या" इत्यादि। तत्राऽग्निस्तावत्प्रकृतावप्यस्ति; "अग्निष्टोमेनाऽनुयजन्तीति" विधानात्। न च प्रकृतेः प्राकरणिकोत्तरवेद्यवरोधात्तत्रानारभ्य विहितोऽग्निर्न निवेष्टुमीष्ट इति तत्राऽग्निष्टोमपदं विकृत्यग्निष्टोमपरं स्यादिति वाच्यम्; प्रकरणेन वाक्यबाधायोगात्। न च यथा "सप्तदश सामिधेनीरनुब्रूयादि"त्यनारभ्याधीतं साप्तदश्यं प्राकरणिकपाञ्चदश्यावरो-धात्प्रकृत्योर्दर्श-पूर्णमासयोर्निवेशमलभमानं मित्रविन्दादिविकृतिगामि जातम्; एव-मग्निरपि स्यादिति वाच्यम्। साप्तदश्यस्य हि सामिधेनीमात्रसंबन्धो वाक्येनाऽव-गम्यते; क्रतुसंबन्धस्तु तस्य वैयर्थ्यपरिहारार्थमव्यभिचरितक्रतुसंबन्धिसामिधेनीलिङ्गेन क्रतुं हृदयमागमय्य कल्पयितव्यः। पाञ्चदश्यस्य तु प्रकरणवशात्स्वत एव बुद्धौ विपरिवर्तमानेन क्रतुना संबन्धः क्लृप्त इति युक्तमेव तत्र प्राकरणिकस्य बलवत्त्वम्। इह त्वग्निष्टोमशब्दः क्रतुमेवाऽभिधत्त इति तत्संबन्धे वाक्येन कृते; प्रकरणेन बाधो न युक्तः। तस्मादनारभ्याधीतोऽप्यग्न्याधारस्थण्डिलरूपोऽग्निः प्रकरणाम्नातयोत्तरवेद्या विकल्पितः प्रकृतौ निविशत इति; अस्ति तत्र स्थापनेन संस्कृत आहवनीयाग्निः प्रकृतौ।

एवमतिग्राह्या अपि "उपस्तम्भनं वा एतद्यज्ञस्य; यदतिग्राह्या" इति प्रकृतौ विहिताः सन्ति। प्रकृतौ सन्तश्चाऽग्न्यतिग्राह्याः सर्वासु विकृतिष्वतिदेशेनैव प्राप्नुवन्तीति कासु चित्तेषां श्रवणं न तत्प्राप्त्यर्थम्; किन्तु तदाश्रितगुणकामप्राप्त्यर्थम्। अग्न्याद्याश्रिता हि गुणकामाः श्रूयन्ते "श्येनचितं चिन्वीत स्वर्गकाम" इत्यादयः। ते चोदकान्न प्राप्नुवन्ति। अङ्गस्य हि सतश्चोदकात्कथंभावाकाङ्क्षाकल्प्यात्प्राप्तिः। न त्वङ्गाश्रि-तानां फलार्थगुणानाम्। तथा निर्णीतञ्चाऽष्टमाध्याये "गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात्; निवृत्तिर्वा कर्मभेदादिति" ८।१।१४।२३।२४। पूर्वोत्तरपक्षसूत्राभ्याम्। एवञ्चाग्न्यति-ग्राह्याणां प्रकृतौ; कासु चिद्विकृतिषु चोपदेशेन; तासां प्रकृतेश्च सामानविध्ये सति; तदाश्रिताः फलार्थगुणाः प्रकृताविव तासु विकृतिष्वपि प्राप्नुवन्ति। न च प्रकृतावग्नेरुत्तरवेद्या सह विकल्पितत्वात्कासु चिद्विकृतिष्वग्न्युपदेशस्तन्नियमार्थो-ऽस्त्विति वाच्यम्। अनारभ्याधीतमग्निं "प्रकृत्याऽथाऽतोऽग्निमग्निष्टोमेनेत्यादि" वाक्यैस्तस्य प्रकृति-विकृतिरूपक्रतुसंबन्धः क्रियते; न तु तत्तत्क्रतुप्रकरणे। ततश्च विकृतिष्वप्यग्न्युपदेशस्य प्रयोजनाकाङ्क्षायामग्निप्रकरणाम्नाततया सन्निहितानां तदाश्रितगुणकामानां प्रवृत्तिः प्रयोजनमित्येव[1] कल्पयितुमुचितम्, नत्वसन्निहितत्त-

---

[1] इत्येवं मु० पु० पा०।

वक्ष्यमाणेन प्रकरणेत्यादिना शङ्का निरस्तेत्यन्वयः।

द्विकृतिप्रकरणव्यवस्थिताच्चोदकगणात्प्राप्ययोत्तरवेद्याऽग्नेः पाक्षिकत्वप्रसक्त्यपेक्षस्तन्नियमः प्रयोजनमिति कल्पयितुमुचितम्। न च वाच्य "मुत्तरेऽहन् द्विरात्रस्य गृह्यत" इति सर्वेषां द्विरात्राणामतिरात्रसंस्थे द्वितीयेऽहनि षोडशिग्रहनियमविधिस्तत्तद्द्विरात्रप्रकरणव्यवस्थितचोदकगणप्राप्येन षोडशिग्रहाभावेन षोडशिग्रहस्य पाक्षिकत्वप्रसक्त्यपेक्षो दृष्टः; तथेहाऽपि स्यादिति; तत्र सन्निहितप्रयोजनालाभेनाऽगत्या तथा कल्पनात्; इह सन्निहित-बुद्धिविपरिवर्तमानप्रयोजनसम्भवे दूरस्थितं बुद्धावविपरिवर्तमानं विशकलितानेकचोदकानुसन्धानसापेक्षमर्थं हृदयमागमय्य; प्रयोजनकल्पनानौचित्या[1]त्।

एतेन द्विरात्रादिषु चोदकेन प्राप्तानामङ्गान्तराणां निवृत्त्यर्थं द्विरात्रादिष्वग्निरेव नाङ्गान्तराणीति वा; द्विरात्राद्यतिरिक्तविकृतिषु चोदकात्प्राप्तस्याऽग्नेर्निवृत्त्यर्थं द्विरात्रादिष्वेवाऽग्निः, नान्यासु विकृतिष्विति वा परिसंख्याविधिरस्त्वित्यपि शङ्का निरस्ता, प्रकरणसन्निधापितप्रयोजनसम्भवे द्विरात्रादिचोदकपर्यालोचनालभ्यस्य, विकृत्यन्तरचोदकपर्यालोचनालभ्यस्य वा प्रयोजनत्वकल्पनायोगात्; प्रकृतिसमानविधानस्य चोदकाऽप्राप्तपरिसंख्यात्वानुपपत्तेश्च। तथा हि—न तावदङ्गान्तरपरिसंख्योपपद्यते। सा हि गृहमेधीयपञ्चमपक्षन्यायाच्चोदकप्राप्तपरिसंख्या वा स्यात्; तदष्टमपक्षन्यायाच्चोदकपरिलोपकत्वेनाऽप्राप्तपरिसंख्या वा? नाद्यः। वैकृताग्निविधानकाल एव प्राकृताग्निविधेर्निष्पद्यमानतया तत्पूर्वकस्याऽग्न्यङ्गान्तरसाधारणस्य चोदकस्य तदानीमात्मलाभाभावेन ततः प्राप्त्यभावात्। प्राप्तपरिसंख्यात्वे स्वार्थत्यागः; परार्थग्रहणम्; प्राप्तबाधश्चेति दोषत्रयापत्तेश्च। प्रागेव चोदकतः प्राप्तत्वे ह्यग्निर्न विधातव्यः। चोदकतः प्राप्तानि त्वङ्गान्तराणि स्वयमेव न निवर्तन्त इति प्रतिषेध्यानि। अतो वैकृताग्निश्रवणस्याऽग्निविधिरूपस्वार्थपरत्वं त्यक्तव्यम्, अङ्गान्तरनिवृत्तिरूपपरार्थलक्षकत्वञ्चाऽङ्गीकरणीयम्। चोदकप्राप्तानि चाऽङ्गान्तराणि बाधितव्यानि। यदि हि रशनादानपरिसंख्याविधिवदप्राप्तपरिसंख्या स्यात्; तदैव विधिश्रवणस्य प्रागप्राप्तस्वार्थविधायकस्य तेनैव नैराकाङ्क्ष्यमापाद्य ग्राह्य-परिसंख्येयसाधारणप्रमाणप्रवृत्तिप्रतिबन्धकतया फलतः परिसंख्यात्वमिति त्रैदोष्यं[2] नाऽपद्येत।

अप्राप्तपरिसंख्येति द्वितीयपक्षोऽपि नोपपद्यते। गृहमेधीये "ह्याज्यभागौ यजतीति" दार्शपौर्णमासिकयोराज्यभागयोश्चोदकात्सम्भवत्प्राप्तिकयोः पुनःश्रवणं क्लृप्तोपकाराऽऽज्यभागसंबन्धेन गृहमेधीयप्रयोगविधेर्नैराकाङ्क्ष्यमापाद्य; चोदककल्पनाप्रतिबन्धकत्वेन गृहमेधीयस्य प्रकृतिराहित्यरूपापूर्वतापरमित्यङ्गीकृतम्। न चेह प्रकृतावग्निविधेः क्लृप्तोपकारताऽस्ति। प्राकृताग्निविधेरपि वैकृताग्निविधानकाल एव निष्पद्यमानत्वात्। अत एव क्रत्वन्तरपरिसंख्येति पक्षोऽपि नोपपद्यते; द्विरात्रादिष्वग्निविधानसमये तत्समयविधानस्य प्राकृतस्याऽग्नेर्विकृत्यन्तरे चोदकतः प्राप्त्यभावात्। न च तत्राऽप्राप्तपरिसंख्यात्वं शङ्कितुं शक्यम्; द्विरात्रादिष्वग्निविधानेन विकृत्यन्तर-

---

[1] अस्य खण्डनं भाट्टदीपिकायां दशमस्य पञ्चमे पादे खण्डदेवेन कृतम्।

[2] नोपपद्यत इति मु. पु. पा.

प्रयोगविधीनां नैराकाङ्क्ष्यापादनासम्भवात्। न च चोदकसत्त्वे कासु चित्पुनःश्रवणं व्यर्थं माभूदिति; अग्निविषये चोदकाभावज्ञापकं सत्; अर्थतः परिसंख्या स्यादिति वाच्यम्। अग्न्यङ्गान्तरसाधारणस्य चोदकस्य निवारयितुमशक्यत्वात्। अग्निमात्रे प्रत्येकं चोदकाभावात्। तस्मात्प्रकृतौ विकल्पितमग्निं यथाप्रकृत्येव द्विरात्रादिषु विदधानानां द्विरात्रादिष्वङ्गान्तराणि विकृत्यन्तरेष्वग्निं चाऽपरिसङ्ख्क्षाणानां वैकृतानामग्निविधीनाम्, अतिग्राह्यविधीनां च गुणकामप्राप्तिरेव प्रयोजनम्। तथा व्यवस्थापितं च"अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिस्स्यादि" १०।८।११।२१ ति दाशमिकाधिकरणे। ततश्चाऽतिदेशप्राप्तविषयत्वेनाऽप्राप्तविषयत्वाभावात्तेषु लक्षणस्याऽव्याप्तिः। न च ते मा भूवन्नपूर्वविधय इति वाच्यम्। अप्राप्तांशपरिपूरणेतरनिवृत्तिफलरहितानामप्राप्तगुणकामप्राप्तिफलानां तेषामपूर्वविध्यन्तर्भावावश्यम्भावात्। अन्यथा तेषां नियम-परिसंख्ययोरप्यनन्तर्भावेन विधित्रैविध्यभङ्गापत्तेः।

### सतिसप्तमीपक्षे प्रकारद्वयेऽपि दूषणोद्भावनम्

नन्वस्तु सतिसप्तमीति द्वितीयः पक्षः; "नियमः पाक्षिके सती"त्यग्रेतनसप्तम्यवैरूप्यलाभात्। तथा सति नोक्ताव्याप्त्यवकाशः। न च वाच्यमग्न्यादिविधिषु विधिविषयस्य प्राप्तत्वेऽपि; श्येनाकृत्यादिगुणो न प्राप्त इति खल्वव्याप्तिपरिहारं मन्यसे; तत् भ्रान्तिविलसितम्। तस्याऽपि "श्येनचितं चिन्वीत स्वर्गकामः" इत्यादिवाक्यैः स्वरूपेण स्वस्वोद्देश्यस्वर्गादिसंबन्धित्वेन च प्राप्तत्वादिति। ततोऽप्यन्यस्य यस्य कस्यचित्सम्भावितामप्राप्तिमादाय लक्षणानुगमनोपपत्तेः। लक्षणीयविध्युद्देश्यसंबन्धित्वेनाऽप्राप्तिविवक्षायां तस्याऽप्यप्राप्तिसम्भवाच्च। न ह्यग्नेर्विकृतिसंबन्धोपदेशाभावे तदाश्रितगुणकामानां विकृतिमध्येऽनुष्ठानप्रसक्तिरस्तीति चेत्। उच्यते "यस्य च भावेन भावलक्षणमि २।३।३७ ति" सूत्रानुशिष्टया सतिसप्तम्या यस्याऽप्राप्तिर्विधिप्रवृत्तावुपलक्षणत्वेन निर्दिष्टा; तत्प्राप्तिफलकत्वपर्यन्तलक्षणमिति विवक्षितम्, न वा ? तदविवक्षायां हन्त्यादिनियमविधिष्वतिव्याप्तिप्रसङ्गः। दार्शपौर्णमासिककृत्स्नाङ्गकलापोपदेशोपजीविपाशुकचोदकाधीनप्रसक्त्यपेक्षे "न तौ पशौ करोती" त्याज्यभागनिषेधे; उक्तचोदकाधीनप्रयाजादिप्राप्त्यपेक्षे "एकादश प्रयाजान्यजती" त्यादिशास्त्रविहिते प्रयाजैकादशत्वादिगुणे च; स्वस्वोद्देश्यमप्राप्त एवाऽऽज्यादिधर्मे विलापनादौ च प्रकृतविध्युद्देश्यमप्राप्त एव "व्रीहीनवहन्ती"त्यादिनियमविधिप्रवृत्तेः। अतस्तत्परिहाराय तत्प्राप्तिफलकत्वपर्यन्तमवश्यं विवक्षणीयम्। तथा सति त्र्यनीकाभाजोराद्ययोरग्रताविध्योरव्याप्तिः।

तथा हि द्वादशाहे त्र्यनीकाऽऽम्नाता" "ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमञ्चाहः अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः; अथशुक्राग्रम्; अथाग्रयणाग्रम्" "अथैन्द्रवायवाग्रम्""अथ शुक्राग्रम्""अथाऽऽग्रयणाग्रम्""अथैन्द्रवायवाग्रम्' "अथ शुक्राग्रम्" "अथाग्रयणाग्रमिति"। अत्रेतरेषां नवानामह्नामग्रतास्त्र्यनीका इत्युच्यन्ते। त्रयाणामैन्द्रवायव-शुक्राग्रयणाग्रतारूपाणामनीकानां समाहार इति व्युत्पत्तेः; अत्र त्र्यनीकायामाद्येऽहनी रथन्तर-बृहत्सामनी। तथा च तयोरैन्द्रवायव-शुक्रा-

ग्रते प्रकृतितो ज्योतिष्टोमादेव प्राप्नुतः। ज्योतिष्टोमे "यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्; यदि बृहत्सामा शुक्राग्रानिति" रथन्तरसामत्वेन बृहत्सामत्वेन च निमित्तेन तयोरग्रतयोर्विहितत्वात्। एवमतिदेशप्राप्तयोरपि विधानमनैमित्तिकत्वार्थम्, तस्य प्रयोजनम्—तद्विकृतिष्वसत्यपि रथन्तर-बृहत्सामत्वे निमित्ते ऐन्द्रवायव—शुक्राग्रत्वप्राप्तिः। तद्यथा—गर्गत्रिरात्रे द्वितीयमहर्वामदेव्यपृष्ठम्; तत्र बृहत्सामत्वाभावेऽप्यनैमित्तिकी शुक्राग्रता द्वादशाहतोऽतिदेशात्प्राप्नोति। तदेतत्सर्वं "त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यादि" १०।५।२३।७७ ति दाशमिकाधिकरणे निरूपितम्। एवञ्च सत्यैन्द्रवायव-शुक्राग्रतारूपे विधेये प्रकृतविध्युद्देश्यं द्वादशाहिकमाद्यमहर्द्वयमप्राप्ते सति तत्र तत्प्राप्त्यर्थमैन्द्रवायव शुक्राग्रताविध्योः प्रवृत्तिर्न भवतीत्यनिवार्या तयोरव्याप्तिः।

तथा गवामयने आद्ययोरह्नोरैन्द्रवायवाग्रत्वविधी श्रूयेते। तयोरप्यव्याप्तिः। तथाहि-गवामयनेऽप्युक्तरूपा त्र्यनीका; सा चैकषष्ट्यधिकत्रिशतसुत्यात्मकस्य गवामयनस्य पूर्वस्मिन्पक्षस्यशीत्युत्तरशतसुत्यात्मके तदवान्तरप्रकरणबलादङ्गत्वेन निविशते। एकया च त्र्यनीकया पूर्वपक्षो न पूर्यत इत्यावर्तनीया सा। तदावृत्तिश्च द्वेधा सम्भवति-दण्डकलितवदावृत्तिः; स्वस्थानविवृद्धिश्च। यथा—क्षेत्रमाने कर्तव्ये क्वचित्कृत्स्नं मानदण्डं निवेश्य; तदनन्तरदेशेऽपि कृत्स्न एव मानदण्डो निवेश्यते; एवं प्रथममहरैन्द्रवायवाग्रम्; द्वितीयं शुक्राग्रमित्येवं प्रकारेण कृत्स्नां त्र्यनीकामनुष्ठाय; तथैव सा पुनः पुनरनुष्ठीयते चेत्पूर्वस्मिन्पक्षसि विंशतिवारं त्र्यनीकाया दण्डकलितवदावृत्तिर्भवति। अथ पूर्वं पक्षो नवधा विभज्य आद्ये विंशतिसुत्यात्मके भागे ऐन्द्रवायवाग्रता; द्वितीये भागे शुक्राग्रतेत्येवमेकवारमेव साऽनुष्ठीयते चेत्; तदन्तर्गता[1]नामग्रतानां स्वस्थान एव विवृद्धिः। यद्यैन्द्रवायवाग्रं प्रथममहरित्यादावहर्ग्रहणं विवक्षितम्; तदा दण्डकलितवदावृत्तिर्भवति; अहरपूर्वप्रयुक्ताश्च तत्तदाग्रता भवन्ति। तदविवक्षायां तु स्वस्थानविवृद्धिर्भवति; अहःसंघातरूपयज्ञभागगताश्चाग्रता अहर्धर्मत्वाभावाद्गावामयनिकपरमापूर्वप्रयुक्ता भवन्ति। एवं स्थिते दाशमिके "एकादशिनीवत् त्र्यनीकापरिवृत्तिस्स्यात्" १०।५।२५।८३ इत्यधिकरणेऽहःशब्दस्य श्रूयमाणत्वाद्दण्डकलितवदावृत्तिरिति पूर्वपक्षं कृत्वा; प्रथमभागस्योद्दिश्यमानस्याऽह्नः; अह्न उद्दिश्यमानस्य प्राथम्येन वा विशेषणायोगाद् ग्रहैकत्ववदेकत्वमविवक्षितं कृत्वा प्रथममहरिति चोद्देष्टव्यम्। तत्राऽहरुद्देशेऽह्नां धर्मा उपदिष्टाः स्युः इत्यथेति निर्देशानुपपत्तिः। अतः प्रथममैन्द्रवायवाग्रमथ शुक्राग्रमित्येतावदेव विवक्षितम्। अहःशब्दस्तु द्वादशाहिकत्र्यनीकायां प्रथमादिभागानां वस्तुगत्याऽहोरूपत्वादनुवादः। गावामयनिकत्र्यनीकायामहःसंघातपरोऽनुवादः। तस्मात्स्वस्थानविवृद्धिरिति सिद्धान्तितम्। एवञ्च त्र्यनीकाविधिबलादैन्द्रवायवाग्रायामह्नामाद्यायां विंशतौ तदन्तर्गतयोराद्ययोरह्नोः पुनरैन्द्रवायवाग्रत्वविधानं तत्तदहरपूर्वप्रयुक्तत्वसिद्ध्यर्थम्, तत्फलं तत्तद्विकारेष्वेकाहक्रतुषु रथन्तरसामत्वाभावेऽप्यैन्द्रवायवाग्रत्वप्राप्तिरिति प्रतिपादितं तन्त्ररत्ने। ततश्च तयोरप्यैन्द्रवायवाग्रत्वविध्योरनिवार्यैवाऽव्याप्तिः। न चऽत्रोदाहृतेषु विधिषु विधेयानामग्रतानामुद्देश्येषु द्वादशाहिक-

[1] मु० पु० तदन्तर्गतानां इत्येव पाठो दृश्यते।

गवामयनिकेष्वहःसु चोदक-त्र्यनीकोपदेशाभ्यां प्राप्तिसत्त्वेऽपि तदन्येषां केषां चिद-प्राप्त्या तेषु लक्षणं समर्थनीयमिति शङ्कितुं शक्यम्; तेषां विधीनां तत्प्राप्तिफलकत्वा-भावात्।

श्लोकोक्तस्यऽर्थस्य सङ्ग्रहेण निरूपणम्

अत्र विषयसप्तमीपक्षे विकल्पद्वयस्यापि दूषणम् "अव्याप्तिः प्राप्तियुक्तसि"त्या-दिना दर्शितम्। तत्राऽऽद्यविकल्पदूषणेऽग्निविधिशब्देन प्रकृति-विकृतिसाधारणमग्नेः क्रतुसंबन्धविधिमात्रं ग्राह्यम्। आदिशब्देन चाऽग्निहोत्र-प्राजापत्ययाग-विदेवनादिवि-धिर्ग्राह्यः। द्वितीयविकल्पदूषणेऽग्निविधिशब्देनऽग्नेर्विकृतिसंबन्धविधिर्ग्राह्यः। आदि-शब्देन त्र्यतिग्राह्यविधिः। सति सप्तमीपक्षे तत्प्राप्तिफलकत्वाविवक्षायां यद्दूषणम्; तत् पञ्चमश्लोके प्रदर्शयिष्यमाणत्वादिह न प्रदर्शितम्; तद्विवक्षायां यदव्याप्तिद्वयम्,'तत्-त्र्यनीकाभाजो"रित्यादिना दर्शितम्। तत्राऽऽद्याव्याप्त्युदाहरणे त्र्यनीकाभाजोर्द्वादशाहि-कत्र्यनीकान्तर्गतयोरैन्द्रवायवाग्रत्व-शुक्राग्रत्वविध्योरव्याप्तिरित्यर्थः। द्वितीयाव्याप्त्यु-दाहरणे यत्र गावामयनिकी त्र्यनीका तत्रैव स्वयं प्रवर्तमानतया त्र्यनीकाभाजोरैन्द्रवा-यवाग्रताविध्योरव्याप्तिरित्यर्थः ॥२॥

इति द्वितीयश्लोकव्याख्या।

---

तृतीयश्लोकस्याऽवतारिका

स्यादेतत्—सतिसप्तमीपक्षे प्रथमविकल्पे उद्भावितमिदमव्याप्तिद्वयं न प्रसज्यते। तथा हि—द्वादशाहत्र्यनीकान्तर्गतमग्रताद्वयं परमापूर्वसाधनत्वोपहितयोराद्ययोरह्नोर्वि-धीयते। न च तथाभूतयोस्तयोः प्रकृतितस्तदग्रताद्वयं प्राप्तम्; किन्त्ववान्तरापूर्व-साधनत्वोपहितयोरेव; द्वादशानां सोमयागानामेकफलावच्छिन्नानां सहानुष्ठानेऽपि प्रतिसोमयागं चोदकस्य पृथक् प्रवृत्तेः। तथा गावामयनिकयोराद्ययोरह्नोरवान्तरा-पूर्वसाधनत्वोपहितयोरैन्द्रवायवाग्रताद्वयं विधीयते। न च तथाभूतयोस्तत्प्राप्तम्; किन्तु परमापूर्वसाधनत्वोपहितयोरेव। इदञ्च तत्तदव्याप्त्युद्भावनस्थले स्पष्टीकृतम्। तथा चोद्देश्यतावच्छेदकरूपेणाऽप्राप्तिसत्त्वादुद्भाविताव्याप्त्योर्नाऽवकाश इत्याशङ्क्याऽऽह-

अप्राप्तिं प्राप्तिभाजामपि यदि परमावान्तरापूर्वकृत्व-
व्यावृत्तोद्देश्यधर्मैः सृजसि विघटयन्नेनमव्याप्तिदोषम्।
तस्मादादाय लक्ष्मक्षयकृति निहितं स्यादतिव्याप्तिवक्त्रे
व्रीह्युद्देशोऽपि हन्तौ नियमविधिपदे खल्वपूर्वावलीढः ॥३॥

यद्यव्याप्तिं परिहर्तुं प्राप्तानामप्यग्रतानामपूर्वविशेषसाधनत्वोपाधिभेदेन-अप्राप्तिं लक्षणार्थत्वेन[1] कल्पयसि, तदा केषां चिदेव प्रसिद्धानामपूर्वविधीनां संग्राहक-मिदं लक्षणमुक्तमिति [2]लक्ष्यसंकोचविवक्षया सुपरिहारादव्याप्तिदोषादादाय लक्षणहा-निकरस्य नियमविध्यतिव्याप्तिदोषव्याघ्रस्य वदने इदं लक्षणं त्वया निहितं स्यात्।

---

[1] मु० पु० कल्पयतीति पाठः। [2] मु० पु० लभ्येति पाठः।

"व्रीहीनवहन्ती"ति नियमविधावपि व्रीहीणामपूर्वसाधनत्वोपहितानामेवोद्देश्यतया उद्देश्यतावच्छेदकरूपेणाऽप्राप्तिसत्त्वात्। तत्र हि द्वितीयाश्रुत्या व्रीहीणामवघातसाध्यत्वं प्रतीयते,न च तेषां व्रीहित्वेन रूपेण तत्साध्यत्वमस्ति;प्रागेव सिद्धत्वात्। नाऽपि "व्रीहीनवहन्ती"ति लौकिकव्रीह्यवहननानुवादवाक्य इवाऽत्र तुषविमोकविशिष्टत्वेन रूपेण तत्साध्यत्वं द्वितीयार्थ इति वक्तुं शक्यम्। विदलनेनाऽपि सम्भवति तस्मिन्; अत्र विवक्षितस्याऽवघातनियमस्याऽनुपयोगात्। तस्मादपूर्वसाधनत्वाकारेणैव तेषां तत्साध्यत्वं वाच्यम्। न च यथा "अग्नीनादधीते"त्यत्राऽग्नीनां स्वरूपेणाऽऽधानसाध्यत्वम्, तथेहाऽपि स्यादिति वाच्यम्। तत्र "आहवनीये जुहोति" "गार्हपत्ये हवींषि श्रपयति" "दक्षिणाग्नावान्वाहार्यं पचती"ति वाक्यान्तरैर्होमादिषु विनियुक्तानां संस्कारविशेषविशिष्टाग्निरूपाणामाहवनीयादीनां साधनाकाङ्क्षायामाधानविधानात्; तेषां संस्कारविशेषावच्छिन्नत्वेन रूपेणाऽग्निपदोपात्तानामाधानसाध्यता युक्ता। न चेह व्रीहयः संस्कारविशिष्टाः क्रतौ विनियुक्ताः; येनाऽवहननवाक्येऽपि तेषां तद्विशिष्टतयोपादानात् तेन रूपेणाऽवहननसाध्यता युक्ता स्यात्। [1]"व्रीहिभिर्यजेते"ति जातिमात्रेण हि व्रीहयः क्रतौ विनियुक्ताः।

न चाऽत्र सक्तुन्यायेन विनियोगभङ्गः[2] कल्पयितव्यः; अपूर्वसाधनत्वलक्षणामात्रेण प्रधानद्वितीयाश्रुतिनिर्वाहे आकाङ्क्षितदृष्टफलत्वे, नियममात्रविषयतया विधिलाघवे च सम्भवति द्वितीयाश्रुतिबाधस्याऽनाकाङ्क्षितादृष्टफलकल्पनस्यात्यन्ताप्राप्तिप्रापकापूर्वविधिगौरवाभ्युपगमस्य[3] चाऽयुक्तत्वात्। न चैवमपूर्वसाधनत्वलक्षणायामाज्यसान्नाय्य-जुहू-स्रुवादीनामप्यवघातप्रसङ्गः। व्रीहीणां ह्यवगतमपूर्वसाधनत्वं लक्षणीयम्। तेषाञ्चाऽऽग्नेयाद्यपूर्वसाधनत्वं तण्डुलनिर्वृत्त्यादिद्वारकं "व्रीहिभिर्यजेते"त्यादिशास्त्रेणाऽवगतमिति तल्लक्षणायां यवसाधारण्यमात्रलाभेऽपि,काऽन्यत्राऽतिप्रसङ्गः; तथैवाऽवश्यलक्षणीयमवघातस्य दृष्टफलत्वनिर्वाहाय। तदेतत्सर्वं "तेषामर्थेन संबन्धः" ३।१।६। इति तार्तीयाधिकरणे,"द्रव्य-संख्या-हेतु-समुदायं वा श्रुतिसंयोगादि"९।१।५।११।। ति नावमिकाधिकरणे च स्पष्टमिति भावः ।।३।।

इति तृतीयश्लोकव्याख्या।

चतुर्थश्लोकस्याऽवतारिका।

एवं प्राप्तानामपि रूपभेदाश्रयणेनाऽप्राप्तिमपेक्ष्य लक्षणानुगमने व्रीहिपदलक्षिताकाराश्रयणेनाऽवघातनियमविधावतिव्याप्तिरुक्ता। इदानीं शक्याकाराश्रयणेन अन्यत्र नियमविधावतिव्याप्तिमुदाहरति—

**यूपः सर्वोऽप्यपूर्वः स्वयमपि विविधादृष्टसंस्कारयोगात्**
**तस्मिन् दैवेऽपि दृष्टं खदिरनियमनं तत्र का प्राप्तिवार्ता[4]।**

---

[1] मु० पु० यजेतेति नास्ति। [2] सक्तून्, जुहोतीत्यत्र यथा सक्तुभिर्होमं कुर्यादिति।
[3] अपूर्वविधित्वाभ्युपगमस्येति २ पु० पा०। [4] व्याप्तीति मु० पु० पा०।

तस्मात्तत्स्वरूपे परमनवगतं रूपभेदं विहाय
प्राप्त्यप्राप्ती विचार्ये कथमपि तदिहाऽव्याप्तिदोषान्न मुक्तिः ॥४॥

यूपः प्राकृतो वैकृतः सर्वोऽपि तावदाहवनीयादिवदलौकिकः; प्रोक्षणजन्यादृष्ट-छेदन-तक्षणाष्टाश्रीकरणादिजन्यनियमादृष्टरूपानेकादृष्टसंस्कारविशिष्टस्यैव यूपशब्दार्थत्वात्। तत्र प्रकृतिद्रव्यनियमविधिः श्रूयते "खादिरो यूपो भवती"ति। तत्राऽलौकिकयूपत्वावच्छेदेन खादिरप्राप्त्यभावादपूर्वविधिलक्षणस्य तत्राऽव्यतिव्याप्तिः स्यात्।

आधानदृष्टान्तेन खादिरविधेरपूर्वविधित्वशङ्का।

नन्वाहवनीयाद्युद्देशेनाऽऽधानविधिवद्यूपोद्देशेन खादिरविधिरपूर्वविधिरस्तु; यूपाहवनीययोरलौकिकत्वाविशेषात्। खादिरादिविधेर्नियमविधित्वप्रसिद्धिस्तु वैकृतविधिविषया स्यात्। विकृतावपि हि तत्र तत्र श्रूयते "खादिरो यूपो भवती"ति। तस्य प्रकृतौ विकल्पितानां खदिर-पलाशादीनां विकृतावपि तथैव चोदकतः प्राप्तौ खदिर एव तत्र ग्राह्य इति नियमविधित्वमुपपद्यत इति चेत्।

दृष्टान्त-दार्ष्टान्तिकयोः वैषम्येन शङ्कानिरासः।

उच्यते–दैक्षे "दीक्षासु यूपं छिनत्ती"ति दीक्षाकालकर्त्तव्यछेदने प्राकृतयूपे खादिरविधिरपि नियमविधिरेव। तदभावे[1] तक्षणादिवाक्यपर्यालोचनया दारुमयत्वेनाऽवगतस्य यूपस्य प्रकृत्याकाङ्क्षायामनियतानेकद्रव्याक्षेपस्याऽनिवार्यत्वात्। तक्षणाष्टाश्रीकरणादिविशिष्टे यूपस्य दृष्टरूपे खदिरादीनां प्रकृतित्वयोग्यताया लोकतोऽवधारितत्वात्। आधानं त्वाहवनीयादीनां दृष्टे ज्वलनाकारे न निष्पादकम्; किन्तु तन्निष्ठापूर्वसंस्कारमात्र इति; युक्तं तद्विधेः प्रोक्षणादिविधेरिवाऽपूर्वविधित्वम्। तस्मात्प्राकृतखादिरादिनियमविध्यतिव्याप्तिरप्यनिवार्यैव।

यूप इत्यादिश्लोके सति सप्तमीपक्षे प्रथमविकल्प उक्तदूषणस्य संग्रहः।

एवञ्चोद्देश्यगतविवक्षितरूपभेदाश्रयणेनाऽप्राप्तिसमर्थनस्याऽतिव्याप्तिदुष्टत्वात्तत्परिहाराय यथावार्त्तिकं तत्तद्विध्यभावे विधेयत्वाभिमतस्य प्राप्त्यप्राप्तिविवेचनेनैव नियमापूर्वविधिव्यवस्थोपपादनीया। तथा सति द्वादशाहे त्र्यनीकाविध्यभावेऽपि आद्ययोरह्नोश्चोदकादैन्द्रवायव-शुक्राग्रते प्राप्नुतः। गवामयने चाऽऽद्ययोरह्नोः प्रातिस्विकविध्यभावेऽपि स्वस्थानविवृद्धिमत्त्र्यनीकाविधिबलादैन्द्रवायवाग्रते प्राप्नुत इति; उदाहृताग्रताविधिचतुष्टयाव्याप्त्या सतिसप्तमीपक्षे प्रथमविकल्पो दुष्ट एवेत्यर्थः ॥४॥

इति चतुर्थश्लोकव्याख्या।

---

[1] "खादिरो यूपो भवती"ति विध्यभावे।

अथ पञ्चमश्लोकस्याऽवतारिका ।

अस्मिन्नेव विकल्पे स्थलान्तरेऽप्यव्याप्तिं रूपभेदविवक्षया निरसितुमशक्या-मुदाहरति—

अव्याप्तिः पौर्णमास्यामपि यजनविधावत्र कल्पे प्रसर्पेत्
प्राप्तोद्देश्यस्य तेन ह्यधिगतफलतोपांशुयाजस्य लभ्या ।
स्यात्किञ्चैषाऽऽपराग्न्योहुतिषु फलसमायोजनार्थप्रवृत्तेः
निष्प्रत्यूहाग्निहोत्राहुतियुगलमिताधारसंकीर्तनेऽपि ॥५॥

दर्शपूर्णमासप्रकरणे श्रूयते "तावब्रूतावग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्नि"ति। अत्र वाक्ये कीर्तितानां याग-तदपेक्षिताग्नीषोमदेवताऽऽज्यद्रव्योपांशुत्वगुण-पौर्णमासीकालानां मध्ये कालव्यतिरिक्तानां तत्तद्विध्यनुगुणशब्दाभावादन्यतः सम्भवत्प्राप्तिकानां तेषां पुनःश्रवणस्य निष्फलत्वाच्च कालस्यैव विधिः। न ह्यग्नीषोमवक्तृकवाक्यगतस्य यजन्नित्यस्य यागविधौ; षष्ठी-चतुर्थीसाधारणस्य नावित्यस्य देवताविधौ; आज्यस्येति षष्ठ्यन्तस्य द्रव्यविधौ द्रागेवाऽऽनुगुण्यमवगम्यते। सम्भवति "चोपांशुयाजमन्तरा यजती"ति स्पष्टविधिना यागस्य; यष्टव्यदेवताप्रकाशनैकप्रयोजनकेनाऽग्नीषोमीययाज्यानुवाक्यायुगलेन देवतायाः "सर्वस्मै वा एतद्यज्ञाय गृह्यत" इत्यादिना द्रव्यापेक्षायां सर्वयागार्थताविधायकतया क्लृप्तेन ध्रौवाज्यविनियोजकवचनेन द्रव्यस्य प्राप्तिः। उपांशुत्वस्याऽपि[1] यागोत्पत्तिवाक्यत एव प्राप्तिः सम्भवति। अतोऽत्र पुराकल्पसरूपार्थवादेन कल्प्यः कालस्यैव विधिः, तदनुगुणसप्तमीविभक्तिश्रवणात् तद्विधानस्य फलत्वाच्च। तथाहि—यद्यपि तद्विधानमुपांशुयाजस्य पौर्णमासीकालसिद्ध्यर्थं न भवति तस्य "उपांशुयाजमन्तरा यजती"त्युत्पत्तिवाक्येनैव पौर्णमासीकर्त्तव्याऽऽग्नेयाग्नीषोमीययागद्वयान्तराले उपांशुयाजं विदधानेनाऽर्थतः सिद्धत्वात्; तथाप्युपांशुयाजस्य "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यधिकारवाक्योद्देश्यफलसम्बन्धसिद्ध्यर्थं भवेदेव। एतदभावे विद्वद्वाक्यस्थेन, अधिकारवाक्यस्थेन च दर्शपूर्णमासपदेन "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाऽच्युतो भवति" "अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदि"त्युत्पत्तिवाक्येनाऽवगतपौर्णमासीकालयोराग्नेयाग्नीषोमीययागयोरेव झटिति प्रवृत्तिनिमित्तावगत्या प्रथमगृहीतयोः फलसम्बन्धकरणादर्थावगम्यपौर्णमासीसम्बन्धस्योपांशुयाजस्य विलम्बितप्रवृत्तिनिमित्तप्रतीतिकतया विद्वद्वाक्याधिकारवाक्यगतपौर्णमासीपदागृहीतस्य फलसम्बन्धो न सिद्ध्येत्-इति।

भवदेवमतानुवादः।

यत्त-भवदेवेनाऽस्य विधेः प्रयोजनमुक्तम्; यद्यन्तरालविध्यर्थलभ्य एवोपांशुयाजे पौर्णमासीकालः स्यात्; तदानी "माग्नेयो वै ब्राह्मणो देवतया,स सोमेनेष्ट्वाऽग्नीषोमीयो भवती"ति श्रुतेः असोमयाजिनोऽग्नीषोमीयपुरोडाशाभावेन तदीयायामेकपुरोडाशायां पौर्णमास्यां पुरोडाशद्वयान्तरालाभावादुपांशयाजो न प्राप्नुयात्, प्रातिस्विककाल-

[1] उपांशुयाजमन्तरा यजतीति वाक्यतः।

विधिसद्भावे त्वन्तरालमनपेक्ष्यैव पौर्णमास्युपांशुयाजाङ्गमिति सिद्धेस्तदनुसारेणान्तरालश्रवणमाग्नेयोत्तरकालमात्रोपलक्षणं भवेदिति; एकपुरोडाशायामप्युपांशुयाजः प्राप्नोति। अतस्तस्यामुपांशुयाजप्राप्त्यर्थः पौर्णमासीविधिः—इति।

तन्निरासः।

तदसारम्। उपलक्षणापायेऽप्युपलक्ष्यानपायन्यायादेवैकपुरोडाशायामपि तत्प्राप्तिसम्भवेन तदर्थं विध्यन्तरानपेक्षणात्। उपलक्षणं हि पुरोडाशद्वयमुपांशुयाजाङ्गभूतस्य कालस्य; न तु स्वयमुपांशुयाजाङ्गम्; येन तदभावे तद्वैगुण्यं स्यात्। न च तदभावे अन्तरालस्याऽङ्गस्याऽलाभाद्वैगुण्यम्। उपलक्षणापायेऽप्युपलक्ष्यानपायस्य "प्रतिदिनं शङ्खवेलायामागन्तव्यमि"त्यादौ प्रसिद्धत्वात्। न हि कालविशेषोपलक्षणतयोपात्ते शङ्खध्वनौ क्वचिद्दिवसे दैवादकृते सति तदुपलक्षितः कालो नाऽस्तीति नाऽवगम्यते।

ननु "द्विपुरोडाशायां स्यादन्तरार्थत्वादि"ति १०।८।१९-६२॥ दशमान्त्याधिकरणेऽन्तरालश्रुतिबलाद्द्विपुरोडाशायामेवोपांशुयाज इति पूर्वपक्षे प्राप्ते "उभयोस्तु विधानादि"ति १०।८।१९-६७ सिद्धान्तसूत्रेणो"पांशु पौर्णमास्यां यजन्निति" पौर्णमासीविधानमेव हेतूकृत्य द्विपुरोडाशायामेकपुरोडाशायाञ्चोपांशुयाजः समर्थितः। सत्यम्। उत्पत्तिशिष्टान्तरालकालवैगुण्ये सति हेतुरसाधक इत्यस्वारस्यादेव तदनन्तरम् "अनपायो हि कालस्य लक्षणं हि पुरोडाशावि"ति १०।८।१९-६९। सूत्रान्तरेण तथैव पूर्वहेतुस्वारस्यं वर्णयता तद्भाष्येण च लक्ष्यानपायन्यायमेव हेतूकृत्य कालवैगुण्याभावः समर्थितः। तन्यायापेक्षणे च तत एवैकपुरोडाशायामप्युपांशुयाजप्राप्तिर्भवतीति; न सा पौर्णमासीविधानमपेक्षते। अवश्यं चोपलक्ष्यानपायन्यायमात्राद्विध्यन्तरमनपेक्ष्यैवोपलक्षणराहित्येऽपि प्राप्तिर्भवतीति त्वयाऽपि स्वीकरणीयम्। अन्यथा पौर्णमासीविधिबलादेकपुरोडाशायां प्राप्नुवन्नप्युपांशुयाजोऽग्नीषोमदैवत्य एव प्राप्नुयात्; विष्णुदैवत्यः; प्रजापतिदैवत्यश्च न प्राप्नुयात्; पौर्णमासीविधौ "तावन्नूतावग्नीषोमावि"तिश्रवणात्। एकपुरोडाशायामुपांशुयाजसामान्यप्रापकविध्यन्तराभावाच्च। तस्मात्त्वयाऽग्नीषोमयोरुपलक्षणत्वाद्देवतान्तरवतोऽप्युपांशुयाजस्याऽग्नीषोमोपलक्षितयागत्वानपायादेवैकपुरोडाशायां प्राप्तिः समर्थनीयेति; तत एव लक्ष्यानपायन्याया"दुपांशुयाजमन्तरा यजती"ति विधिनाऽपेक्षितादेकपुरोडाशायामपि तत्प्राप्तिः सिद्ध्यतीति न पौर्णमासीविधेः प्रयोजनमिति, प्रागुक्तैवोपांशुयाजस्य फलसिद्धिः प्रयोजनम्।

वार्त्तिकावष्टम्भेनोक्तार्थस्य समर्थनम्।

तदेव प्रयोजनमुपांशुयाजाधिकरणे"प्रायवचनाच्चेति" २।२।३११। सूत्रेण; तद्वार्त्तिकेन च स्पष्टीकृतम्। तत्र ह्यधिकरणे "विष्णुरुपांशु यष्टव्योऽजामित्वाय" "अग्नीषोमावुपांशु यष्टव्यावजामित्वाय" "प्रजापतिरुपांशु यष्टव्योऽजामित्वायेति" त्रयाणां यागानां विधयः। अन्तरावाक्यं तु तत्समुदायानुवादो विद्वद्वाक्यवदिति पूर्वपक्षनिराकरणार्थं सूत्रं[1] "प्रायवचनादि"ति। "शिरो वा एतद्यज्ञस्य यदाग्नेयः; हृदयमुपांशुयाजः; पादावग्नीषोमीय" इत्युपांशुयाजस्य प्रधानप्रायपाठात्प्राधान्यावगतेर्विष्ण्वादि-

---

[1] गुणसूत्रमिति २ प० पा०

वाक्यैस्त्रयाणां यागानामुपांशुयाजशब्दपरामृष्टानां विधावुपांशुयाजमात्रप्राधान्यावगतिबाधप्रसङ्गादन्तरावाक्यविधेय एक एवोपांशुयाजः; तदर्थवादा विष्णवादिवाक्यानीति सूत्रस्याऽस्य भाष्ये तात्पर्यमुक्तम्।

कथं यागत्रयविधिपक्षे तत्प्राधान्यबाधः स्यादित्याशङ्क्योपपादितं वार्त्तिके। विष्णु-प्रजापत्यग्नीषोमदेवत्ययागत्रयविधिपक्षे "तावब्रूतावग्नीषोमावि"त्यादिनाऽग्नीषोमदैवत्यस्यैव यागस्य पौर्णमासीविधिरिति स्यात्। तथा च तस्यैव विद्वद्वाक्य-फलवाक्यस्थपौर्णमासीपदगृहीतस्य फलसंबन्धेन प्राधान्यं सिद्ध्येत्, न तु तदगृहीतयोर्विष्णु-प्रजापतिदेवत्ययागयोः। अन्तरावाक्येनैकस्यैव यागस्य विधिः, तत्रैव शाखाभेदेन आम्नातैर्याज्यानुवाक्यायुगलैः प्रापिता विष्णवादिदेवता विकल्प्यन्त इति, सिद्धान्तपक्षे तु विष्णु-प्रजापतिदेवत्यस्याऽप्येकत्वेनाऽग्नीषोमोपलक्षिततत्वानपायादुपांशुयाजसामान्यस्य पौर्णमासीकालसंबन्धलाभेन सिद्ध्यति प्राधान्यम्-इति; अनेन पौर्णमासीविधिनैव लभ्यः फलसंबन्धः; नाऽन्तरालविधिलभ्य इत्याशयः स्पष्ट एव। अन्यथा विष्णु-प्रजापतिदेवत्ययोराहत्य पौर्णमासीविध्यभावेऽप्यन्तरालकालतयाऽर्थप्राप्तपौर्णमासीसंबन्धेनैव फलविधिगृहीतयोः प्राधान्यं सिद्ध्येदिति; तत्प्राधान्यावगतिबाधप्रसङ्गदूषणमसमञ्जसं स्यात्।

नन्वन्तरावाक्यं यागत्रयसमुदायानुवादकमिति पूर्वपक्षेऽन्तराले यागविधायकं किञ्चिद्वाक्यं नास्तीति विष्णु-प्रजापतिदेवत्ययोः फलसंबन्धार्थं पौर्णमासीविधिरेव शरणीकरणीयः। अतो यागभेदे तस्याग्नीषोमीयमात्रविषयत्वेन तयोः फलसंबन्धो न सिद्ध्येदिति तद्दूषणसामञ्जस्यमिति चेत्। न। अन्तरावाक्यमनुवाद इति पक्षेऽपि[1] दोषपरिहारार्थमन्तराश्रुतेरनालम्बनत्वपरिहारार्थञ्च त्रिष्वपि यागेष्वन्तरालप्राप्तेरवश्यवक्तव्यत्वात्। भवदेवेनैवोपांशुयाजाधिकरणपूर्वपक्षे कथमन्तरावाक्यस्य सर्वात्मनानुवादकत्वमन्तरालस्यैवाऽप्राप्तस्य विधेयत्वादित्याशङ्क्य; जामितादोषोपक्रमेण विष्णवादिवाक्येषु प्रत्येकमजामित्वानुवादेन च तेष्वन्तरालप्राप्तिरुक्ता। भवति चाऽनुवादतोऽपि स्थाननियमः। यथा—"न गिरागिरेति ब्रूयादि"ति गिरापदनिषेधानुवादबलादिरापदस्य गिरापदस्थाननिवेशित्वमिति, सदृष्टान्तमुपपादितत्वात्।

केषाञ्चिन्मतेन शङ्का।

केचित्तु—विष्णवादिवाक्यानि यागविधय इति पक्षे तत्प्राधान्यबाधमन्यथा समर्थयन्ते। विष्णवादिवाक्येषु तव्यप्रत्ययात्प्रथमं गुणकर्मत्वधीर्भवति। कर्मान्तरानुपयोगानुसंधानेन तु प्रधानकर्मताऽवगन्तव्या। अतः शीघ्रावगतप्रधानकर्मणामेवाधिकारानुप्रवेशादुपांशुयाजस्य तदननुप्रवेशेन प्राधान्यावगतिर्विहन्येत। अन्तरावाक्यं यागविधिरिति पक्षे तु तत्र तव्यप्रत्ययाभावेन गुणकर्मत्वधीकृतविलम्बाप्रसक्तेराग्नेयादिवदेवाऽधिकारानुप्रवेशात्प्राधान्यावगतिर्न विहन्यते - इति।

---

[1] जामितादोषपरिहारार्थमित्यर्थः। तथा च जामितादोषोपक्रमोपसंहाराभ्यामेवान्तरालप्राप्त्या तद्द्वारा पौर्णमासीविधिः शरणीकरणीय इति भावः। एवं च लक्ष्यानपायन्यायं प्रागुक्तमवलम्ब्य प्राधान्यावगतिबाधप्रसङ्गदूषणं वार्तिकोक्तं समञ्जसमिति द्रष्टव्यम्। अप्राप्तार्थकवाक्यस्यानुवादत्वानुपपत्तिरूपो दोष इत्यन्ये।

तन्निरासः ।

तेषामप्यधिकारानुप्रवेशोपयोग्यर्थप्रतीतिशैघ्र्य—मान्द्यकृततदनुप्रवेशाननुप्रवेश न्यायस्य संमतत्वादुपांशुयाजस्याऽऽहत्य पौर्णमासीविध्यभावे तु श्रुतपौर्णमासी-कालयोराग्नेयाग्नीषोमीययोरेवाऽधिकारानुप्रवेशः स्यादित्युपांशुयाजस्य तदनुप्रवेशला-भफलक एव पौर्णमासीविधिः सिद्ध्यति । स्यादेतत्—यदि पौर्णमासीसंबन्ध-प्रतीतिशैघ्र्य—मान्द्याभ्यामधिकारानुप्रवेशाननुप्रवेशौ स्याताम्; तदोपांशुयाजस्योत्प-त्तिवाक्यप्रवृत्तिसापेक्षेण वाक्यान्तरेण पौर्णमासीसंबन्धलाभेऽप्युत्पत्तिवाक्यावगतपौर्ण-मासीसंबन्धयोराग्नेयाग्नीषोमीययोरेव तदनुप्रवेशः स्यादिति स दोषस्तदवस्थः। न च वाच्यमनन्यप्रयोजनः पौर्णमासीविधिर्विलम्बितोऽपि तस्याऽधिकारसम्बन्धमापा-दयिष्यति; अन्यथा तद्वैयर्थ्यप्रसङ्गात् । एकपुरोडाशायामुपांशुयाजप्राप्तेर्लक्ष्यानपाय-न्यायलभ्यतयैतद्विधिप्रयोजनत्वाभावात्—इति ।

अमावास्यायामुपांशुयाजव्यावर्तनेनापि पौर्णमासीविधेश्चारिताथ्यात् । उपांशु-याजोत्पत्तिवाक्यपर्यालोचनया ह्यमावास्यायामपि स प्राप्नोति। यथा पौर्णमास्यामा-ग्नेयाग्नीषोमीयौ पुरोडाशौ; तथाऽमावास्यायामाग्नेयैन्द्राग्नौ स्त इति; पुरोडाशद्वया-न्तरालस्य द्वयोरपि सत्त्वात् ; अमावास्यायां सोमयाजिन ऐन्द्राग्नाभावेनेव पौर्णमा-स्यामसोमयाजिनोऽग्नीषोमीयाभावेन पुरोडाशद्वयासार्वत्रिकत्वस्य तयोरविशिष्टत्वात्। तस्मात्पौर्णमासीविधिरमावास्याव्यावर्तनेन चरितार्थः स्यादेव ।

अत एव दशमे"अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगान्मन्त्रो यथा प्रधानं स्यादि"ति सूत्रेण १०।८।१८-५४ प्रधानस्योपांशुयाज"स्योपांशु पौर्णमास्यां यजन्नि"ति-शब्देन पौर्णमासीकालसंयोजनात् पौर्णमास्यामेवोपांशुयाजः कार्य इति पौर्णमासी-विधिबलादेवाऽमावास्याव्यावर्तनं कृतमिति[1] चेत्। उच्यते—"उपांशुयाजमन्तरा यज-ती"त्युत्पत्तिवाक्यं पौर्णमासीरूप एवान्तरालकाले उपांशुयाजं विदधाति। "उपांशु-पौर्णमास्यां यजन्नि"ति प्रकृत्य"जामि वा एतदित्याम्नानादि"ति दशमान्त्याधिकरणे भाष्य—टुप्टीकयोरुक्तम् । अत उपांशुयाजस्योत्पत्तिवाक्यावगतपौर्णमासीकालत्वा-विशेषान्न कश्चिदधिकारानुप्रवेशेऽन्तरायः[2] ।

एवञ्च यद्यप्यत्र पौर्णमासीविधिरमावास्याव्यावर्त्तनेन परिसंख्यारूपः; तथापि तदनन्तराम्नातोत्पत्तिवाक्यश्रुतमन्तरालकालं पौर्णमासीरूपतां नयन्नुपांशुयाजस्य फल-संबन्धार्थोऽपि भवतीत्यपूर्वविधिरूपताऽप्यस्याऽवश्यं भाविनी । ततश्चत्रानुपादेय-त्वेनोद्देश्ये पौर्णमासीकाले विधेयस्य यागस्य प्राप्तिः; एतदभावेऽप्युत्पत्तिवाक्यपर्यालो-चनयाऽर्थाल्लभ्यत इति तस्याः फलत्वाभावात्तां[3] विहाय विधेयस्य[4] अनुद्देश्याधिकार-वाक्योपात्तस्वर्गप्राप्तिफलत्वेनोपाददानेऽस्मिन्विधौ रूपभेदविवक्षायामप्यव्याप्तिरनि-

---

[1] तस्मात्परिसंख्याविधिरिति नोक्ताव्याप्तिरिति भावः ।

[2] फलसंबन्धं न विघ्न इति २ पु० पा० ।

[3] पौर्णमासीप्राप्तिम् ।

[4] उपांशुयागस्य ।

वार्या। न ह्यत्र पौर्णमासीत्वोपहिते[1] उपांशुयाजस्याऽप्राप्तिरस्ति; अन्तरालविधिसामर्थ्येन तत्प्राप्तिसम्भवात्; नवा तदन्येन केनचित् रूपेणोपहिते तत्र तस्याऽप्राप्तिमुपपाद्य तत्प्रापणार्थमिदं वचनमिति कल्पने किञ्चित्प्रयोजनमस्ति। पौर्णमासीत्वोपहित एव तद्विधानस्य फलसंबन्धसिद्ध्या प्रयोजनवत्त्वात्। तस्मात् रूपभेदविवक्षायामप्युक्तविधावव्याप्तिः स्यादेव।

द्वे आवहनीये जुहोतीत्यत्राऽव्याप्त्युद्भावनम्।

अपि च "द्वे आहवनीये, चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचने, दश संपद्यन्ते दशाक्षरा विराट् य एवं विद्वान्विराट्संपन्नमग्निहोत्रं जुहोती"त्यत्र द्वे आहवनीये इत्यस्मिन्द्वयोरग्निहोत्राहुत्यो"र्यदाहवनीये जुहोती"ति सामान्यशास्त्रप्रमिताहवनीयरूपाधारसङ्कीर्तनेऽप्यव्याप्तिः। इदं हि नाऽहवनीयस्याऽऽहुतिद्वयसम्बन्धप्राप्त्यर्थम्; सामान्यशास्त्रेण[2] प्राप्तत्वात्। नाऽपि तदन्यस्य यस्य कस्य चित्संबन्धप्राप्त्यर्थम्; अनेन कस्यापि तत्संबन्धप्राप्त्यलाभात्। नापि विराट्संपत्तिवाक्यानुसारेण दशसंख्यानामग्निहोत्राहुतीनां मध्ये द्वे एवाऽऽहवनीये; न त्वष्टावितरा इति परिसंख्यार्थम्; अष्टानां गार्हपत्यान्वाहार्यपचनरूपाधिकरणान्तरविधानादेवाहवनीयव्यावृत्तिसिद्धेः। किन्तु तासामष्टानामाहुतीनामाहुतिद्वयव"दग्निहोत्रं जुहुयात्स्वर्गकाम" इत्यधिकारवाक्यवोध्यफलसंबन्धप्राप्त्यर्थम्। तथा हि "द्वे–आहवनीय" इत्येतदभावे "चतस्रो गार्हपत्ये; चतस्रोऽन्वाहार्यपचने" इति वाक्ये संख्याधिकरणविशिष्टकर्मविधायके स्याताम्; न त्व"ग्निहोत्रं जुहोती"त्युत्पत्तिवाक्यविहितकर्मानुवादेन गुणविधायके; प्राप्ते कर्मणि संख्याधिकरणरूपानेकगुणविधाने वाक्यभेदापत्तेः।

न च यथा "यदग्नये च प्रजापतये च सायं जुहोति" "यत्सूर्याय च प्रजापतये च प्रातरि"ति वाक्ययोः कालदेवतारूपानेकगुणश्रवणेऽप्यग्निहोत्रवाक्योत्पन्नहोमानुवादेन गुणमात्रविधानमिति; तस्यैकस्यैव होमस्य सायं प्रातःकालयोरग्नि-प्रजापतिरूपदेवताभेदेन द्विर्द्विरभ्यास इत्यभ्युपगम्यते; एवमिहाऽप्यनेकगुणश्रवणेऽपि तस्मिन् होमे गुणमात्रविधानमिति तस्यैवाऽधिकरणभेदेन चतुश्चतुरभ्यासोऽप्यभ्युपगम्यतामिति वाच्यम्। "सायं जुहोति" "प्रातर्जुहोती" ति विधिभ्यां सायं-प्रातःकालयो"रग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" "सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहे"ति तत्तत्कालाग्निहोत्रमन्त्राभ्यामग्नि-सूर्ययोश्च प्राप्तत्वेन "यदग्नये" "यत्सूर्यायेति" वाक्ययोः कालद्वयेऽपि प्रजापतिमात्रविधिसंक्रान्ततया तयोर्गुणमात्रविधानेऽपि वाक्यभेदप्रसङ्गात्। इह संख्याधिकरणयोर्द्वयोरप्यनन्यलभ्यत्वेन गुणमात्रविधाने वाक्यभेदानिवारणात्। एवञ्च गार्हपत्यान्वाहार्यपचनवाक्ययोः संख्याधिकरणविशिष्टहोमविध्यवश्यंभावेऽष्टावपि होमा अग्निहोत्रवाक्यविधेयात्सायं-प्रातःकालयोर्देवताभेदेन द्विर्द्विरभ्यसनीयाद्धोमादन्य एव स्युः; विहितस्य विधानायोदादिति न तेषामग्निहोत्रमिति नाम सिद्ध्यति; किन्त्वग्निहोत्रवाक्यविधेयस्यैकस्यैव होमस्य तन्नामेति

[1] पौर्णमासीत्वावच्छिन्ने तु प्राप्तिर्नास्ति।

[2] यदाहनीये जुहोतीत्यनेन

प्राप्नोति तदुत्पत्तिवाक्यगतत्वात्। अग्निहोत्रवाक्यविहितस्य साभ्यासस्य होमस्य गार्हपत्यान्वाहार्यपचनवाक्यविहितानां होमानामनुवादके विराट्सम्पत्तिवाक्ये तावत्साधारण्येनाऽग्निहोत्रशब्दप्रयोगसत्त्वेऽपि तस्य छत्रिन्यायेन लक्षणयोपपत्तेः। अग्निहोत्रवाक्यविहिते कर्मणि प्रथमावगते शक्तयवश्यम्भावेन तत्सम्बन्धादितरेषु लक्षणोपपत्तावनेकत्र शक्तिकल्पनस्याऽन्याय्यत्वात्।

अत एव "रथन्तरं पृष्ठं भवति""बृहत्पृष्ठं भवती"त्युत्पत्तिवाक्ययोर्माहेन्द्रस्तोत्रनामत्वेन प्रथमावगतपृष्ठशब्दस्य सप्तदशानि पृष्ठानीत्यनुवादवाक्ये माहेन्द्रादि चतुर्षु स्तोत्रेषु प्रयोगो लाक्षणिक इति "प्रकृतौ पृष्ठबहुत्वं नास्ती"ति प्रपञ्चितं सप्तमे-"विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्द" ७। ३। ३। ६। इत्यधिकरणे। एवञ्चाधिकारवाक्यस्थेनाग्निहोत्रनाम्नाऽग्निहोत्रवाक्यविहितस्यैव होमस्य ग्रहणा[1]त्तस्यैव फलसम्बन्धः स्यात; न तु चतस्र इत्यादिवाक्यविहितानामष्टानां होमानाम्। द्वे आहवनीये इति वाक्यसत्त्वे तु विराट्सम्पत्तिवाक्यानुसारेण दशधाऽभ्यसनीयस्याऽग्निहोत्रहोमस्य दशानामभ्यासानां मध्ये द्वे आहवनीये इत्यनेन परिसंख्यातानामष्टानामपेक्षितमधिकरणमेवं चतस्र इत्यादिवाक्याभ्यां विधीयते। तयोश्चतुःसंख्याश्रवणन्तु "समं स्यादश्रुतत्वात्" १०-३-१३-५३ इति न्यायप्राप्तानुवादकमिति लभ्यते। एवमग्निहोत्रवाक्यविहितस्यैव होमस्य देवताभेदेनाऽधिकरणभेदेन च सायं प्रातश्च दश दशाऽभ्यासाः; न तद्व्यतिरेकेण होमान्तराणि सन्तीति पर्यवसानेऽधिकारवाक्यगतमग्निहोत्रनाम सर्वविधाभ्याससहितस्याऽग्निहोत्रस्य समर्पकमिति सर्वसाधारण्येन फलसम्बन्धः प्राप्नोति। यथा "सोमेन यजेते"ति वाक्योत्पन्नस्यैन्द्रवायवादिदेवताभेदेनाऽभ्यसनीयस्य सोमयागस्य ज्योतिष्टोमपदं नामेति, सर्वाभ्याससहितस्य सोमयागस्याऽधिकारवाक्येन[2] फलसम्बन्धः।

न च"द्वे आवहनीय"इति वाक्याभावेऽपि विराट्सम्पत्तिवाक्यमग्निहोत्रहोमस्य दशधाऽभ्यासविधायकमभ्युपगम्यताम्, तथा सति तत्र त्वदुक्तरीत्याऽष्टानामभ्यासानामधिकरणमात्रविधायकयोर्गार्हपत्यान्वाहार्यपचनवाक्ययोः संख्याश्रवणं न्यायप्राप्तानुवादकं भविष्यतीत्यापराग्निकहोमानामग्निहोत्रहोमाभ्यासरूपत्वेन फलसम्बन्धः सिध्येदिति वाच्यम्। यदि ह्याहवनीयवाक्यं न स्यात्; तदा गार्हपत्यान्वाहार्यपचनवाक्ययोस्तदधिकरणविधायकत्वे दशानामपि तदभ्यासानामधिकरणविधायकत्वापत्त्या चतुःसंख्यानुवादासंभवेन तयोः संख्याधिकरणविशिष्टकर्मान्तरविधायकत्वस्याऽवश्यंभावितया विराट्संपत्तिवाक्यमग्निहोत्रानग्निहोत्रहोमानां प्रचयशिष्टसंख्यानुवादकमित्यकामेनाऽपि स्वीकरणीयम्। तस्मादाहवनीयवाक्यप्रवृत्त्यधीन एवाऽऽपराग्निकहोमानां फलसंबन्धः। एवञ्चाऽस्मिन्द्वे आहवनीय इति विधौ अविधेयानामापराग्निकहोमाभ्यासानां तदनुद्देश्यस्वर्गसंबन्धप्रापणमेव फलमिति; अयं विधिरुद्देश्ये विधेयस्य नित्यप्राप्तत्वात्; तस्याऽन्यत्र, तत्राऽन्यस्य वा प्राप्यस्य; नियम्यस्य; निवर्त्यस्य वाऽभावाच्च केवलं परफलसंबन्धबोधनार्थः।

---

[1] समर्पणादिति २ पु० पा०। [2] ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यनेन।

अत्रायं संग्रहः —"द्वे आहवनीय" इति श्रुतो विधिर्ह्यग्निहोत्रमधिकृत्य परसंबन्धविधानं विनाऽस्य न स्यात्फलं किञ्चित्।

प्राप्तं तत्प्रापणीयं किल यदिह क्रियान्पूरणीयोऽस्ति नांशः
नाऽनिष्टं वा निवर्त्यं निजविषयतया दृश्यते किंचिदस्य ।
किन्तु व्यापारमेव प्रथयति फलसंयोजनार्थं परेषाम्
प्राप्तः पुण्यैरगण्यैरिव विबुधगणो वेंकटक्षोणिपालम् ॥

तस्मादस्मिन्नपि विधावव्याप्तिरनिवार्येति भावः ॥ ५ ॥

इति पञ्चमश्लोकव्याख्या ।

---

अथ षष्ठश्लोकस्यावतरणम् ।

अथाऽन्यत्राऽप्यव्याप्तिमुदाहरति—

आकाङ्क्ष्यादर्थवादादुपनमति फले कर्मणो यद्विधानम्
तत्राऽप्येषा तदङ्गीभवनकृति भवेत्सन्निधानश्रुतानाम् ।
यत्किञ्चिद्यत्र कुत्राप्यनधिगतवतीत्येव लक्ष्मस्थितिश्चेत्
हन्त्याद्येषु प्रसिद्धो नियमविधिरपि स्यादपूर्वं विधानम् ॥ ६ ॥

"वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः, वैश्वदेवा वै सजाताः, विश्वानेव देवान्स्वेन भागधेयेनोपधावति, त एवाऽस्मै सजातान् प्रयच्छन्ति ग्राम्येव भवती"ति श्रूयते। तत्र सांग्रहणीष्टेर्ग्रामफले यद्विधानम्; तन्न तस्यास्तत्प्राप्त्यर्थम्; रात्रिसत्रन्यायेन समनन्तरपठितार्थवादादेव तत्प्राप्तिसंभवात्। आकाङ्क्ष्यो ह्यत्र विधिनाऽर्थवादः स्तुतिलाभाय। विशिष्य चाऽत्र "ग्रामशब्दोऽयं बह्वर्थ" इति [1]महाभाष्योक्तेरनेकार्थस्य फलसमर्पकस्य ग्रामशब्दस्य विवक्षितार्थनिर्णयलाभाय। किन्तु सांग्रहण्यास्तदर्थवादात् फलकल्पनायामा"मनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति; एतावन्तो वै सजाताः, ये महान्तः, ये क्षुल्लका यास्त्रियस्तानेवावरुन्धे; त एनमवरुद्धा उपतिष्ठन्ती"ति तत्सन्निधिपठितानामामनहोमानामपि तदर्थवादात्फलार्थत्वकल्पनाप्रसक्त्या तेषां सांग्रहण्यङ्गत्वं न प्राप्नुयादिति तत्प्राप्त्यर्थम्। एतत्सत्त्वे हि प्रत्यक्षेण विधिना सांग्रहण्याः शीघ्रं फलसंबन्धेऽवगते फलवदफलन्यायादामनहोमानां तदङ्गत्वं प्राप्नोति। एवञ्चाऽत्र विधेयायाः सांग्रहण्याः केनाऽपि रूपेणोद्देश्यग्रामसंबन्धाप्राप्तिर्नास्तीत्यत्राप्यव्याप्तिरनिवार्या।

ननु लक्षणे प्रकृतविध्युद्देश्यमप्राप्ते सतीति न विशेष्यते; किन्तु विधिविषये अन्यस्मिन्वा प्रकृतविध्युद्देश्यम्, अन्यद्वा किञ्चिदप्राप्ते सतीति। तथा च नैतासामव्या-

---

[1] हलोऽनन्तरास्संयोग इति सूत्रभाष्ये पतञ्जलिनेति शेषः।

प्तीनामवकाश इति चेत्। एवं "व्रीहीनवहन्ती"त्यादिषु प्रसिद्धो नियमविधिरप्यपूर्वविधिः स्यात्। दार्शपौर्णमासिके प्रयाजादौ सौर्यादिविकृतिमप्राप्ते सति तद्विधिप्रवृत्तेः; अतस्तथाविवक्षणौचित्यादव्याप्तिः स्यादेवेति भावः।

इति षष्ठश्लोकव्याख्या।

---

अथ सप्तमश्लोकस्याऽवतारिका

स्यादेतत्—[1] "विधिरत्यन्तमप्राप्त" इत्यस्य तद्विध्यप्रवृत्तावप्राप्तिः प्रसक्तिमतीति पर्यवसितोऽर्थस्तस्य श्लोकस्य व्याख्यानसमये सूचितः। तेन तस्य विधेस्तत्प्राप्तिफलकत्वमर्थाल्लभ्यते। अतो यस्मिन्कस्मिंश्चिद्यत्किञ्चिदप्राप्ते सतीति विवक्षायामपि तस्य तत्प्राप्तिफलक इत्यधिकांशस्य लक्षणे निवेशान्नाऽवहनननियमविधावतिव्याप्तिप्रसङ्ग; तस्य सौर्यादिषु प्रयाजादिप्राप्तिफलकत्वाभावात्। एवञ्च वैकृताग्न्यतिग्राह्यविधिष्वविधेयानामपि गुणकामानां तत्तद्विध्युद्देश्यासु विकृतिषु प्राप्तेः; द्वादशाहिकगावामयनिकत्र्यनीकान्तर्गत-तदनन्तर्गतविधिषु[1] विधेयानामेवाऽग्रतानां तत्तद्विध्यनुद्देश्यासु द्वादशाहविकृतिषु प्राप्तेः। "उपांशु पौर्णमास्यां यजन्ति" ति विधौ अविधेयस्योपांशुयाजस्य तद्विध्यनुद्देश्ये स्वर्गे प्राप्तेः; "द्वे आवहनीय" इति विधानविधेयानामापराग्निकहोमानामनुद्देश्ये स्वर्गे प्राप्तेः, सांग्रहणीफलविधावविधेयानां तत्सन्निधिपठितानामनुद्देश्ये तद्विधेये कर्मणि प्राप्तेश्च फलस्य सद्भावान्न काऽप्यव्याप्तिशङ्कावकाशोऽपीत्याशङ्क्याऽऽह—

उद्देश्येऽन्यत्र वा यद्विधिपदमितरद्वाऽपि न प्राप्तिमत्स्यात्
तत्प्राप्तिं तत्र तन्वन्विधिरिति करणेऽप्येवमव्याप्तिरेव।
ज्योतिष्टोमादिकानां त्रिदिवगतिफले सर्वकामोक्तिसिद्धे
किं प्राप्यं धर्मजाते प्रकरणगमिते स्वर्गकामश्रुतिभ्याम् ॥७॥

"ज्योतिष्टोमेन स्वर्गकामो यजेत" "दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेते" ति श्रूयते। इदं वाक्यद्वयं ज्योतिष्टोमशब्दगृहीतस्य सोमयागस्य, दर्शपूर्णमासशब्दगृहीतानामाग्नेयादियागानाञ्च न स्वरूपप्राप्त्यर्थम्; "सोमेन यजेते" ति वाक्येन, आग्नेयादिवाक्यैश्च तेषां प्राप्तत्वादिति तावत्स्पष्टमेव। नाऽपि तेषां स्वर्गफलसंबन्धप्राप्त्यर्थम्। "एकस्मै वाऽन्ये यज्ञक्रतवः कामायाऽऽह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः" "एकस्मै वा अन्ये यज्ञक्रतवः कामायाऽऽह्रियन्ते सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावि"ति वचनाभ्यां तेषां पश्वादिफलकत्ववत्स्वर्गफलकत्वस्याऽपि प्राप्तिसम्भवात्। नाऽप्यङ्गसंबन्धबोधनार्थम्; प्रकरणकल्प्येन वाक्येन तत्प्राप्तिसम्भवात्। न हि स्वर्गकामवाक्ययोरङ्गसंबन्धबोधकत्वमपि तदुचितशब्दकल्पनां विना सम्भवति; तयोरङ्गसमर्पकशब्दाभावात्। न च दीक्षणीयादि–समिदादिवाक्यविशेषितयोरतत्संबन्धबोधकत्वं

---

[1] द्वादशाहिक-गावामयनिकपदाभ्यां त्र्यनीकान्तर्गत - तदनन्तर्गतपदयोर्यथाक्रमं संबंधः।

सम्भवतीति वाच्यम्। दीक्षणीयादिवाक्येष्वपि यच्छब्दोपबन्धरहितस्वतन्त्राख्यात-सत्त्वेन स्वतस्तेषामन्यविशेषणत्वालाभात्। तस्मात्स्वर्गकामवाक्ययोरङ्गसंबन्धबोधक-त्वाङ्गीकारेऽपि तयोर्दीक्षणीयादि-समिदादिवाक्यानां चाऽप्रत्यक्षमप्येकवाक्यत्वं प्रकरणबलेनैकवाक्यतापादकशब्दकल्पनयोपपादनीयम्।

तथा हि—ज्योतिष्टोमेन, दर्श-पूर्णमासाभ्यां वा स्वर्गापूर्वं भावयेदित्युक्ते भवति प्रकाराकाङ्क्षा कथं तेन, ताभ्यां वा तद्भावनीयमिति; अनिर्ज्ञातप्रकारत्वात्। न हि "गोधूमैर्मण्डकाः कार्या" इत्युक्ते तत्प्रकारानभिज्ञस्य नियोज्यस्याऽऽकाङ्क्षा न भवति कथं गोधूमैर्मण्डकाः कर्तव्या इति; "कुठारेण वृक्षं छिन्धी"त्युक्ते तत्प्रकारानभिज्ञस्य भवत्येव तदाकाङ्क्षा, तं प्रति हस्ताभ्यां कुठारं गृहीत्वा तदुद्यमन-निपातनव्यापारावर्त्तनेनेति वक्तव्यमेव। एतत्प्रकारस्य लोकप्रसिद्धतरत्वात्प्रायेण तत्र न भवत्याकाङ्क्षा इह तु ज्योतिष्टोमादिभिः स्वर्गापूर्वसम्पादनस्याऽत्यन्तालौकिकत्वात्प्रकाराकाङ्क्षा अवश्यम्भाविनी। तथा दीक्षणीयादीनामप्यस्ति प्रयोजनाकाङ्क्षा। तदिह परस्परा-काङ्क्षालक्षणे[1] प्रकरणे सति "रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते"तिवत् दीक्षणीयादिवाक्यानां प्रत्यक्षे ज्योतिष्टोमादिवाक्यैकवाक्यत्वे चाऽसति, येन शब्देन दीक्षणीयादिव्यापाराणां ज्योतिष्टोमादिविशेषणतोच्यते, तादृक्-शब्दकल्पनेनाऽप्रत्यक्षमेकवाक्यत्वं प्रकरणबलेन कल्पनीयम्। यथा "कीदृशं देवदत्त-गृहमि"ति प्रकाराकाङ्क्षायां द्वारोपान्तलिखितशङ्ख-पद्मनिधि-बहुचम्पकालङ्कृतनिष्कुटं देवदत्तगृहमित्यभिधानतो विशेषणमनुक्त्वा; इह देवदत्तगृहं वर्त्तते, द्वारोपान्ते लिखिते शङ्ख-पद्मे स्तः; निष्कुटे चम्पकाः सन्तीत्येतावत्युक्तेऽपि गृहस्य प्रकाराकाङ्क्षया, प्रकारो-पदेशस्य प्रयोजनकाङ्क्षया च तदुचितशब्दकल्पनयैकवाक्यत्वं कल्प्यत इत्येवमेवोप-पादितं तन्त्ररत्ने। तथा च स्वर्गकामवाक्ययोरङ्गसंबन्धबोधकत्वानङ्गीकारेऽपि[2] प्रकरणबलात्तद्बोधकं वाक्यं कल्पयितुं शक्यम्।

[3]यद्यपि [4]सर्वकामवाक्ययोराख्यातरहितयोर्यागभावना न श्रूयते; तथाऽपि चतुर्थ्या ज्योतिष्टोमस्य, दर्श-पूर्णमासयोश्च सर्वकामार्थत्वप्रतिपादनात् ज्योतिष्टोमेन, दर्शपूर्णमासाभ्याञ्च स्वर्ग-पशु-पुत्र-हिरण्याद्यपूर्वं भावयेदित्यर्थतो लाभात्स्यादेव तत्प्रकाराकाङ्क्षा, दीक्षणीयादीनाम्, समिदादीनाञ्च पूर्ववत्प्रयोजनाकाङ्क्षा स्थितैव। एवमुभयाकाङ्क्षालक्षणेन प्रकरणेन दीक्षणीयादिभिः समिदादिभिश्चोपकृत्य, ज्योतिष्टो-मेन, दर्शपूर्णमासाभ्याञ्च स्वर्ग-पश्वाद्यपूर्वं भावयेदिति वाक्यं किमिति कल्पयितुं न शक्यम्।

एवं स्वर्गसंबन्धस्याऽङ्गसंबन्धस्य चाऽन्यलभ्यत्वेऽपि केचन स्वर्गसंबन्धे सर्वकामवचनलभ्ये स्वर्गकामवाक्ययोरकृतार्थत्वं मन्यमानास्तयोरङ्गसंबन्धबोधनार्थ-त्वमित्याहुः।

अन्ये तु—सर्वकामश्रुत्यविरोधेन स्वर्गकामवाक्ययोरेव स्वर्गसंबन्धबोधनार्थत्वम्;

---

[1] लक्षणमिति मु. पु. पा.।
[2] अनङ्गीकारेणेति मु० पु० पा०।
[3] तथा हि मु० पु० पा०।
[4] स्वर्गकामेति मु० पु० पा०।

सर्वकामवाक्ययोस्तु सामान्यमुखप्रवृत्तयोः स्वर्गेतरसंबन्धबोधनार्थत्वमित्याहुः उभयोरप्यन्यतः प्राप्तिसम्भवात्तद्व्यतिरेकेण च क्वचित्कस्य चित्प्रापणीयस्याऽदर्शनात् स्वर्गकामवाक्ययोरुक्तलक्षणाव्याप्तिः सर्वथैवाऽनिवार्येति भावः ।

इति सप्तमश्लोकव्याख्या ।

---

अथाऽष्टमश्लोकस्याऽवतरणम्

अथ प्रकारान्तरेणो[1]दाहृतेषु, तदितरापूर्वविधिषु चाऽव्याप्तिमुदाहरति—

नानाशाखाग्निहोत्रप्रभृतिविधिषु चाऽव्याप्तिरेवं सति स्यात्
तत्तद्विध्यप्रवृत्तावपि तदधिगतिः स्याद्धि विध्यन्तरेण ।
सा सा प्राप्तिस्तु नैवाऽभ्युदयफलवतीत्येवमप्राप्तिसत्त्वम्
कृत्वाऽव्याप्तेर्निरासे न नियम-परिसंख्यानुवृत्तेर्निवृत्तिः ॥८॥

अग्निहोत्रादिविधयस्तावन्नानाशाखासु श्रूयन्ते । तेन तत्तच्छाखाम्नातविध्यभावे नानाशाखासु विप्रकीर्णानामङ्गानामिवाऽग्निहोत्रादीनामपि शाखान्तरतः प्राप्तिः स्यादेव । ततश्च तत्तद्विध्यभावेऽन्यतः प्राप्त्यसम्भवरूपस्याऽप्राप्तविशेषणार्थस्य अभावात्सर्वेष्वपि नानाशाखाम्नातापूर्वविधिष्वव्याप्तिरनिवार्या ।

शङ्का-निरासौ

ननु शाखान्तराधिकरणे तेषां तत्तच्छाखाध्यायिनं प्रति स्वस्वशास्त्राध्ययनप्राथम्येनाऽज्ञातज्ञापकत्वं समर्थितम् । सत्यम् । न त्वज्ञातज्ञापकत्वसिद्धिमात्रेण अप्राप्तविशेषणार्थो विवक्षितो लभ्यते । न चाऽज्ञातत्वमेवाऽप्राप्तशब्दार्थः । तथा सति नियम-परिसंख्ययोरपि अर्थाक्षेप-मन्त्रलिङ्गाभ्यां प्रागेव प्रवृत्तयोरज्ञातज्ञापकत्वसत्त्वेन तयोरतिव्याप्त्यापत्तेः । नन्वभ्युदयशिरस्कप्राप्तिसम्भवराहित्यमप्राप्त इत्यनेन विवक्षितम् । ततश्च "स्वाध्यायोऽध्येतव्य" इति नियमविधिबलादध्ययनगृहीतस्य स्वशाखान्तर्गतवाक्यजन्यतदर्थज्ञानस्यैवाऽभ्युदयकारित्वेन स्वशाखान्तर्गतवाक्यसद्भावे [2]शाखान्तरगतवाक्यजन्यज्ञानस्याऽभ्युदयकारित्वस्याऽभावात्तत्तच्छाखाध्यायिपुरुषा - पेक्षया सर्वेषामग्निहोत्रादिविधीनामज्ञातज्ञापकत्ववत्, अप्राप्तप्राप्तिफलकत्वमपि विवक्षितरूपमस्त्येवेति, न नानाशाखाग्निहोत्रादिविधिष्वव्याप्तिः । नाऽपि स्वर्गकामवाक्येष्वव्याप्तिः; तेष्वपि साप्तदश्यवाक्यन्यायेनाऽभ्युदयफलकप्राप्त्यभावसत्त्वात् ।

तथा हि—"सप्तदशसामिधेनीरनुब्रूयादि"त्यनारभ्य श्रूयते । अत्र विधीयमानस्य साप्तदश्यस्य न सामिधेनीद्वारा प्रकृतौ निवेशः; प्राकरणिकतत्पाञ्चदश्यावरुद्धत्वात्, किन्तु विकृतिष्वेव । तत्राऽपि श्रुतसाप्तदश्यासु मित्रविन्दादिष्वेव निवेशः; न सर्वासु विकृतिषु । अनारभ्यश्रुतं हि साप्तदश्यं यावत्सामिधेनीद्वारा सकलविकृत्यङ्गं

---

[1] उदाहृतेति मु. पु. पा.    [2] शाखान्तर्गतेति मु. पु. पा.

कल्प्यते; तावत्प्राकरणिकैर्वाक्यैर्मित्रविन्दादिसंबन्धे कृते क्षीणाऽर्थापत्तिर्न क्रत्वन्तरसंबन्धं कल्पयति। तेनाऽनारभ्याधीतस्य साप्तदश्यस्योपसंहारार्थानि [1]तत्तत्प्रकरणाधीतानि साप्तदश्यवचनानि। ततश्च प्राकरणिकवचनैः साप्तदश्यस्य क्रतुसंबन्धसिद्धिः, अनारभ्याधीतवाक्येन सामिधेनीसंबन्धसिद्धिरिति च मीमांसकमर्यादा। अत्राऽनारभ्यविधानाभावेऽपि साप्तदश्यस्य क्रतुसंबन्धवत्सामिधेनीसंबन्धोऽपि प्राकरणिकवचनैरेव सिद्ध्यतीति; अनारभ्यविधानस्य वैयर्थ्यशङ्का प्राप्नोति। अत्रोक्तं तन्त्ररत्ने—"यद्यपि प्राकरणिकेनैव क्रतुसंबन्धः, सामिधेनीसंबन्धश्च सिद्ध्यति। तथाऽपि वाक्यद्वयाम्नानात्; एवं विज्ञानमभ्युदयकारीति विज्ञायते; अर्थवादप्ररोचितवत्" इति। ततश्चाऽस्य न्यायस्य सार्वकाम्यवाक्यप्राप्त्यर्थस्वर्गकामवाक्यसाधारण्यात्तत्राऽप्यभ्युदयशिरस्कप्राप्त्यभावो वक्तुं शक्यत इति चेत्। तथा सति नियम-परिसंख्याविध्योरत्यन्तमप्राप्त इति विशेषणाभ्यां निवृत्तिर्न स्यात्। तत्राऽपि स्वाध्यायनियमविधिबलादेवाऽर्थाक्षेप-मन्त्रलिङ्गाभ्यामवघातादिप्राप्तेरभ्युदयकारित्वाभावस्य वक्तुं शक्यत्वात्। तस्मादन्यतः प्राप्त्यभावमात्रमिहाऽप्राप्तिरिति वक्तव्यम्, इत्युदाहृतस्थलेष्वव्याप्तिः सुदृढैवेति भावः ॥८॥

इत्यष्टमश्लोकव्याख्या।

---

अथ नवमश्लोकस्याऽवतारिका

विध्यन्तराप्रवृत्तिसहकृतैतद्विध्यप्रवृत्तौ वा केवलतद्विध्यप्रवृत्तावित्यर्थ—
विवक्षणेन पूर्वोक्तदोषाणां वारणं भवतीति कथनम्।

नन्वस्त्वन्यतः प्राप्त्यभावमात्रमप्राप्तविशेषणार्थः। प्राप्त्यभावस्तु तत्तद्विधिमात्राप्रवृत्ताविति नेष्यते; किन्तु विध्यन्तराप्रवृत्तिसहितायाम्, केवलायां वा तत्तद्विध्यप्रवृत्तौ यः प्राप्त्यभावः, स सर्वोऽप्यप्राप्तविशेषणार्थ इतीष्यते। ततश्च तत्तच्छाखागताग्निहोत्रादिविध्यप्रवृत्तौ तदन्यसकलशाखागततत्तद्विध्यप्रवृत्तिसहितायां तदप्राप्तिरक्षतेति न नानाशाखागताग्निहोत्रादिविधिष्वव्याप्तिः। नाऽपि स्वर्गकामविध्योरव्याप्तिः, तदप्रवृत्तौ सार्वकाम्यविध्यप्रवृत्तिसहितायां ज्योतिष्टोमादीनां स्वर्गसंबन्धाप्राप्तिसत्त्वात्। "वसन्ते वसन्ते ज्योतिषा यजेते"ति "यावज्जीवं दर्श-पूर्णमासाभ्यां यजेते"ति विधिभ्यां तेषां प्रत्यवायपरिहारार्थत्वावगमेन तत एव फलाकाङ्क्षाशान्तेर्विश्वजिन्न्यायाविषयतया ततः स्वर्गसंबन्धप्राप्तेरनाशङ्कनीयत्वात्।

एवं विध्यन्तराप्रवृत्तिसहिततत्तद्विध्यप्रवृत्तिनियमो नियमविधावपि
स्वीकरणीय इति निरूपणम्।

अवश्यं च क्वचित्क्वचिन्नियमविधौ तत्तद्विध्यप्रवृत्तेर्विध्यन्तराप्रवृत्तिसाहित्यन्यायोऽयमनुसरणीयः। अन्यथा "व्रीहिभिर्यजेते"ति नियमविधौ तल्लक्षणस्याऽव्याप्तिः

---

[1] तत्प्रकरणेति मु० पु० पा०।

स्यात्; व्रीहिशास्त्राभावे यवशास्त्रेण यवानामेव नियतप्राप्त्या व्रीहीणां पक्षप्राप्त्यभावात्। "यवैर्यजेतेति" नियमविधावपि तदव्याप्तिः स्यात्। तदभावे व्रीहिशास्त्रेण व्रीहीणामेव नियतप्राप्त्या यवानां पक्षप्राप्त्यभावात्।

तथा "औदुम्बरो यूपो भवती"त्यादिवैकृतद्रव्यविधिष्वपि "सर्वे द्रव्यविधयो नियमविधयः" इति मीमांसकमर्यादया नियमविधित्वेन समर्थनीयेषु तदव्याप्तिः स्यात्। वैकृतविध्यभावे प्राकृतेन "खादिरो यूपो भवती"त्यादिशास्त्रेण चोदकतः खादिरादीनामेव नियतप्राप्त्या उदुम्बरतादीनां पक्षप्राप्त्यभावात्। ततश्च व्रीहियवशास्त्रयोर्द्वयोरप्यभावे पुरोडाशप्रकृतिद्रव्याकाङ्क्षया व्रीहि-यव-नीवारादीनां पक्षप्राप्त्या प्राकृत-वैकृतविधीनामभावे यूपादिप्रकृतिद्रव्याकाङ्क्षायां धव-खदिर-पलाशोदुम्बरादीनां पक्षप्राप्त्या च व्रीहि-यवोदुम्बरादीनां पक्षप्राप्त्या च, व्रीहि-यवोदुम्बरादिशास्त्रेषु नियमविधिलक्षणं समर्थनीयम्।

विध्यन्तराप्रवृत्तिसहिततत्तद्विध्यप्रवृत्तिन्यायः परिसंख्याविधावपि स्वीकरणीय इति निरूपणम्।

तथा परिसंख्यालक्षणेऽपि न्यायोऽयमनुसरणीयः। अन्यथा मित्रविन्दाध्वरकल्पा—वैमृध-चातुर्मास्य – पश्वाग्रयणादिनानाकर्मसमाम्नातसाप्तदश्यविधिष्वनारभ्यविहितशास्त्रस्योपसंहारार्थत्वेन, तदितरविकृतीनां साप्तदश्यसंबन्धव्यावृत्तिफलकतया परिसंख्यारूपेषु तल्लक्षणाव्याप्तिः स्यात्। मित्रविन्दागतविध्यभावेऽध्वरकल्पागतविधेर्मित्रविन्दासाधारण्येनाऽध्वरकल्पेतरसकलविकृतीनां साप्तदश्यसंबन्धव्यावृत्तिफलकतया मित्रविन्दायामन्यतः साप्तदश्यप्राप्त्यभावात्। एवमुक्तन्यायेनाऽध्वरकल्पादिष्वपि तत्प्राप्त्यभावात्।

परिसंख्याया उदाहरणान्तरप्रदर्शनम्।

तथा गृहमेधीयगते "स्वाज्यभागौ यजति" "अग्नये स्विष्टकृते समवद्यति" "इडामुपह्वयते" इत्यादिप्राकृताङ्गपुनर्विधिषु चोदकलोपकत्वेन तदितराङ्गानां गृहमेधीयसंबन्धव्यावृत्तिफलकतया परिसंख्यारूपेषु तल्लक्षणाव्याप्तिः स्यात्। आज्यभागविध्यभावे स्विष्टकृद्विधेराज्यभागसाधारण्येन स्विष्टकृदितरसकलचोदकप्राप्याङ्गानां गृहमेधीयसंबन्धव्यावृत्तिफलकतया आज्यभागयोरन्यतो गृहमेधीये प्राप्त्यभावात्[1]। उक्तन्यायेनैव स्विष्टकृदादीनामपि तत्प्राप्त्यभावात्। ततश्च मित्रविन्दादिप्रकरणगतसकलसाप्तदश्यविध्यभावेऽनारभ्याधीतसाप्तदश्यविधिना प्रकृतितः पाञ्चदश्यावरोधान्निवृत्तेनाऽविशेषात्सर्वासु विकृतिषु साप्तदश्यप्राप्त्या गृहमेधीयप्रकरणगतसकलप्राकृताङ्गपुनर्विध्यभावे चोदकात्सर्वेषामाज्यभागादीनां गृहमेधीये प्राप्त्या च तेषु परिसंख्यालक्षणं समर्थनीयम्। तद्वत्सकलशाखागताग्निहोत्रादिविध्याद्यभावेऽग्निहोत्राद्यप्राप्त्या तेष्वपूर्वविधिलक्षणं समर्थयितुं शक्यमेव। अतो न काप्यव्याप्तिदोष इत्याशङ्क्याऽऽह—

---

[1] संबन्धप्राप्त्यभावादिति २ पु० पा०।

तत्तद्विध्यप्रवृत्तौ सुलभमितरविध्यप्रवृत्त्या युतायाम्
तेषामप्राप्तिमत्त्वं नियमपदयवव्रीहिपक्षाप्तितावत् ।
नानाकर्मोपसंहृत्युचितनियतसत्सामदश्याप्तिवच्चे—
त्येवं सृष्टौ तु पृष्ठस्तुतिनियममुखातिप्रसक्तिः प्रसर्पेत् ॥६॥

एवमव्याप्तिपरिहारार्थमनियमेनैकानेकविध्यप्रवृत्तावप्राप्तेरपूर्वविधिलक्षणनिविष्टत्वकल्पनायामुपहव्यादिविकृतिषु प्रकृतितो विकल्पेन प्राप्तयोर्बृहत्-रथन्तरयोरन्यतरनियमार्थे "बृहत्पृष्ठं भवति" "रथन्तरं पृष्ठं भवती"ति विधौ, विकृत्यतिरात्रे प्रकृतितो विकल्पेन प्राप्तयोः षोडशिग्रह-तद्वर्जनयोः, षोडशिग्रहनियमार्थे "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति विधौ, गृहमेधीये प्रकृतितः समुच्चित्य प्राप्ताज्यभाग-तदितराङ्गकलापमध्ये चोदकलोपकतया तदितराङ्गपरिसंख्यारूपे "आज्यभागौ यजती"तिविधौ चाऽतिव्याप्तिः स्यात् । बृहद्रथन्तरपृष्ठयोः षोडशिग्रहस्याऽऽज्यभागयोश्च प्राकृत-वैकृत-विध्यभावे सर्वथैवाऽप्राप्तिसत्त्वात् । व्रीहि-यवविध्योर्वैकृतद्रव्यविधिषु, प्राकरणिकसाप्तदश्यविधिषु, गृहमेधीयस्विष्टकृदादिविधिषु चाऽनेकविध्यप्रवृत्त्यपेक्षया पाक्षिकीम्, नियताञ्च प्राप्तिं सम्भाव्य, नियम-परिसंख्याविधित्वेन समर्थितेषु तत्तद्विध्यप्रवृत्त्यपेक्षया सर्वथैवाऽप्राप्तेरपि सत्त्वेन तेष्वप्यतिव्याप्तिः स्यात् । न ह्यनेकविध्यप्रवृत्त्यपेक्षैव अप्राप्तिरपूर्वविधिलक्षणे निवेश्यत इति, नियन्तुं शक्यते । तथा सति "व्रीहीन्प्रोक्षती"-त्याद्यपूर्वविधावप्राप्तेस्तद्विधिमात्राप्रवृत्त्यपेक्षत्वेन तत्राऽव्याप्तिः स्यादिति; तत्परिहारार्थमनियमेनैकानेकविध्यप्रवृत्त्योरतल्लक्षणे निवेशनीयत्वात् ।

पूर्वोक्तविवक्षायामपूर्वविधौ क्वचिदव्याप्तिः,
नियम-परिसंख्याविध्योरतिव्याप्तिरिति च वर्णनम् ।

तथा "चतुर्जुह्वां गृह्णाति" "अष्टावुपभृति" "चतुर्ध्रुवायामिति" कार्यविशेषासंयुक्ततयोत्पन्नानां जौहवाज्यादीनां विनियोगविधिषु "यज्जुह्वां गृह्णाति" प्रयाजेभ्यस्तत् । "यदुपभृति प्रयाजानुयाजेभ्यस्तत्, सर्वस्मै वा एतत् यज्ञाय[1] गृह्यते यत् ध्रुवायामाज्यमि"त्येवंरूपेषु मध्ये जौहवौपभृताज्यविनियोगविध्योर्नियमविधित्वेनाऽभ्युपगतयोः नियमविधित्वम्, त्रयाणामेवैतेषां विधीनामप्रवृत्त्यपेक्षया जौहवाज्यादीनां द्रव्याकाङ्क्षेषु प्रयाजादिषु पक्षे प्राप्तिं सम्भाव्य समर्थनीयम् । तत्तद्विध्यप्रवृत्त्यपेक्षया विधेययोर्जौहवौपभृताज्ययोः प्रयाजानुयाजेष्वप्राप्तिरपि सम्भवति । तदा सर्वयज्ञार्थध्रौवाज्यान्वयेन निराकाङ्क्षेभ्यः प्रयाजानुयाजेभ्यः परावृत्त्य तयोरयज्ञरूपेष्वाज्यापेक्षसदनकरणादिकार्येष्वेव प्राप्तेः, इति तयोरपि विध्योरतिव्याप्तिः स्यात् ।

एवमनियमेनैकानेकविध्यप्रवृत्त्यपेक्षया पाक्षिक—नियतप्राप्तयोर्नियम - परिसंख्यालक्षणनिविष्टत्वकल्पनायां तयोरपि लक्षणयोरतिव्याप्तिः स्यात् ।

तथा हि—ध्रौवाज्यविनियोगविधेर्द्रव्यविषयत्वेऽपि नियमविधित्वं न सम्भवति; जौहवौपभृताज्ययोः प्रयाजानुयाजार्थत्वे सति परिशेषादेव ध्रौवाज्यस्य तदतिरिक्तद्रव्या-

---

[1] द्रव्याकङ्क्षितयज्ञायेत्यर्थः ।

पेक्षसर्वयज्ञार्थत्वनियमसिद्धेः। न च स्थाल्याज्यस्याऽपि तेषु पक्षप्राप्त्या परिशेषासिद्धेर्नियमविधित्वं सम्भवतीति वाच्यम्। जौहवाद्याज्यस्य ग्रहणे विनियोगेन निराकाङ्क्षस्य स्थाल्याज्यस्य स्वतस्तेषु प्राप्त्यसम्भवात्। तस्मात् द्रव्यापेक्षसर्वयज्ञेष्वयज्ञरूपेषु सदनकरणादिषु च ध्रौवाज्यस्य समुच्चित्य प्राप्तौ, सदनकरणादिव्यावृत्त्यर्थं तस्य परिसंख्याविधित्वमेव युक्तम्। तत्र त्रयाणामेतेषां विधीनामप्रवृत्तौ ध्रौवाज्यस्य तत्तद्विनियोगविधिसंग्राह्येषु, आज्यभागादिषु च पक्षप्राप्तिः सम्भवतीति तत्र नियमविधिलक्षणस्याऽतिव्याप्तिः।

तथा "रथन्तरं पृष्ठं भवती"ति वैकृतो विधिर्नियमविधिः; तस्य प्राकृतबृहत्-रथन्तरविकल्पविधेश्चाऽप्रवृत्तौ प्रकृतितो बृहद्रथन्तरयोः समुच्चित्य प्राप्तिः सम्भवतीति तत्र परिसंख्यालक्षणस्याऽतिव्याप्तिः। "पृष्ठ्यः षडहः" "बृहद्रथन्तरसामा कार्यः" इति गावामयनिके षडहे रथन्तर-बृहत्पृष्ठविधिरपूर्वविधिः; तदन्तर्गतेषु तृतीयादिष्वहःसु तत्प्रकृतिभूतात् द्वादशाहिकान्नानापृष्ठषडहात् क्रमेण वैरूप-वैराज-शाक्वर-रैवतपृष्ठानामेव प्राप्तत्वेन "तृतीये रथन्तरं चतुर्थे बृहत् पञ्चमे रथन्तरं षष्ठे बृहदि"त्यस्याऽर्थस्य कथंचिदपि प्राप्त्यभावात्। द्वादशाहिकनानापृष्ठविध्यभावे तस्मिन् गावामयनिकषडहे ज्योतिष्टोमात् बृहद्रथन्तरपृष्ठयोरनियता प्राप्तिः सम्भवतीति, तत्र नियमविधलक्षणस्याऽतिव्याप्तिः। आज्यभागपुनर्विधानेन गृहमेधीयवदपूर्वेऽवभृथे प्रयाजानुयाजप्राप्त्यभावात् तत्र "पबर्हिषः प्रयाजान्यजति" "अपबर्हिषोऽनुयाजान्यजती"ति बर्हिर्व्यतिरिक्तप्रयाजानुयाजप्राप्त्यर्थोऽपूर्वविधिः। तत्राऽऽज्यभागपुनर्विधानाभावे बर्हिःसंज्ञकप्रयाजानुयाजयोः, तद्व्यतिरिक्त-प्रयाजानुयाजानाञ्च समुच्चित्य प्राप्तिः सम्भवतीति, तत्र परिसंख्यालक्षणस्याऽतिव्याप्तिः। एवमतिव्याप्त्याबहुत्वादनियमेनैकानेकविध्यप्रवृत्त्योरपूर्वविध्यादिलक्षणानुप्रवेशकल्पनमयुक्तमिति भावः।

इति नवमश्लोकस्य व्याख्या।

---

अथ दशमश्लोकस्याऽवतरणिका

उपधेयसांकर्येप्युपाधीनमसांकर्यादिति न्यायेन नानालक्षणानुसारेण अनेकविधिरूपत्वांगीकारे दोषाभाव इति निरूपणम्।

स्यादेतत् वैकृतरथन्तरपृष्ठादिविधिष्वपूर्वविध्यादिलक्षणानुगतेर्नातिव्याप्तिः-नानालक्षणसमावेशानुसारेणाऽनेकविधिरूपत्वाङ्गीकारे दोषाभावात्, तावता रथन्तरपृष्ठादिष्वनुष्ठानभेदासाङ्कर्यात्, उपधेयसंकरेऽपि तत्तल्लक्षणोपाधीनामसाङ्कर्याच्च। एकैकस्मिन्वाक्ये विषयभेदेनाऽपूर्वविध्यादिलक्षणानामुपजीव्योपजीवकभावेन तत्फलानां च साङ्कर्यस्य संप्रतिपन्नत्वेन तन्न्यायादेकानेकविध्यप्रवृत्तिभेदेनाऽपि तदुभयसाङ्कर्याभ्युपगमसम्भवाच्च। तथा हि "उपांशु पौर्णमास्यां यजन्नि"ति वाक्ये उपांशुयाजाऽप्राप्तफलसंबन्धप्रापकत्वेन तस्मिन्पौर्णमास्या सह प्राप्तामावास्यासंबन्धव्यावर्तकत्वेन चाऽपूर्वविधि-परिसंख्याविधिलक्षणयोः साङ्कर्यं तावदङ्गीकृतं चतुर्थश्लोकव्याख्याने।

"सायं जुहोति" "प्रातर्जुहोती"तिविध्योर्नियम-परिसंख्याविधिलक्षणसाङ्कर्य्यं दृश्यते। तौ ख"ल्वग्निहोत्रं जुहुयात्स्वर्गकाम" इति विहितकाम्याग्निहोत्रप्रयोगस्याऽनियतकालत्वप्राप्तौ सायंप्रातःकालविशेषनियमार्थौ. "यावज्जीवमग्निहोत्रं जुहोती"तिविहितनित्याग्निहोत्रप्रयोगस्य सातत्येन सार्वकालत्वप्राप्तौ सायंप्रातःकालावच्छिन्नमेव जीवनं निमित्तमिति निमित्तविशेषणसमर्पणेनाऽन्यकालव्यावर्त्तकौ च।

यद्वा "अश्वः श्यावो दक्षिणे"त्युपहव्यदक्षिणाविधिरिहोदाहरणम्, स हि "गौश्चाश्वश्चे"त्यादिज्यौतिष्टोमिकदक्षिणाविधिनाऽश्वस्य गवादिभिः समुच्चित्य प्राप्तौ गवादिपरिसंख्यार्थः, तस्याऽनियमरूपप्राप्तौ श्यावनियमार्थश्च।

"यद्योन्यां गायति, तदुत्तरयोर्गायती"ति विधावपूर्व-नियमविधिलक्षणसाङ्कर्यं दृश्यते। कथम्? क्रतौ स्तोत्रसाधनानां साम्नां यथाध्ययनमेकस्यामृचि गानप्राप्तौ "एकं साम तृचे क्रियते स्तोत्रीयमि"तिवचनात् तृचे तानि गातव्यानीति स्थापितम्, एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत्। तृचे वा लिङ्गदर्शनादि"१०।६।१।२। ति पूर्वोत्तरपक्षसूत्राभ्यां दशमाध्याये। ततश्च तेषां स्वयोनिषु गीयमानानां क्रतुष्वन्ययोरपि ययोः कयोश्चिदृचोर्गेयत्वे प्राप्ते, संशर-विलेशपरिहारार्थं योनिसमच्छन्दस्कयोरेव गातव्यमिति निर्णीतं "तदभ्यासः समासु स्यादि" ९।२।५।२३ तिनावमिकाधिकरणे। तत्रेदं वचनं प्रवर्तते "यद्योन्यां तदुत्तरयोर्गायती"ति। अत्र योनिग्रन्थपठितयोर्योन्युत्तरयोर्गानं न विधीयते; किन्तूत्तराग्रन्थपठितयोस्तदुत्तरयोः; तत्रैवोत्तराशब्दस्य पदान्तरसन्निधाननिरपेक्षया रूढ्या प्रसिद्धेरिति निर्णीतं "नैमित्तिकं तूत्तरात्वमि"ति नावमिकाधिकरणे। उत्तराग्रन्थपठिते चोत्तरे रथन्तरादियोनीनां तद्विषमच्छन्दस्के, वामदेव्यादियोनीनां तत्समच्छन्दस्के। एवञ्च रथन्तरादिसाम्नां संशर-विलेशपरिहारार्थमुत्तराव्यतिरिक्तयोरेव कयोश्चिद्योनिसमस्छन्दस्कयोरृचोर्गानप्राप्तावप्राप्तोत्तराप्रापणार्थम् उत्तराविधिः। वामदेव्यादिसाम्नामुत्तरयोरन्ययोर्वा कयोश्चिद्योनिसमच्छन्दस्कयोर्गानप्राप्तावुत्तरानियमार्थः—इति। कौ पुनः संशर-विलेशदोषौ? संशरः-साम्नो हिंसा, विलेशः-तस्य ऋगपेक्षयाऽल्पत्वम्, यद्यधिकच्छन्दस्कायामृच्युत्पन्नं साम न्यूनच्छन्दस्कायामृचि गीयेत; तदा केन चिदेव सामभागेन ऋक्पूर्त्तेरवशिष्टसामभाग आश्रयाभावाद्धिंस्येत। यदि न्यूनच्छन्दस्कायामुत्पन्नमधिकच्छन्दस्कायां गीयेत, तदाऽल्पं साम ऋक्परिपूरणाक्षमं स्यात्।

## अपूर्व-नियमयोरपूर्वपरिसंख्यायाश्च सांकर्यमुक्त्वा, अपूर्व-नियम-परिसंख्याविधिलक्षणसांकर्यप्रतिपादनम्।

तथा "सृष्टीरुपदधाती"त्यादिविधौ त्रिविधविधिलक्षणानां सङ्करो दृश्यते। कथं? सृष्ट्यादिशब्देन सृष्टिशब्दादिमन्त्रोपधेया इष्टका उच्यन्ते; "तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोरि" ४।४।१२५। ति पाणिनिस्मरणात्। अत्र न तावदुपधानं विधीयते; "इष्टकाभिरग्निं चिनुत" इत्यनेनैवाऽर्थप्राप्तत्वात्। इष्टकानामनुपधाने चयनानिर्वृत्तेः। ननु तथापीष्टकाङ्गत्वेन तदविधाने समुदितानामपीष्टकानां कदाचिदुपधानं प्राप्नुयात्तन्माभूत्प्रत्येकमेवोपधानमस्त्वित्येतदर्थमिष्टकाङ्गत्वेन तद्विधानं स्यात्।

तथा सति हि प्रतिप्रधानमङ्गावृत्तिन्यायात्प्रत्येकमुपधानं सिध्यति-इति। नैतद्युक्तम्। एकेनोपधानविधिनाऽस्य प्रयोजनस्य लाभेन "सृष्टीरुपदधाति 'प्राणभृत उपदधाति', चित्रिणीरुपदधाती"ति वाक्येष्वसकृदुपधानविधानवैयर्थ्यापत्तेः। न च तेष्वेकत्रो-पधानविधिः, अन्यत्र नेति शक्यं वक्तुम्, विनिगमनाविरहात्।

नाऽपि सर्वेषु तेषु [1]तत्तदिष्टकाविशेषविधिः। "इष्टकाभिरग्निं चिनुत" इति विधिनैव सर्वासामिष्टकानां प्राप्तत्वात्। ननु तथापि मध्यमचितिलाभार्थं विशिष्य कासां चिद्विधानं स्यादसत्सु हि तेषु विधिषु सृष्ट्यादिशब्दोदितानां मध्यमचिति प्रकरणानाम्नातानामिष्टकानां मध्यमचितावुपधानं न लभ्यते, सत्सु तु तेषु विधिषु लभ्यते; "मध्यमायां तु वचनाद्ब्राह्मणवत्यः" ५।३।७।१ इति पञ्चमाध्यायसूत्रेण "यां वै कां चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादि"तिवचन-बलेन प्रत्यक्षज्ञानवाच्यभिपूर्वजानातिवशात्प्रत्यक्षब्राह्मणविहितानामिष्टकानां मध्यम-चितावेवोपधानम्; न तु "अन्ते तु बादरायणः" इति न्यायाच्चित्यन्तर इति निर्णीत-त्वादिति चेत्। नैतदपि युक्तम्। कासामिष्टकानां सृष्टिमन्त्रादिभिरुपधानमिति प्रागनवगततया सृष्ट्यादिशब्दोक्तानां सृष्टिशब्दादिवन्मन्त्रोपधेयेष्टकाविशेषाणां बुद्ध्यनारोहेण विधातुमशक्यत्वात्। तस्मात्तन्मन्त्रविशेषा एवेष्टकोपधाने विधीयन्ते इति युक्तम्, तेषां च विधिर्नोपधानप्राप्त्यर्थः, प्रकरणादेव प्राप्तिसम्भवात्।

नाऽपि लिङ्गविनयोज्यमन्त्रान्तरपरिसंख्यार्थः। मन्त्रान्तराम्नानवैयर्थ्यापत्तेः। किन्तु "एकया ऽस्तुवत प्रजा अधीयन्त, प्रजापतिरधिपतिरासीत् तिसृभिरस्तुवत ब्रह्माऽसृज्यत ब्रह्मणस्पतिरधिपतिरासीदि"तै०सं० ४।३।१० त्यादीनामुपधानैकान्तिक-लिङ्गविशेषरहितानां मन्त्राणामिष्टकाग्रहणादिष्वपि विनियोगप्रसक्तौ तत्परिसंख्यार्थः; प्रत्येकोपधाननियमार्थश्च। समुदितोपधाने तत्तदिष्टकोपधानस्य क्रमोच्चार्यव्यवस्थित-तत्तन्मन्त्रकरणकत्वायोगात्, मध्यमचिति प्राप्त्यर्थश्च। मन्त्रव्यतिरेकेणेष्टकासु विशेषान्तरानिरूपणेन मन्त्रं विना कृतेष्टकानियमविधेरशक्यतया "यां वै कां चने"ति-विधिरपीष्टकाविशेषणमन्त्रविध्यवलम्बनत्वात्। एवं तावदपूर्वविध्यादिलक्षणानामा-श्रयभेदेन सङ्करो दर्शितः।

### अपूर्वविध्यादिलक्षणानां सांकर्यमुपवर्ण्य; तत्फलानामपि पौर्वापर्येण सांकर्यनिरूपणम्।

तथैव तत्फलानामपि प्रथम-चरमभावेन सङ्करो दृश्यते, किन्तु केषु चित्किञ्चित्फ-लमनन्यलभ्यत्वेऽप्यनुनिष्पादित्वादन्येष्वननुनिष्पादित्वेऽप्यन्यलभ्यत्वादपरेष्वनन्यल-भ्यत्वेऽप्यननुनिष्पादित्वेऽप्यनुष्ठानविशेषालाभात् फलत्वेन न व्यपदिश्यते। तत्राऽनु-निष्पादिसङ्करो यथा "अथातोऽग्निमग्निष्टोमेनाऽनुयजती"ति विधितः प्रकृत्य-ग्निष्टोमेऽग्निप्राप्तिः; तदनुनिष्पादिनी तस्मिन्नग्न्याश्रितगुणकामानां प्राप्तिः। यद्यप्यग्नेः सौमिकाङ्गकलापसंवलितप्रयोगस्य सोमप्रयोगाद्बहिः सम्पादयितुमशक्यत्वेन तत्प्रयोग-मध्यपातित्वावश्यम्भावात्; निष्फलस्याऽग्नेः फलवत्सोमाङ्गत्वमनुष्ठानसादेश्यरूपेण

[1] तत्रेति मु० पु० पा०।

स्थानप्रमाणेन सिध्यति; तथाऽपि तेनाऽनारभ्याधीतस्य प्राकरणिकोत्तरवेद्यवरुद्धप्रकृतिव्यावृत्तस्य विकृत्यङ्गत्वमेव सिध्यति। अतः प्रकृतावप्राप्तस्याऽग्नेः प्रथमश्लोकव्याख्यानदर्शितरीत्याऽनेनैव वाक्येन प्राप्तिः, तत्प्राप्त्या च तदाश्रितानां श्येनाकृत्यादिफलार्थगुणानां प्रकृतिमध्येऽनुष्ठानप्राप्तिः, ततो बहिरनुष्ठातुमशक्यत्वात्।

प्राप्त्यनुनिष्पादिनियमस्योदाहरणम्।

आग्रयणे "द्यावापृथिव्य एककपाल" इति विधित एककपालयागस्य प्राप्तिः, तदनुनिष्पादी प्रसूनबर्हिर्नियमः। प्रसूनम्-पुष्पितम्। लूनशेषान्मूलात्पुनरुत्पन्नं वा। एककपालविध्यभावे ह्याग्रयणे प्रसूनमप्रसूनं वा बर्हिरनियतमैन्द्राग्नादियागानुसारेण प्राप्नोति; ऐन्द्राग्नादिषु प्रसूननियमाश्रवणात्। एककपालविधिसत्त्वे तु तस्य वैश्वदेविकैककपालप्रकृतिकत्वात्; ततोऽतिदेशेन प्रसूननियमः प्राप्नोति। यद्यप्येककपालो जघन्यत्वेनैकत्वेन चैन्द्राग्नाद्यपेक्षया दुर्बलः, तथाऽपि प्रसूनबर्हिर्ग्रहणेऽप्यनियतबर्हिषामैन्द्राग्नादीनां विरोधाभावात्कांस्यभोजिन्यायेनैककपालानुवर्त्तनमुपपद्यत एव। यत्र शिष्यस्य कांस्यपात्रभोजननियमोऽस्ति; गुरोर्नास्ति, तत्र तयोरेकपात्रभोजने क्वचित्प्रसक्ते गुणभूतमपि शिष्यमनुसृत्य गुरुणापि हि कांस्यपात्रभोजनमेवाऽऽद्रियते।

प्राप्त्यनुनिष्पादिपरिसंख्योदाहरणम्।

"अतिहायेडो बर्हिःप्रति समानयते जुह्वामौपभृतमि"ति बर्हिःप्रयाजोपक्रमे जुह्वां प्रयाजार्थौपभृताज्यसमानयनप्राप्तिः, तदनुनिष्पादिनी जौहवाज्यमादिमप्रयाजत्रयार्थमौपभृताज्यमुपरितनप्रयाजद्वितयार्थमिति परिसंख्या। "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् "यदुपभृति प्रयाजानुयाजेभ्यस्तदि"तिविधिभ्यां हि तयोरविशेषेण सर्वप्रयाजार्थत्वं प्राप्तम्। प्रथमप्रयाजोपक्रम एव प्रयाजार्थस्यौपभृताज्यस्य जुह्वां समानयनमपि प्राप्तम्। तस्य तस्मात्कालादाच्छिद्य बर्हिःप्रयाजोपक्रमकाले विधानादाज्यद्वयमपि प्रयाजविशेषविषयतया व्यवतिष्ठते। एवं चाऽत्र प्राप्तपरिसंख्यानेऽपि न त्रैदोष्यम्, अन्यानुनिष्पादित्वेन शब्दव्यापाराविषयत्वात्।

नियमानुनिष्पादिप्राप्तेरुदाहरणम्।

"ऋत्विग्भ्यो दक्षिणां ददाति, अग्नीधे ददाति, ब्रह्मणे ददाती" त्यादिविध्यधीनऋत्विगानमनार्थदक्षिणादाननियमानुनिष्पादिनी ऋत्विजां कर्मसु कर्तृत्वप्राप्तिः। "स्वर्गकामो यजेते"ति सामानाधिकरण्यादात्मनेपदेन कर्त्तुरेव फलावगमाच्च फलार्थिनो यजमानस्यैव साङ्गे ज्योतिष्टोमादिकर्मणि साक्षात्कर्तृत्वे प्राप्ते, तत्राऽप्राप्तमृत्विजां कर्तृत्वं दक्षिणादाननियमेन प्राप्यते। दक्षिणादानविधिर्हि ऋत्विगानमनरूपदृष्टार्थत्वे सम्भवति, नाऽदृष्टार्थः कल्पयितुं युक्त इति, दक्षिणादानेनैवर्त्विजः आनमयितव्याः, न तु सामाद्युपायान्तरेणेति नियमविधिः सम्पद्यते। ततश्च तेषां दक्षिणया परिक्रीतानां क्वचिद्विनियोगापेक्षायां वस्तुसामर्थ्यरूपाल्लिङ्गाद्धविस्त्याग-दक्षिणादानादेर्द्रव्योत्सर्गादन्यत्र कर्मणि कर्तृत्वेन विनियोगः, तत्प्रयोजकत्वेन प्रधानवाक्यावगतं यजमानस्य तत्र कर्तृत्वमिति संपद्यते।

"राजन्य-वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषामि" आप० श्रौ० सू०-ति विध्यधीननाराशंसादिनियमानुनिष्पादी तुल्यकल्पानामेव सत्रे अधिकारः इति नियमः। नाराशंस-तनूनपान्मन्त्रयोर्द्वितीयप्रयाजस्थानपठितयोरव्यवस्थितविकल्पे प्राप्ते, पुरुषभेदेन व्यवस्थार्थो "राजन्य-वासिष्ठादीनामि"ति विधिस्तावन्नियमविधिः, ततश्च सर्वेऽपि नाराशंसकल्पा इति वा; सर्वेऽपि तनूनपात्कल्पा इति वा; तुल्यकल्पा एव सर्वे सत्रेऽधिकुर्वन्ति, न भिन्नकल्पा अपीति नियमो लभ्यते। भिन्नकल्पानां सत्रे संभूय प्रवृत्तौ तदन्तर्गतप्रयाजेष्वन्यतरकल्पस्यैवाऽऽश्रयणीयतया केषां चित्क्रतुवैगुण्यप्रसङ्गात्।

"यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदि"ति विध्यधीनप्रयाजनियमानुनिष्पादिनी तत्समुच्चयप्राप्तकार्यान्तरपरिसंख्या। अत्र हि यथा द्रव्यापेक्षाणां प्रयाजानां पाक्षिकानेकद्रव्यप्राप्तौ जौहवाज्येनैव प्रयाजाः कर्त्तव्या इत्युपायनियमोऽस्ति, तथा कार्याकाङ्क्षस्य जौहवाज्यस्य पाक्षिकानेककार्यप्राप्तौ जौहवाज्येन प्रयाजा एव कर्त्तव्या इति कार्यनियमः अप्यस्ति। प्रत्यक्षश्रुत्या जौहवाज्यस्य, प्रयाजानां च परस्परान्वये कृते प्रयाजानां द्रव्याकाङ्क्षायाः, जौहवाज्यस्य कार्याकाङ्क्षायाश्च शान्त्या लिङ्गात्प्रयाजानामनियतद्रव्यकल्पनस्येव जौहवाज्यस्याऽनियतकार्यकल्पनस्याऽप्यप्रवृत्तेः, तेन च कार्यनियमेन-परिसंख्याऽपि लभ्यते, प्रयाजानुयाजाज्यभागोपांशुयाज-पार्वणहोम-नारिष्ठहोमानां द्रव्याकाङ्क्षाणामुपस्तरणाभिघारण - कपालाञ्जन - सदनकरणालङ्करणानाञ्चाऽऽज्याकाङ्क्षाणां कार्याकाङ्क्षेषु जौहवाज्यादिषु त्रिष्वेव प्रवर्त्तमानानां मध्ये, प्रयाजेषु जौहवाज्यं प्राप्नुवत्सु, अन्येषामपि केषां चित्तैः समुच्चित्य प्राप्तेरवश्यंभावात्।

नन्वेवं सति कार्यांशे परिसंख्यैव स्यात्, न नियमः। उच्यते। स समुच्चयः कार्यविशेषनियतो न भवति। न हि जौहवाज्ये एतेषां कार्याणां समुच्चितानां प्राप्तिः, औपभृताज्ये एतेषामिति कार्यविशेषनियते समुच्चये किञ्चिन्नियामकमस्ति। अतो यान्येव कानिचित्कार्याणि जौहवाज्ये समुच्चित्य प्राप्नुवन्ति तान्येव, ततोऽन्येषां केषांचित् कार्याणां तत्र समुच्चित्य प्राप्तौ न प्राप्नुवन्तीति कस्याऽपि कार्यस्य प्रयाजाज्ये नियतप्राप्त्यभावात्, तत्र प्रयाजानामप्राप्तांशपूरणं तावदवश्यं कर्त्तव्यम्। तस्मिन्कृते नैराकाङ्क्ष्येण लैङ्गिककल्पनाप्रतिबन्धाद्भवन्ती, पक्षे प्रयाजैः सह समुच्चित्य प्राप्तिमतामन्येषां कार्याणां निवृत्तिः नखविदलनादिनिवृत्तिवत् तदनुनिष्पादिनीत्यवहितेन मनसाऽऽलोचनीयम्।

आतिथ्यायां "चतुर्गृहीतान्याज्यानि भवन्ती"ति विध्यधीना तत्र प्रकृतिप्राप्तौपभृतचतुर्गृहीतान्तरपरिसंख्या, तदनुनिष्पादिनी प्रकृतौ बर्हिःप्रयाजोपक्रमे प्रयाजार्थमौपभृताज्यादर्धं समानेतव्यमित्यस्याऽर्थस्य प्राप्तिः। तस्य विधेरभावे हि "यदुपभृति प्रयाजानुयाजेभ्यस्तदि"ति विधिवशादौपभृताज्यं सर्वमपि प्रयाजानुयाजसाधारणं स्यादिति "समं स्यादश्रुतत्वादि" १०-३-१३-५३। ति न्यायेनौपभृतेऽनुयाजत्रयार्थमर्धाधिकमवशेषणीयमिति प्रयाजद्वयार्थादर्धान्न्यूनमेव समानेतव्यं प्राप्नुयात्।

ननूभृत्यष्टगृहीतमेकहविर्न भवति, किन्तु चतुर्गृहीतं हविर्द्वयम्; यत् "चतुर्गृहीतं जुहोती"ति विधिना चतुर्ग्रहणसंस्कृतस्याऽङ्गत्वावगमादिति निर्णीतं चतुर्थे। तथा च "यदुपभृती"तिविधिः प्रयाजार्थमेकं चतुर्गृहीतम्, अनुयाजार्थमपरमित्यस्मिन्नर्थे पर्यवस्येत्। अतः समानयनविधिनार्धमेव समानेतव्यमिति प्राप्नुयादिति चेत्। नैवम्। तथा व्यवस्थापकविध्यन्तराभावे "यदुपभृती"त्यविशेषविधानेन चतुर्गृहीतद्वयस्याऽपि प्रयाजानूयाजार्थत्वप्राप्तेरनिवार्यत्वात्। न चैकस्मिन् यागे हविर्द्वयं नाऽन्वेतीति शङ्क्यम्। वचनबलादेकैकस्य चतुर्गृहीतस्य हविषोऽनेकप्रयाजार्थत्ववत्, अनेकानुयाजार्थत्ववच्चतुर्गृहीतद्वयरूपस्य हविर्द्वयस्यैकैकयागार्थत्वस्याऽप्युपपत्तेः, पशुयाग एकस्मिन् हृदय-जिह्वाद्येकादशहविरन्वयदर्शनाच्च। "चतुर्गृहीतान्याज्यानि भवन्ती"त्यनूयाजरहितायामातिथ्यायां विधेः सत्त्वेन तु तेन चतुर्गृहीतान्तरपरिसंख्याबलादुपभृति प्रयाजार्थमेकं चतुर्गृहीतम्; अनुयाजार्थमपरमिति व्यवस्थावगत्याऽर्धमेव समानेतव्यमिति सिध्यति।

ननु चतुर्गृहीतवचनमातिथ्यायां प्रयाजार्थमेव चोदकाच्चतुर्गृहीतद्वयप्राप्तौ तत्रैकमेव चतुर्गृहीतं हविरिति प्रयाजार्थे हविषि वैकृतविशेषवचनतयाऽप्युपपन्नं नोक्तव्यवस्थां गमयेदिति चेत्। सत्यम्। उभयथाऽप्युपपन्नस्य तस्य "न ह्यत्राऽनुयाजान् यक्ष्यन् भवति" इतिवाक्यशेषवशात् व्यवस्था भविष्यति। अनेन हि वाक्यशेषेणोपभृति द्वितीयचतुर्गृहीताभावेऽनुयाजानामभावो हेतूक्तः। ततश्च तत्रैव हेतौ साध्यभूतामातिथ्यायामुपप्रभृति द्वितीयचतुर्गृहीतस्य परिसंख्यामुपनयन् विधिस्तस्य केवलानुयाजार्थत्वम्; प्रथमचतुर्गृहीतस्य केवलप्रयाजार्थत्वञ्च व्यवस्थापयति। अतः तदनुनिष्पादिन्यर्धसमानयनप्राप्तिर्भवति।

## परिसंख्यानुनिष्पादिनियम इति प्रतिपादनम्।

एवं "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टप्; "अत्र ह्येवावपन्ति, अत एवोद्वपन्ती" त्यत्र परिसंख्यानुनिष्पादी नियमः। कथम्? सन्ति विवृद्धस्तोमकाः क्रतवः "एकविंशेनाऽतिरात्रेण प्रजाकामं याजयेदि"त्यादिभिर्विहिताः। तेषु बहिष्पवमानादिषु क्रतुषु सर्वेष्वपि स्तोत्रेष्वेकविंशादिस्तोमविवृद्धिसिध्यर्थं प्राकृतेभ्योऽधिकावापे प्राप्ते "अत्रह्येवावपन्ती"त्युदाहृतवाक्येन पवमानगायत्र्यादिभ्योऽन्यत्राऽऽवापः परिसंख्यायते। तेनाऽऽवापस्य पवमानातिरिक्तेभ्यः स्तोत्रेभ्योऽनिवर्तनात्तद्व्यतिरिक्तेष्वाज्यपृष्ठादिस्तोत्रेष्वगत्याऽभ्यासेनैव संख्यापूरणं कार्यमिति सिध्यति। अनया चाऽऽवापसामान्यस्य स्तोत्रान्तरेभ्यः परिसंख्यया येषु विवृद्धस्तोमकेषु क्रतुषु प्रत्यक्षश्रुतिविहितान्यपि कानिचित्सामानि सन्ति, तेषामपि स्तोमविवृद्धये सर्वस्तोत्रेषु सामान्तरावापे कर्त्तव्ये, प्रत्यक्षश्रुतिविहितानां साम्नामनियमेन यत्र क्वचित्स्तोत्रे प्राप्ता[1]ऽऽवापः पवमानविषयो व्यवतिष्ठते। तथाऽविवृद्धस्तोमकेषुक्रतुषु प्रत्यक्षश्रुतिविहितानां साम्नां स्तोमाधिक्यपरिहाराय प्राकृतसामोद्वापेन तत्स्थानेष्वावपनव्यानामनियमेन यत्र क्वचित्स्तोत्रे प्राप्त आवापस्तद्विषयो व्यवतिष्ठत इत्येवम्—अत्र परिसंख्यानुनिष्पादी नियमः।

---

[1] प्राप्तौ आवापः इति मु० पु० पा०

परिसंख्यानुनिष्पादिनी परिसंख्येति प्रतिपादनम् ।

"हृदयस्याऽग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः" इत्यादिविधिषु परिसंख्यानुनिष्पादिनी परिसंख्या । तथाहि "पशुना यजेतेति" श्रुतं पशोर्यागसाधनत्वं विशसनादिवाक्यबलादवयवद्वारेणेति तावद् व्यवतिष्ठते । यथा "सोमेन यजेते"ति श्रुतं सोमस्य यागसाधनत्वमभिषवादिवाक्यबलाद्रसद्वारेणेति व्यवतिष्ठते। ततश्च पश्ववयवानां सर्वेषामविशेषाद्धविष्ट्वेनाऽवदानप्राप्तौ हृदयादिभ्योऽन्येषामवयवानामवदानपरिसंख्यार्थानि "हृदयस्याऽग्रेऽवद्यती"त्यादीनि, तया चाऽवदानपरिसंख्ययाऽवयवान्तराणां हविष्ट्वपरिसंख्याऽपि लभ्यते ।

अस्या उदाहरणान्तरप्रदर्शनम् ।

एवं "यदुपभृती"ति सामान्यविधिना चतुर्गृहीतद्वयस्याऽप्यविशेषेण प्रयाजानुयाजार्थत्वप्राप्तावातिथ्यायामुपभृति चतुर्गृहीतान्तरपरिसंख्ययाऽर्थवादसमर्पितानुयाजाभावहेतुसमभिव्याहृतया लभ्या प्रथमं चतुर्गृहीतं प्रयाजार्थम्, द्वितीयमनुयाजार्थमिति व्यवस्थाऽपि परिसंख्यानुनिष्पादिनी परिसंख्यैव । तत्र तदनुनिष्पादिनी समानेतव्यस्याऽर्थत्वप्राप्तिरप्यस्तीति सैव प्रागुदाहृता । एवमनुनिष्पादिफलस्याऽप्यनुनिष्पादिफलान्तरमन्यत्राऽप्यूहनीयम् ।

अनुनिष्पादिफलसांकर्यं प्रदर्श्य, अन्यलभ्यफलसांकर्यस्योदाहरणप्रदर्शनम् ।

इत्थमनुनिष्पादिफलसङ्करो दर्शितः । अन्यलभ्यफलसङ्करो यथा—सांग्रहण्यां रात्रिसत्रन्यायलभ्यफलप्राप्तिमूला तत्सन्निधिसमाम्नातानामासनहोमानां तदङ्गत्वप्राप्तिः, अन्यथा तेषामपि रात्रिसत्रन्यायेनैवाऽऽर्थवादिकफलकल्पनया नैराकाङ्क्ष्येण तदङ्गत्वं न सिद्ध्येत् । "उरु प्रथस्वेति पुरोडाशं प्रथयती" त्यत्राऽन्यलभ्यप्रथनप्राप्तिमूलस्तस्याऽध्वर्युकर्तृकत्वनियमः । अप्रथितं हि पिष्टं स्वयमेव पुरोडाशाकृतिशालितया न प्रथते । अतः पुरोडाशान्यथानुपपत्तिलभ्यमेव प्रथनम्; तत्राऽध्वर्युकर्तृकत्वनियमः परं न लभ्यः । तस्मादाध्वर्यवसमाख्यालम्बनेन प्रथने कर्तृनियमसिध्यर्थोऽयं प्रथनविधिः ।

"वाग्वा एषा, यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते, वाचमेवाऽनुप्रयन्ती"त्यत्राऽन्यलभ्यप्राप्तिपूर्विका परिसंख्या । अत्र ग्रहाणामैन्द्रवायवाग्रता न विधीयते । सा हि विधीयमाना धाराग्रहाणामेव विधीयेत; न त्वधाराग्रहयोरुपांश्वन्तर्यामयोरपि । "अच्छया धारया गृह्णाती" त्येतत्सन्निधौ श्रवणेन धाराग्रहाणामेव गृह्णातिनोपादानात् । तेषाञ्च पाठत एव प्राप्तैन्द्रवायवाग्रता, किन्त्वत्र पाठप्राप्ताग्रतानुवादेनैन्द्रवायवादयो ग्रहा एव विधीयन्ते । यद्यपि ते"ऽप्यैन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाती"त्यादिक्रमेण पठितैः प्रातिस्विकविधिभिर्लभ्याः, तथाऽपि तेषामिह पुनावधानं परिसंख्यार्थम् । कथम्? एतत्सन्निधौ "शुक्राग्रान् गृह्णीत प्रतिष्ठाकामः, मन्थ्यग्रानभिचरन्नि"त्यादिवाक्यैर्ग्रहानाश्रित्य शुक्राग्रतादयो गुणाः कामाय विधीयन्ते । तेषां गुणानां धाराग्रहवदधाराग्रहावप्याश्रयत्वेन प्राप्नुत इति, तत्तत्कामनायां शुक्रादय उपांश्वन्तर्यामाभ्यामपि प्रागपकृष्टव्याः स्युः । अस्मिन्विधाने सति तु कामाय विधीयमाना गुणा अनेन विधिना प्राकृतानैन्द्रवायदिग्रहानेवाऽऽश्रित्य विधीयेरन्निति, तयोराश्रयत्वव्यावृत्त्या शुक्रादयः कामनाया

मैन्द्रवायवादेव प्रागपकृष्टव्या इति लभ्यते। तदेतत्सर्वं दशमे "ऐन्द्रवायवस्याऽप्र-वचनादादितः प्रतिकर्षः स्यादि" १०।५।१५।६२। ति पेटिकायां निरूपितम्।

ननु नैतदुदाहरणं युक्तम्, ग्रहाणां क्रत्वर्थत्वस्याऽन्यतः प्राप्त्यसम्भवात्। न चैन्द्र-वायव-मैत्रावरुणादिग्रहविधीनां ज्योतिष्टोमप्रकरणाम्नातत्वात्प्रकरणेनैव तेषां तदर्थत्व-प्राप्तिः, "ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्नि" ति वाक्येन प्रकरणं बाधित्वा तेषां पुरुषार्थत्वस्यैव प्रापणात्। न च शुक्राग्रादिवाक्येष्विवाऽग्रतायाः एव फले विधानमिति शङ्क्यम्। शुक्राग्रतादीनां पाठतोऽप्राप्तत्वादनुवादासम्भवेन विधे-यत्वेऽपि, अत्र पाठप्राप्तैन्द्रवायवाग्रतानुवादेन धात्वर्थभूतानां ग्रहणानामेव फले विधा-नात्, श्रुत्यर्थविधानसम्भवे वाक्यार्थविधानाङ्गीकारस्याऽयुक्तत्वात्। "कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यादि"१०।५।११।६५। ति दाशमिकाधिकरणे तथैव निर्णीत-त्वाच्च। तथाचैतद्विध्यभावे प्रातिस्विकविधिभिरुत्पन्नानामैन्द्रवायवादिग्रहाणां प्राकरणिकं क्रत्वर्थत्वं बाधित्वा कामसंयुक्तं वाक्यं पुरुषार्थत्वमेव प्रापयेदित्यप्राप्तक्रत्वर्थ-त्वप्रापणार्थोऽयं "वाग्वा एषे"त्यादिविधिः। तथा च वाक्यद्वयबलादैन्द्रवायवादीनां खादिरादिवदुभयार्थता भवति। एवञ्चाऽनेन विधिना ग्रहाणां बाधकबाधनेन क्रत्वर्थत्वे प्राप्यमाणे, कामसंयुक्तवचनोपक्रमे समाम्नानबलात्तदाश्रयान्तरपरिसंख्याऽप्यनुनिष्पद्यते इत्यनुनिष्पादिसङ्कर एवैतदुदाहरणं युक्तम्; न त्वन्यलभ्यसङ्करे। तत्राऽपि वा नोदाहरणम्। धाराग्रहाधिकारादेवाऽऽश्रयान्तरपरिसंख्यालाभादिति चेत्, एवं तर्हि सा भूत्तदिहोदाहरणम्।

परिसंख्यानुनिष्पादिन्याः परिसंख्याया उदाहरणान्तरवर्णनम्।

"कपालेषु श्रपयती"त्येतदुदाहरिष्यामः। अत्र न तावत्कपालविधिः "यदाग्ने-योऽष्टाकपालः" इत्याद्युत्पत्तिवाक्यत एव तत्प्राप्तेः, अष्टसु कपालेषु संस्कृतो ह्यष्टाक-पालशब्दार्थः। उक्ततद्धितार्थविवक्षायां कपालशब्दस्याऽष्टन्शब्देन "तद्धितार्थोत्तरपद-समाहारे चे"२-१-५१ ति समासे कृतेऽष्टाकपालप्रातिपदिकात्संस्कृतमित्यर्थे विहित-स्याऽण्प्रत्ययस्य "द्विगोर्लुगनपत्ये" ४।१।८८ इति लुक्स्मरणात्। नाऽपि श्रपणविधिः। "अपश्यन् पुरोडाशं कूर्मभूतं सर्पन्तमि"त्यादिवाक्यशेषेण कपालेषु संस्कार्यस्य पुरोडाशत्वावगत्याऽपूपविशेषरूपस्य पुरोडाशस्य श्रपणं विना निष्पत्त्यसम्भवेन स्वरूपेण श्रपणस्याऽर्थसिद्धत्वात्। नाऽपि श्रपणस्य क्रत्वङ्गत्वप्राप्त्यर्थो विधिः; प्रयोजनाभावात्। न च पुरोडाशविकारेषु चरु-करम्भादिषु श्रपणस्याऽतिदेशेन प्राप्तिः प्रयोजनम्, तेषामपि श्रपणं विना निष्पत्त्यसंभवेनाऽर्थतस्तल्लाभसंभवात्।

ननु श्रपणस्य प्रयोगमध्येऽनुष्ठानलाभार्थो विधिः स्यात्। विधाने हि सति प्रकरणगृहीतत्वेनाऽङ्गस्य सतस्तस्य प्रयोगमध्येऽनुष्ठानं लभ्यते। अन्यथा ह्याज्यवत्पुरो-डाशोऽपि बहिःश्रपणसिद्ध एव गृह्येत। न च कपालेषु संस्कारविधानादन्तःश्रपण-सिद्धिः, बहिःश्रपणसिद्धस्यैव पुरोडाशस्याऽऽज्यस्य गार्हपत्याहवनीययोरिव कपालेष्वधि-श्रपणस्याऽदृष्टार्थत्वोपपत्तेः। न चाऽङ्गाराध्यूहनादिविधिभिस्तत्सिद्धिः; तेषामप्यदृष्टार्थ-त्वोपपत्तेः। तथाऽपि "व्रीहीभिर्यजति, व्रीहीन्प्रोक्षति, व्रीहीनवहन्ती"ति व्रीहीणां

निर्वापादिसंस्कारविधानात्तेषां प्रयोगमध्ये पुरोडाशप्रकृतितयोपादानं लभ्यत इति, तत एव तन्मध्ये श्रपणस्याऽप्यनुष्ठानं लभ्यत इति चेत्। न। तेषां व्रीहिसाधनकनिर्वापाद्यर्थ-कर्मविधायकत्वेनाऽप्युपपन्नतयाऽनन्यथासिद्धप्रकृत्युपादानलम्भकविध्यभावे पुरोडाश-स्याऽप्याज्यस्य दार्शपूर्णमासिकजाघन्यादिवत्स्वरसतो यथासिद्धस्यैव हविष्ट्वेन ग्राह्यत्व-प्राप्तेः। अत एव पशुसोमाधिकरणे "ऐन्द्रवायवं गृह्णाती" त्यादयो यागविधयः, तेषु गृह्णातिकर्मभूतं हवि"रण्व्या धारया गृह्णाती"ति सन्निहितवाक्ये श्रुतं धारासमर्थं द्रवद्रव्यम्, तच्च "सोमं क्रीणाति, सोममभिषुणोति, सोमं पावयती"त्यादिसोमसंस्कारवाक्यपर्या-लोचनया सोमप्रकृतिकमवसीयते। अतः "सोमेन यजेते" त्यत्र सोमशब्दस्तत्प्रख्यन्यायेन तेषां यागानां नामधेयम्, यजेतेति तत्समुदायानुवाद इति पूर्वपक्षे; "अण्व्या धारया गृह्णाती"त्यनेनोदकादिसाधारणस्य यथासिद्धद्रवद्रव्यमात्रस्य हविष्ट्वप्राप्तेरनन्यथासिद्ध-प्रकृत्युपादानलम्भकविध्यभावेन क्रयादिवाक्यान्यर्थकर्मविधायकान्येव स्युः, न तु संस्कारकर्मविधायकतया हविषः सोमरसत्वापादकानि। अतस्तत्प्रख्यन्यायोऽत्र नाऽव-तरतीति दूषणमुक्तम्। तथाऽपि "व्रीहिभिर्यजेते"तिविधिना प्रकृत्युपादानं लभ्यत इति, तत एव प्रयोगान्तःश्रपणं सिद्ध्येदिति चेत्। न। तस्य यागद्रव्यविधायकतया पुरोडाशप्रकृतिद्रव्यविधायित्वाभावात्। तस्मा"त्कपालेषु श्रपयती"ति विधिः, श्रपण-स्याऽन्तःप्रयोगकर्त्तव्यतासिध्यर्थः स्यादिति चेत्।

मैवम्। यागोद्देशेन द्रव्यविधायकस्याऽपि "व्रीहिभिर्यजेते" ति वाक्यस्य पुरो-डाशावरुद्धे यागे व्रीहीणां साक्षात्करणत्वासम्भवेन तत्प्रकृतिद्रव्यविषयत्वपर्यवसायितया; निर्वाप-प्रोक्षणादिविधीनामपि तद्विषयत्वलाभेन तत एव श्रपणस्य प्रयोगमध्यकर्त्तव्यता-सिद्धेः। नन्वेवं सति तस्य श्रपणस्य कपालाधिकरणसिध्यर्थो विधिः स्यात्। न स्यात्। उक्तरीत्या श्रपणस्य प्रयोगमध्यकर्त्तव्यतासिद्धावुत्पत्तिवाक्यावगतस्य कपालेषु संस्कारस्य श्रपणरूपतासिद्धेः। दृष्टासंभवे हि तस्याऽदृष्टार्थाधिश्रयणमात्ररूपता प्राप्नुयात्। ननु तथाऽपि श्रपणस्य समाख्याबललभ्याध्वर्युकर्तृकत्वनियमार्थस्तद्विधिः स्यादिति चेत्। न। "अविदहन्तःश्रपयते"तिप्रैषबलादध्वर्योरैष्टिकहविःश्रपणेषु प्रयोजककर्तृत्वेन; "प्रैषेषु च पराधिकारादि"३।८।५।ति न्यायेन प्रेषितुरध्वर्योरन्यस्यैव पुरोडाशश्रपणेऽपि साक्षात्कर्तृत्वात्, प्रयोजककर्तृत्वस्य च मन्त्रवर्णादेव लाभात्।

श्रपणविधेः प्रकृतिद्रव्यनियमेन चित्रेष्टिगततण्डुले
व्रीहिनियमव्यावृत्तिः प्रयोजनमिति निरूपणम्।

तस्मादन्यलभ्यश्रपणविधानेन प्रकृत्युपादानमाक्षिप्य, आक्षिप्तोपादानापेक्षितप्रकृ-तिद्रव्यनियममात्रपरत्वं व्रीहिशास्त्रस्याऽऽपाद्य, तद्द्वारा चित्रेष्टिगततण्डुलद्रव्यकयागा-त्प्रकृत्युपादाने व्रीहिनियमव्यावर्तनार्थोऽयं विधिः। असति ह्यस्मिन्विधौ व्रीहिशास्त्रमेव जात्यवस्थाविशेषविशिष्टप्रकृतिद्रव्योपादानपर्यन्तमिति, तण्डुलयागादर्थलोपेन श्रपण-निवृत्तावपि; व्रीहिशास्त्रस्य श्रपणमुखप्रवृत्तिकत्वाभावेन चोदकादङ्गान्तरैः सह*प्रयोग-मध्येऽनुष्ठेयतया तत्र तत्प्रकृत्युपादाने तत एवाऽर्थतः सिद्धे व्रीहिशास्त्रं प्रकृति-द्रव्ये जात्यवस्थाविशेषनियममात्रार्थं भवति—प्रयोगमध्ये श्रपणार्थं प्रकृतिद्रव्याण्युपाद-

*

दीतेति यत्, तद्व्रीहिजातीयानि सतुषावस्थानि-इति। तथा च व्रीहिशास्त्रस्य प्रकृत्युपादानप्राप्त्यर्थं श्रपणविध्यपेक्षत्वे सत्येवं व्यवस्था सिध्यति। वैकृते यत्र हविषि श्रपणमपेक्षितम्, तत्र तस्य प्रयोगमध्येऽनुष्ठानम्, यत्र च तत्; तत्र प्रकृत्युपादानम्, यत्र प्रकृत्युपादानम्, तत्र व्रीहिनियमः। एवञ्च सति तण्डुलयागादर्थलोपेन श्रपणनिवृत्तौ तन्मूलकं व्रीहिनियमपर्यन्तं निवर्तत एव।

तदाहु:—

"[1]तण्डुलेभ्योऽर्थलोपेन श्रपणं विनिवर्तते
श्रपणस्य निवृत्तस्य स्वयंकर्तृकता कथम्।
तदधीनमुपादानं प्रकृतेः स्यात्कथंतराम्
तद्वशाद्व्रीहिनियमस्तदभावे कथंतमाम्" ॥

न्या० र० मा० पृ० २८८। इति।

उक्तस्य प्रकृत्युपादाननियमस्याऽऽक्षेपः।

नन्वस्त्वेवम् 'कपालेषु श्रपयती''ति विधिरेवोदाहरणम्। अत्र यदुक्तम्-तदाक्षिप्तप्रकृत्युपादानापेक्षितव्रीहिनियमार्थं व्रीहिशास्त्रम्-इति। तदयुक्तम्। व्रीहिनियमस्य निर्वापादिसंस्कारविधिभिरेव लाभसंभवात्। प्रकृत्युपादानलक्षकविध्यभावे हि प्रकृतिद्रव्यानपेक्षणेनाऽनपेक्षितसंस्कारायोगान्निर्वापादीन्यर्थकर्माणि स्युरिति; ततः प्रकृतिद्रव्यनियमो न सिध्यति। "कपालेषु श्रपयती"ति विधिनाऽऽक्षिप्ते प्रकृत्युपादाने सति, उपादेयप्रकृतिद्रव्यविशेषाकाङ्क्षायां निर्वापादिसंस्कार्यत्वेन श्रुतानां व्रीहीणां च क्वचिद्विनियोगाकाङ्क्षायाम्; कथं व्रीहीणामेवाऽपेक्षितप्रकृतिद्रव्यत्वेनाऽन्वयात्तन्नियमो न सिद्ध्येत्। संस्कार्यद्रव्यापेक्षस्य हि कस्य चिदभावे, वरं "सक्तून् जुहोती"तिवत् द्वितीयाद्यवगतगुणकर्मत्वपरित्यागेनाऽर्थकर्मत्वाङ्गीकारः प्राप्नुयात्। तत्सत्त्वे तु नाऽर्थकर्मत्वप्राप्तिः। अत एवोपनयनसंस्कृतस्य माणवकस्य विनियोगाकाङ्क्षायामुपनयनप्रक्रमाधीतस्य अध्ययनस्य कर्त्रपेक्षासत्त्वात्तत्कर्तृत्वेनाऽन्वय इत्युपनयनस्य नाऽर्थकर्मत्वप्राप्तिः। उक्तं ह्यपशूद्राधिकरणे "स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वेन कर्त्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान् किमर्थं वयमाचार्यनिकटं नीता इत्येवं प्रयोजनमपेक्षमाणान् ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वन्, तेषामेवाऽध्ययनं विधत्ते,न शूद्रस्य" शा० दी०६।१।७ सू०पृ० ४५४। इति। अपि च श्रपणविध्याक्षेपतः प्रकृत्युपादाने प्रसक्तेसति अनियतप्रकृतिद्रव्योपादानप्राप्तौ "तस्मिन्सीद, अमृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः" इति पुरोडाशप्रतिष्ठापनमन्त्रवर्णादेव "छागो वा मन्त्रवर्णादि"६।८।१० सू० ३१,ति न्यायेन" व्रीहिजातीयं प्रकृतिद्रव्यमित्ययमर्थो लभ्यते। किन्तु लाघवात्तस्य पिष्टावस्थायामुपादानं प्राप्नोतीति; सतुषावस्थोपादानं परं ततो न प्राप्नुयात्, तदपि प्रागुक्तरीत्या निर्वापादिसंस्कारकैमर्थ्यापेक्षया लभ्यत इति न काचिदनुपपत्तिः।

---

[1] पार्थसारथिमिश्रेण बाधनिरूपणप्रसङ्गे "श्लोकौ वार्तिककारीया गायन्ति", इत्यादिना तण्डुलेत्यादिश्लोकद्वयं उद्धृतम्।

ननु "यवैर्यजेते"त्याहत्य विहितैर्यवैः प्रकृतिद्रव्याकाङ्क्षाशान्तेर्मन्त्रप्रकाश्यत्व-संस्कार्यत्वान्यथानुपपत्त्या व्रीहीणां प्रकृतिद्रव्यत्वं न सिध्येत्, अतस्तत्सिद्ध्यर्थं व्रीहिशास्त्रमपेक्षितमिति चेत्। मैवम्। न खलु यवानामपि साक्षात्प्रकृतित्वं श्रुतम्, किन्तु श्रुतपुरोडाशावरुद्धयागकरणत्वान्यथानुपपत्त्या कल्पनीयम्। व्रीहीणान्तु मन्त्रप्रकाश्यत्व-संस्कार्यत्वान्यथानुपपत्त्येति को विशेषः,[1] तस्मादनर्थकं व्रीहिशास्त्रमिति चेत्। उच्यते-व्रीहिशास्त्राभावे व्रीहिगतापूर्वीयत्वरूपाप्रतिपत्तेः। संस्कारवाक्यगतेषु व्रीहिपदेष्वपूर्वीयत्वलणा[2] न लभ्येतेति, संस्काराणां यवसाधारण्यं न स्यात्। सति व्रीहिशास्त्रे तेन व्रीहीणां यागापूर्वीयत्वावगतेस्तल्लक्षणायाः संभवात्संस्काराणां यवसाधारण्यं सिध्यति। एवञ्च यद्यपि व्रीहिशास्त्रं व्रीहिनियमार्थं न स्यात्, तस्याऽन्यलभ्यत्वात्, तथाप्यन्यलभ्यनियमद्वारा यवेषु प्रोक्षणादिप्राप्त्यर्थम्;अवहननादिनियमार्थञ्च स्यादित्यनन्तरप्रदर्शनीययोरन्यलभ्यनियममूलकप्राप्त्यन्यलभ्यनियममूलकनियमयोरिदमुदाहरणं भविष्यतीति।

ननु नैतदपि युक्तम्। व्रीहिशास्त्रप्रवृत्त्यधीनव्रीहिपदगतापूर्वीयत्वलक्षणाभावेऽपि यवसाधारण्यलाभसम्भवात्। द्वितीयाश्रुत्या प्रोक्षणावहननादिसाध्यत्वेन श्रुतानां व्रीहीणां प्राक्सिद्धेन स्वरूपेण तत्साध्यत्वासंभवात्,तत्तक्रियाजन्यदृष्टादृष्टसंस्कारविशिष्टतया तत्साध्यत्वसंभवेऽपि तावता फलपर्यवसानाभावादानर्थक्यापत्तेः। फलपर्यवसायिनो रूपान्तरस्य च प्रोक्षणादिसाध्यतार्हस्य व्रीहिष्वनुपस्थितेः प्रोक्षणादिभ्य एव स्वतन्त्रफलकल्पनागौरवापत्तेः; श्रुतविनियोगभङ्गापत्तेश्च। प्रोक्षणादिसाध्यत्वनिर्वाहार्थमेव संस्कृतानां व्रीहीणां श्रपणविध्याक्षिप्तप्रकृत्युपादानापेक्षितप्रकृतिद्रव्यतयाऽन्वयः कल्प्यते। एतावतापि तन्निर्वाहः कथं स्यात्; यदि कल्प्यमानपुरोडाशप्रकृतिभावलभ्यापूर्वसाधनत्वाकारेण व्रीहीणां प्रोक्षणादिसाध्यत्वमित्येतावत्पर्यन्तं न कल्प्येत। तथा कल्पने च प्रोक्षणादीनां यवसाधारण्यं तत एव लभ्यते। इयांस्तु विशेषः-व्रीहिशास्त्रप्रवृत्तौ लक्षितापूर्वसाधनत्वेन यवसाधारण्यम्; तदप्रवृत्तौ कल्पितापूर्वसाधनत्वेन। उभयथाऽपि यवसाधारण्यं लभ्यत एवेति चेत्। न लभ्यत इति ब्रूमः। व्रीहिशास्त्रसद्भावे संस्कारवाक्यश्रुततत्क्रियासाध्यत्वनिर्वाहाय व्रीहिपदानां व्रीहिशास्त्रसमर्पितापूर्वसाधनत्वलक्षणया प्रवृत्तावपूर्वसाधनत्वस्याऽवहननानपेक्षस्रुवादिसाधारण्येन स्रुवादिव्यावर्तनाय तस्मिन् विशेषणीये, व्रीहिगतत्वेन तद्विशेषणे व्रीह्यंशे शक्तिः, अपूर्वसाधनत्वांशे लक्षणेति वृत्तिद्वयविरोधप्रसङ्गात्तण्डुलप्रणालिकात्वेन तद्विशेषणीयम्। तण्डुलप्रणाड्याऽपूर्वसाधनत्वञ्च यवानुगतमिति तद्रूपोद्देशेन विधीयमानानां संस्काराणां यवसाधारण्यं लभ्यते। व्रीहिशास्त्राभावे तु व्रीहीणामपूर्वसाधनत्वस्य प्रागनुपस्थितत्वेन तत्तत्क्रियासाध्यत्वानुपयोगिनापि व्रीहित्वेनैवोपरक्तेषु व्रीहिषु भाविविनियोगमूलकतत्तत्क्रियासाध्यत्वोपयोगिरूपसम्भावनया संस्कारवाक्येषु प्रवृत्तेषु; तन्निर्वाहार्थं पुरोडाशप्रकृतिद्रव्यत्वकल्पनया यद्व्रीहीणामपूर्वसाधनत्वमवगम्यते, तत्स्रुवादिष्वतिप्रसङ्गवारणायोपस्थितेन व्रीहिगत-

[1] कैमर्थ्यवाक्यार्थपेक्षया इति मु० पु० पा०।

[2] लक्षणामिति मु० पु० पा०।

त्वेनैव विशेषयितुं शक्यम्। शब्दसमर्पणीय इव कल्पनीये तस्मिन् वृत्तिद्वयविरोधाभावात्। तद्विशेषितञ्च स्रुवादिभ्य इव यवेभ्योऽपि व्यावृत्तमिति संस्काराणां यवसाधारण्यं न लभ्यते। तथा वैकृतेषु नीवारादिषु तेषामतिदेशेन प्राप्तिरपि न लभ्यते; व्रीहिरूपद्वाराभावात्। अतो व्रीहिशास्त्रमन्यलभ्यनियमद्वारा यवेषु प्रोक्षणादिप्राप्त्यर्थम्, अवहननादिनियमार्थञ्च पर्यवस्यतीति समनन्तरप्रदर्शनीययोर्द्वयोरपि तदुदाहरणमिति युक्तमेव।

प्राप्त्यनुनिष्पादिन्याः प्राप्तेरुदाहरणनिरूपणम्।

अपि चाऽस्ति व्रीहिशास्त्रस्याऽन्यदपि प्रयोजनम्। अश्वशफपरिमाणाय, शेषकार्येभ्यश्चाऽपर्याप्तानां पुरोडाशजातिमात्रसम्पादनसमर्थानामल्पानां व्रीहीणां लाभे; तत्पर्याप्तानपि व्रीहिप्रतिनिधीन्नीवारानपहाय मुख्यानां व्रीहीणामुपादानम्। तदभावे हि पुरोडाशश्रपण-व्रीहिसंस्कारविधिसामर्थ्यात्पुरोडाशप्रकृतित्वेन कल्प्यमाना व्रीहयः पुरोडाशाङ्गत्वमेव प्रतिपद्येरन्, न यागाङ्गत्वम्। ततश्चाऽश्वशफपरिमाण-स्विष्टकृत्-इडा-प्राशित्र-चतुर्धाकरण-भक्षणादीनाम्, व्रीहीणाञ्च पुरोडाशाङ्गत्वाविशेषेण तावत्पर्याप्तव्रीह्यलाभे बहूनां तेषामङ्गानां बाधात्, वरमेकस्य व्रीहिरूपाङ्गस्य बाध इति, नीवारोपादानं प्रसज्येत। व्रीहिशास्त्रसद्भावे तु तेन व्रीहीणां यागाङ्गत्वे बोधिते पुरोडाशावरुद्धे यागे हविष्ट्वेनसाक्षाद्यागसाधनत्वमलभमानानां तेषामरुणाधिकरणन्यायेन श्रपणविध्याक्षिप्तप्रकृत्युपादानापेक्षितप्रकृतिद्रव्यतया पार्ष्णिकान्वयकल्पनेऽपि यागाङ्गत्वमेवाऽवतिष्ठते,न तु पुरोडाशाङ्गत्वम्; श्रुतयागाङ्गत्वनिर्वाहायैव पार्ष्णिकान्वयकल्पनात्। अत एवाऽऽरुण्यस्य पार्ष्णिकान्वयकल्पनेऽपि क्रय एवाऽङ्गत्वम्, न तु द्रव्य इति प्रतिपादितमरुणाधिकरणे। [1]ततश्च बहुभ्यो यागाङ्गभूतेभ्योऽश्वशफपरिमाण-शेषकार्येभ्यो व्रीहीणां प्रधानाङ्गतयाऽङ्गगुणविरोधाधिकरणन्यायेन भाष्यकारोक्तगुणमुख्यव्यतिक्रमाधिकरणन्यायेन च, प्राबल्यात्तद्बाधनमनुचितमिति, अल्पानामपि व्रीहीणामुपादानं प्रतिनिधिपादान्त्याधिकरणोक्तं लभ्यते। एवं च व्रीहिशास्त्रमुत्पत्तिशिष्टपुरोडाशेन निराकाङ्क्षयागे प्राप्तिरहितानां व्रीहीणां प्राप्तिं कुर्वत्, तन्निर्वाहायाऽन्यलभ्यपुरोडाशप्रकृतिद्रव्यनियमावतरणेऽपि यागाङ्गत्वापरित्यागात्। व्रीहीणां पुरोडाशपरिमाण-शेषकार्यापर्याप्तावप्युपादानं प्रापयति, इति प्राप्त्यनुनिष्पादिन्यां प्राप्तावप्येतदुदाहरणं भविष्यतीत्यलं प्रसक्तानुप्रसक्तथा।

नियमपूर्वकपरिसंख्या-अन्यलभ्यपरिसंख्यामूलकप्राप्तेः
चतुर्थश्लोकव्याख्याने उक्ताया पुनः स्मारणम्।

प्रकृतमनुसरामः। "उपांशु पौर्णमास्यां यजन्ति"त्यत्राऽन्तरालविधिसामर्थ्यलभ्यपौर्णमासीकालनियमपूर्विकामावास्यापरिसंख्या। तत्र हि पौर्णमासीकालविधिनोपांशुयाजस्य फलसंबन्धप्राप्तिवत्, अमावास्यापरिसंख्याऽपि लभ्यत इति समर्थितं चतुर्थश्लोकव्याख्याने। द्वे आहवनीय इत्यत्राऽन्यलभ्यपरिसंख्यामूलाऽऽपराग्निकहोमानां फलसंबन्धप्राप्तिः। इयमपि तत्रैव समर्थिता।

---

१ अतश्च बहुभ्योऽङ्गभूतेभ्यो इ० २ पु० पा०।

अन्यलभ्यपरिसंख्यामूलकनियमस्योदाहरणम्।

एकादश पशोरवदानानि, तानि "द्विर्द्विरवद्यती"त्यत्राऽन्यलभ्यपरिसंख्यामूलो नियमः। कथम्? दर्शपूर्णमासयो "द्विर्हविषोऽवद्यती"ति तावत्परिसंख्या। तदभावे हि "चतुरवत्तंजुहोती"ति विधिबलाद्धोतव्याद्धविष एव चतुरवदानं प्राप्नुयात्, तत्सद्भावे तु हविषो द्विरेवाऽवदानमित्युपस्तरणाभिघारणद्वयवदानविधिप्राप्तप्रचयशिष्टसंख्यानुवादः चतुश्शब्दः सिद्ध्यति। इदं च द्व्यवदानं पाशुकेषु हृदयादिष्वपि चोदकतः प्राप्नोत्येव; तथापि तानि "द्विर्द्विरवद्यती"ति श्रवणमनियमप्राप्तौ नियमार्थम्। पशुप्रकरणे हि यद्यपि "चतुरवत्ती यजमानः, पञ्चाऽवत्तैव वपा कार्या" इत्यपि श्रूयते। तत्र पाशुकावदानमात्रमुद्देश्यम्। न तु वपावदानमेव; हविरार्त्यधिकरणन्यायेनोद्देश्ये वपाविशेषणस्याऽविवक्षितत्वात्। ततश्च सर्वेष्वपि पाशुकावदानेषु हविरवदानत्रित्वेनोपस्तरणवृद्ध्या, अभिघारणवृद्ध्या वपायामिव हिरण्यशकलेन वा पञ्चसंख्या सम्पादनीयेति प्राकृतस्य द्व्यवदानस्याऽनियमः प्राप्तः, तत्र नियमः क्रियते—हवींषि यथाप्रकृति द्विरेवाऽवदेयानि, पञ्चसंख्या तु प्रकारान्तरेण सम्पादनीया—इति।

अन्यलभ्यपरिसंख्यापूर्वकाऽनन्यलभ्यपरिसंख्याया उदाहरणम्।

"अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यत्राऽन्यलभ्यपरिसंख्यापूर्विका परिसंख्या। इदं हि नाऽग्निहोत्रस्य स्वर्गार्थत्वप्राप्त्यर्थम्; एतदभावेऽपि "तत्सर्वार्थमनादेशादि"ति विश्वजिदधिकरणपूर्वपक्षन्यायेनाऽनिर्दिष्टफलस्याऽग्निहोत्रस्य विनिगमनाविरहेण सर्वफलार्थत्वं प्रापयता स्वर्गार्थत्वस्याऽपि प्राप्तिसम्भवात्। नाऽपि स्वर्गेतरफलपरिसंख्यार्थः; तस्या अपि "सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वादि"ति तत्सिद्धान्तन्यायलभ्यत्वात्। अतोऽग्निहोत्रस्याऽन्यलभ्यस्वर्गसंबन्धबोधनद्वारा तत्संनिधिसमाम्नातानामनिर्दिष्टफलानां कर्मणां फलवदफलवन्न्यायेन तदङ्गत्वप्राप्त्यर्थम्; एतदभावे ह्यग्निहोत्रस्य विश्वजिन्न्यायेन फलकल्पने विनिगमनाविरहात्तेषामपि तेनैव न्यायेन फलकल्पना स्यादिति; तेषामग्निहोत्राङ्गत्वं न प्राप्नुयात्। एवञ्चाऽनेन विधिनाऽग्निहोत्रस्याऽन्यलभ्यस्वर्गार्थत्वप्राप्तिनान्तरीयकतया विश्वजिदधिकरणपूर्वपक्षन्यायप्रसक्तस्य फलान्तरस्य परिसंख्या तत्सिद्धान्तन्यायलभ्या प्राप्यते; अग्निहोत्रसन्निधिसमाम्नातकर्मणामनन्यलभ्य-तदङ्गत्वप्राप्तिनान्तरीयकतया तेषामपि स्वर्गफलार्थत्वस्य तत्सिद्धान्तन्यायप्रसक्तस्य परिसंख्या अनन्यलभ्या च प्राप्यत इत्येवम्, अत्राऽन्यलभ्यपरिसंख्यापूर्विकानन्यलभ्या परिसंख्या।

अन्यलभ्याऽनन्यलभ्यपरिसंख्याफलसाङ्कर्यस्योदाहरणम्।

यद्यग्निहोत्रस्य यावज्जीववाक्येन प्रत्यवायपरिहारार्थत्वावगत्या तस्य तत्सन्निधिसमाम्नातानां कर्मणाञ्च फलाकाङ्क्षाशान्तेः, विश्वजिदधिकरणपूर्वपक्ष-सिद्धान्तन्याययोरुभयोरपि तत्र तेषु चाऽनवतारादिदं वाक्यमग्निहोत्रस्य स्वर्गसंबधप्राप्त्यर्थमेव;न त्वन्येषां तदङ्गत्वप्राप्त्यर्थम्। नाऽपि तदनुनिष्पादिन्यत्राऽनन्यलभ्या तेषां स्वर्गार्थत्वपरिसंख्या अस्तीति मतम्। तदा केवलकाम्यकर्मणो यत्स्वर्गसंबन्धविधानम्, तद्विश्वजिन्न्यायलभ्यस्वर्गसंबन्धमतिक्रम्य तत्सन्निधिपठितकर्मणां तदङ्गत्वप्राप्तिपर्यवसायीति, तत्राऽन्यलभ्यपरिसंख्याफलसंकर उदाहर्त्तव्यः। एवमन्यलभ्यफलसंकरो दर्शितः।

अप्रवृत्तिविशेषकरफलसाङ्कर्योदाहरणस्य दिग्दर्शनम् ।

अप्रवृत्तिविशेषकरफलसंकरोऽपि दिङ्मात्रेणोदाह्रियते । द्वादशाहिकयोस्त्र्यनीकान्तर्गतयोः, गावामयनिकयोस्त्र्यनीकास्थानगतयोश्चाऽऽदिमाग्रताविध्योरप्रवृत्तिविशेषकरप्राप्तिपूर्विका प्राप्तिः । तैर्विधिभिः परमापूर्वसाधनत्वावच्छेदेन, अवान्तरापूर्वसाधनत्वावच्छेदेन चाऽग्रतानां प्राप्तिरनन्यलभ्या क्रियते; न तया प्रवृत्तिविशेषः कश्चित् द्वादशाह-गवामयनयोरनन्यलभ्यः प्राप्यते । तैः प्रापणीयस्य द्वादशाहिकदशरात्रान्तर्गतयोराद्ययोरह्नोरैन्द्रवायव-शुक्राग्रत्वानुष्ठानस्य चोदकात्; गावामयनिकयोराद्ययोरह्नोरैन्द्रवायवाग्रत्वानुष्ठानस्य त्र्यनीकाविधानाच्च लाभसम्भवात् । किन्तु तया तया प्राप्त्या तत्तद्विकारेषु प्रवृत्तिविशेषपर्यवसायिनी प्राप्तिः क्रियते । एतच्च प्रथमश्लोकव्याख्याने स्पष्टमुक्तम् ।

अप्रवृत्तिविशेषकरप्राप्तिपूर्वकनियमस्योदाहरणम् ।

"साम्ना स्तुवीते"त्यत्राऽप्रवृत्तिविशेषकरप्राप्तिपूर्वको नियमः । कथम् ? ऋगक्षरारूढगीतिक्रियारूपस्य साम्नः केवलमृगक्षराभिव्यक्त्यर्थत्वमेव प्राप्तम्; न तु ऋक्साध्यगुणिनिष्ठगुणाभिधानात्मकस्तुत्यर्थत्वमपि । तदनेनैव विधिना प्राप्यते । तत्प्रापणेन च न तत्र कश्चिदनुष्ठाने विशेषो लभ्यते; गीतिक्रियया स्तुतेः साक्षान्निर्वर्तयितुमशक्यत्वात् । अतः क्रम-प्रकरणाभ्यां स्तोत्राङ्गत्वेनाऽवगतानामृचामभिव्यक्तिं कुर्वत्साम तद्द्वारा स्तुतिं निर्वर्तयितुं शक्तमिति; श्रुतस्तुत्यर्थत्वनिर्वाहकानुष्ठानविशेषलाभाय पार्ष्णिकान्वयन्यायेन स्तुत्यर्थास्वृक्ष्ववतरति । ऋगभिव्यक्त्यर्थत्वन्तु साम्नः प्रत्यक्षावगतमिति; न तत्राऽप्राप्तप्रापणं विधिना कार्यम् । अपि तु ऋचामभिव्यक्तौ सामवच्चातुःस्वर्याद्युपायान्तराण्यपि सन्तीति; पक्षेऽप्राप्तस्य साम्नो नियमः कार्यः । अतोऽत्राऽप्रवृत्तिविशेषकरस्तुत्यर्थत्वप्राप्तिपूर्वकः स्तुत्यर्थऋगक्षराभिव्यक्त्युपायत्वेन सामनियमः ।

अप्रवृत्तिविशेषकरप्राप्तिपूर्वकपरिसंख्याया उदाहरणम् ।

"यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीया"दित्यत्राऽप्रवृत्तिविशेषकरप्राप्तिपूर्वका परिसंख्या । इदं हि न तावद्रथन्तरसाम्नि ज्योतिष्टोमे ऐन्द्रवायवाग्रत्वस्य प्राप्त्यर्थम्; पाठक्रमादेव तत्र तत्प्राप्तेः सिद्धत्वात् । नाऽपि बृहत्साम्नि ज्योतिष्टोमे तन्माभूदित्येवमर्थम् । "यदि बृहत्सामा शुक्राग्रानि"ति बृहत्सामत्वपक्षे शुक्राग्रत्वविधानादेव ततो व्यावृत्तिसिद्धेः । किन्तु नैमित्तिकत्वार्थं तस्येदं पुनर्विधानम् । पाठादैन्द्रवायवाग्रत्वमनैमित्तिकं प्राप्नोति, तदेव रथन्तरसामत्वनिमित्तकं क्रियते । एवं प्रकृतौ पाठप्राप्तस्यैन्द्रवायवाग्रत्वस्याऽनेन विधिना नैमित्तिकीकरणादेव द्वादशाहे त्र्यनीकायामाद्यस्याऽह्नश्चोदकप्राप्यमनैमित्तिकमैन्द्रवायवाग्रत्वं नाऽस्तीति; तत्र तद्विधानं विकृत्यपेक्षितं विध्यन्तरेण कृतम् । तेन च नैमित्तिकीकरणेन ज्योतिष्टोमे न कश्चिदनुष्ठाने विशेषो लभ्यते, किन्तु तस्मिन्पाठप्राप्तस्यैन्द्रवायवाग्रत्वस्याऽविशेषेण सर्वासु विकृतिषु चोदकप्राप्तौ बृहद्रथन्तरान्यसामभ्यः, तदुभयसामभ्यश्च विकृतिभ्यो निमित्तराहित्येन तद्व्यावृत्तिर्लभ्यते इत्येवमत्राऽप्रवृत्तिविशेषकरनैमित्तिकत्वप्राप्तिपूर्वकैन्द्रवायवाग्रत्वस्य निमित्तरहितविकृतिभ्यः परिसंख्या ।

अप्रवृत्तिविशेषकरनियमपूर्वकप्राप्ति-नियम-परिसंख्यानामुदाहरणम् ।

अप्रवृत्तिविशेषकरनियमपूर्विकाः प्राप्ति-नियम-परिसंख्याः । यथा यस्य ऋग्वेद-यजुर्वेदयोः श्रूयमाणस्य सोमविकारस्याऽन्यतरत्राऽङ्गभूयस्त्वाभावेन "भूयस्त्वेनोभयश्रुती"३।३।१०। त्युक्तविनिगमनाविरहादुभयत्राऽपि विधिः स्वीकर्त्तव्यः । तत्र "उच्चैर्ऋचा क्रियते, उपांशु यजुषे"ति विहितयोर्वेदस्वरयोर्विकल्पे प्राप्ते, तस्मिन्प्रकृतितः प्राप्नुवन् "यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती"ति यज्ञभागस्वरविधिर्नियमविधिरापद्यते । स च-कर्मणि साक्षात्स्वरस्याऽनुष्ठातुमशक्यत्वात्, पार्ष्णिकान्वयेनोपांशुत्वस्य कर्माङ्गत्वं निर्वोढुं तदङ्गमन्त्रेष्ववतरति-इति । तेन ये केवलमृग्वेदे, सामवेदे वा विहितास्तन्मन्त्राः; तेषूच्चैस्त्वस्यैव प्राप्तत्वेन, अप्राप्तस्योपांशुत्वस्य प्राप्तिर्भवति । ये तु मन्त्रा यजुर्वेदेऽपि विहिताः; तेष्वनियतप्राप्तस्योपांशुत्वस्य नियमोऽपि भवति । तेनैवोपांशुत्वनियमविधिना दीक्षणीयादिषु चोदकप्राप्तानामैष्टिकानां मध्ये मन्द्र-मध्यमोत्तमस्वराणां परिसंख्याऽपि लभ्यत इत्येवम्, प्रवृत्तिविशेषकरनियमपूर्वकप्राप्ति-नियम-परिसंख्यानां तिसृणामपि विकृतिविशेषप्राप्तयज्ञभागस्वरविधिरेवोदाहरणम् । इदञ्च सर्वमनुपदमेव स्फुटीकरिष्यते ।

अप्रवृत्तिविशेषकरपरिसंख्यापूर्वकप्राप्ति-नियम-परिसंख्यानामुदाहरणम् ।

अप्रवृत्तिविशेषकरपरिसंख्यापूर्विकाः प्राप्ति-नियम-परिसंख्याः । यथा "दीक्षाः सोमस्य, दक्षिणाः सोमस्ये"ति कर्तृसंस्काररूपाया दीक्षायाः कर्तृद्वारा प्रयोगाङ्गत्वाद्दक्षिणायाः साक्षात्प्रयोगाङ्गत्वाच्च । प्रयोगान्तर्गते प्रधाने सोमयागे, तदङ्गकलापे च ज्योतिष्टोमप्रकरणविहितस्य दीक्षा-दक्षिणस्य शेषिणि प्राप्ते; वचनद्वयमिदमङ्गकलापस्य तच्छेषित्वव्यावर्त्तनार्थमिति तावदुभयत्र परिसंख्या निर्विवादा सा च न ज्योतिष्टोमे प्रवृत्तिविशेषकरी । दीक्षादक्षिणस्याऽङ्गप्रधानार्थत्वे केवलप्रधानार्थत्वे च क्रत्वङ्गभूतयम-नियम-संकल्परूपदीक्षानुष्ठाने 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः" इति तदर्थविहितदीक्षणीयानुष्ठाने "दण्डेन दीक्षयती"त्यादिवचनविहिततदभिव्यञ्जकदण्डधारणाद्यनुष्ठाने द्वादशशतदक्षिणादाने च विशेषाभावात् । न च दक्षिणा अङ्गप्रधानार्थत्वेऽङ्गप्रधानकर्तृभ्यो देया; केवलप्रधानार्थत्वे प्रधानकर्तृभ्य एवेति विशेषो वक्तुं शक्यते । यतः केवलप्रधानार्थत्वेऽप्यङ्गकर्तृभ्य ऋत्विग्भ्य एव देया; न तु प्रधानकर्त्रे यजमानाय, तस्य स्वत एव फललाभाय प्रधानानुष्ठाने प्रवृत्तस्य दक्षिणादानेनाऽनानमयितव्यत्वात् । यजमानेनात्मनि संकल्प्यमानस्य दक्षिणाद्रव्यस्य स्वत्त्वत्यागासम्भवाच्च, किन्तु सोमाङ्गविकारेषु काम्यपश्वादिष्वतिदेशेन दैक्षपशुधर्मातिदेशप्राप्तौ, दीक्षा-दक्षिणन्तेभ्यो व्यावर्तयन्ती तेष्वेवाऽनुष्ठानविशेषोपयोगिनी । अतोऽत्राऽप्रवृत्तिविशेषकरी, सोमाङ्गेषु दीक्षा-दक्षिणपरिसंख्यां मुखीकृत्य प्रवृत्ता सोमाङ्गविकारेषु तत्परिसंख्या ।

अप्रवृत्तिविशेषकरपरिसंख्यापूर्वकप्राप्ति—नियमयोरपीदमेवोदाहरणम् ।

नन्वत्र सोमाङ्गविकारेषु दक्षिणापरिसंख्योक्तिरनुपपन्ना, सोमाङ्गस्य अग्नीषोमीयपशोर्विकारेष्वनुक्तदक्षिणेषु काम्य-नैमित्तिकादिषु पशुषु ऋत्विगानमनाय

दक्षिणापेक्षायां स्वप्रवृत्तावङ्गभूतदक्षिणायां चाऽसत्याम्, तत्र प्रसङ्गादुपकारकत्वं प्रतिपन्नायाः सोमाङ्गदक्षिणाया एव ग्राह्यत्वादिति चेत्। मैवम्। तथा सति "दक्षिणाः सोमस्ये" त्यस्याऽत्यन्तवैयर्थ्यप्रसङ्गात्। साक्षात्प्रकृतावदृष्टमपेक्षितं मूलप्रकृतितो ग्राह्यमिति शतोक्थ्यादिपु दृष्टत्वेन तद्वदिहेष्टितोऽन्वाहार्यदक्षिणाग्रहणोपपत्तेश्च। एवं चाऽनुक्तदक्षिणकाम्यादिपशुभ्यः सौमिकदक्षिणापरिसंख्यया प्राकृतोऽन्वाहार्यनियमः प्राप्यते। ततश्च दृष्टादृष्टोपकारार्थं तदीयं धर्मजातमपि प्राप्यते इत्यप्रवृत्तिविशेषकरपरिसंख्यामूलप्राप्तिनियमयोरप्येतदेवोदाहरणम्। ननु विधीनामप्रवृत्तिविशेषकरे फले न पर्यवसानमिति; ततोऽन्यत्फलं यदि मृग्यम्; त"दोपांशु-पौर्णमास्यां यजन्नि"त्याद्युदाहरणेषूपांशुयाजादीनां स्वर्गसंबन्धादिना प्राधान्यप्राप्तिः फलं न स्यात्। तेषां प्राधान्ये पराङ्गत्वे चाऽनुष्ठाने विशेषाभावादिति चेन्मैवम्। प्राधान्ये सति तदपचारे प्रधानविस्मरणादिप्रायश्चित्तप्राप्तिर्विकृतिपु चाऽतिदेशनिवृत्तिरित्यादिफलान्तरपर्यवसानस्य तदाऽपि वक्तुं शक्यत्वात्। एवमाश्रयभेदेन विधिनियमपरिसंख्यालक्षणानामाश्रयभेदे प्रथमचरमभावाभ्यां तत्फलानां च संकरो दर्शितः।

### आश्रयभेदेन विधित्रयस्य फलसाङ्कर्यमभिधाय, आश्रयभेदं विनाऽपूर्व—नियमविधिसाङ्कर्यस्य प्रतिपादनम्

विनैव त्वाश्रयभेदं तत्रैवोद्देश्ये तस्यैव विधेयस्याऽप्राप्ति-पक्षप्राप्तिभ्यामपूर्वविधि-नियमविधिलक्षणसांकर्यमपि ज्योतिष्टोमगते यज्ञभागस्वरविधौ दृश्यते। तथा हि—यद्यपि ज्योतिष्टोमस्य याजुर्वेदिकत्वात्साङ्गस्य तस्य यजुर्वेदविहितत्वोपाधिना उपांशुस्वरत्व"मुपांशु यजुषे"ति वेदस्वरविधिनैव सिद्धम्। तथाऽप्यग्नीषोमीयात्प्राचीनेषु तदङ्गेषु यजुर्वेदविहितत्वोपाधिमनपेक्ष्य स्वरूपेणोपांशुत्वस्य प्राप्त्यर्थोऽयं यज्ञभागस्वरविधिः। ततश्च ऋग्वेदेन, सामवेदेन वा विहितं ज्योतिष्टोमविकारं प्राप्नुवत्स्वपि तेष्वयं विधिः प्रवर्तते; न तु याजुर्वेदिकस्वरविधिरिव न प्रवर्तते, यजुर्वेदविहितत्वोपाध्यनपेक्षत्वात्। तेषु च प्रवर्त्तमानोऽयमपूर्वविधिः सम्पद्यते। ऋग्वेद-सामवेदविहित-कर्माङ्गभावमापन्नेषु तेषु तत्तद्वेदविहितत्वोपाधिकोच्चैस्त्वस्य प्राप्त्या कथं-चिदप्युपांशुत्वस्य प्राप्त्यभावात्। यजुर्वेदेन वेदान्तरेण च विहितं ज्योतिष्टोमविकारं प्राप्नुवत्सु तु तेषु प्रवर्तमानोऽयं विधिर्नियमविधिः सम्पद्यते। तेषु यजर्वेदविहितत्वोपाधिकस्योपांशुत्वस्याऽपि पक्षे प्राप्तिसत्त्वात्। तदेवमस्मिन् यज्ञभागस्वरविधौ विकृतिविशेषप्राप्ते सत्यन्तरेणैवाऽश्रयभेदमपूर्व-नियमविधिसङ्करो जायते।

यद्यप्ययं विधिरग्नीषोमीयात्प्राचीनेष्वपि प्रवर्ग्य-तदङ्गेषु न प्रवर्तते, "उच्चैः प्रवर्ग्येण चरन्ती" ति तेषामुच्चैस्त्वविधानात्। दीक्षणीयादिप्रधानेष्वपि न प्रवर्तते। "यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायामि" ति तेषामपि स्वरान्तरविधानात्; तथापि प्रवर्ग्य-तदङ्गेभ्यो दीक्षणीयादिप्रधानेभ्यश्च व्यतिरिक्तेष्वग्नीषोमीयात्प्राचीनेष्वङ्गेषु प्रवर्तत एव।

ननु प्रवर्ग्याङ्गवद्दीक्षणीयादीनामङ्गानि किमिति न पर्युदस्तानि ? उच्यते। प्रवर्ग्येणेति तृतीयासंयोगात्प्रवर्ग्यकरणिकायां भावनायामुच्चैस्त्वस्य विधिः, तदन्तर्गतानि चाऽङ्गानीतिः; उच्चैस्त्वस्याऽङ्गप्रधानार्थता। यथा 'अप्स्ववभृथेन चरन्ती" त्यवभृथकरणिकायां भावनायां विधीयमानानामपाम्; न तथेह तृतीयासंयोगो ऽस्ति। अतो यथा "यज्ञाथर्वणं वै काम्या इष्टयः, ता उपांशु कर्त्तव्याः" इत्यत्र श्रुतमुपांशुत्वं काम्यशब्दोक्तानां प्रधानानां विधीयमानं तेषामेव भवति; एवं दीक्षणीयादीनां विधीयमानः स्वरोऽपि दीक्षणीयादिशब्दोक्तानां प्रधानानामेव भवति। इयांस्तु विशेषः-वैशेषिके स्वरे प्रधानमात्रविषये सति काम्येष्ट्यङ्गेषु दर्शपूर्णमासयोः "प्राक् स्विष्टकृतः प्रथमस्थानेन, मध्यमेनेडायाः; शेषं तृतीयस्थानेने"ति विहितं स्वरवैचित्र्यं चोदकात्प्राप्नोति। दीक्षणीयाद्यङ्गेषु तु तदपि बाधित्वा वैशेषिको यज्ञभागस्वरविधिः प्राप्नोति-इति। एवं च प्रवर्ग्यतदङ्गदीक्षणीयादिप्रधानव्यतिरिक्तेष्वग्नीषोमीयात्प्राचीनेष्वङ्गेषु प्रवर्तमानो यज्ञभागस्वरविधिः प्रकृति-विकृतिरूपयाजुर्वैदिकक्रतुगतेषु याजुर्वैदिकत्वोपाधिना प्राप्तमप्युपांशुत्वं स्वरूपेण प्रापयन्नपूर्वविधिर्भवति, ऋग्वेद-सामवेदविहितक्रतुगतेषु तेषु कथमप्यप्राप्तं तत्प्रापयन्नपूर्वविधिर्भवति। यजुर्वेद-तदितरवेदविहितक्रतुगतेषु पक्षप्राप्तं नियच्छन्नियमविधिर्भवति-इति वक्तव्य एवाऽत्राऽपूर्वनियमविधिसंकरः।

विधि-नियम-लक्षणसाङ्कर्यमनुपपन्नमिति शङ्का।

स्यादेतत्-दीक्षणीयादीनामङ्गेषु चोदकानीतेनैष्टिकस्वरेण तदुपजीविप्रयोगचनाश्रयस्य वेदस्वरस्यापवादे प्रसक्ते तत्प्रतिप्रसवार्थो यज्ञभागस्वरविधिः; न तु याजुर्वैदिकत्वानपेक्षोपांशुत्वविधानार्थः। अत्यन्ताप्राप्तविधानात्प्राप्तप्रतिप्रसवविधानस्य लघुत्वात्। अत एव कृष्णले श्रपणविधिः प्राकृतश्रपणस्य चोदकात् प्राप्यमाणस्य प्रयोजनाभावान्निवर्तमानस्य प्रतिप्रसवार्थः; न त्वत्यन्ताप्राप्तश्रपणविधानार्थो विधिः, गौरवापत्तेरिति; प्राकृतश्रपणधर्माणां तत्र प्राप्तिरुक्ता तन्त्ररत्ने। नन्वेवं सति यज्ञभागस्वरविधिरैष्टिककर्ममात्रविषयः स्यात्, तत्रैवाऽपवादप्राप्तेरग्नीषोमीयप्राचीनसमस्ताङ्गविषयो न स्यादिति चेत्। माभूत्। विधिलाघवानुसारेण तन्मात्रविषयोऽस्तु। अङ्गीकृतं हि निगदाधिकरणे-नियमविधिलाघवानुसारात् "उपांशु यजुषेति" वाक्यं निगदातिरिक्तयजुर्विषयम्-इति। अङ्गीकृतं च पत्नीसंयाजाधिकरणे "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इति द्वादशाहिकं वाक्यं नियमविधिलाघवानुसारात्प्रागुत्तमादहः पत्नीसंयाजान्तत्वविधायकम्-इति। तस्माद्यज्ञभागस्वरविधेरैष्टिककर्मव्यतिरिक्तेषु प्राप्त्यभावात्;तेषु प्रवर्तमाने तस्मिन्विधि-नियमलक्षणसांकर्यमित्युक्तमयुक्तमिति चेत्। उच्यते॥ यत्किञ्चिदिति-यद्यदितिशब्दवद्वीप्सायां प्रसिद्धः; वीप्सा च व्याप्तुं साकल्येन संबद्धुमिच्छा। तथा च यत्किञ्चिदित्यनेनाऽग्नीषोमीयप्राग्भाववर्तिनः सकलस्याप्यङ्गस्योपांशुत्वसंबन्धे तात्पर्येऽवसीयमाने कथं किंचिद्विषयतया सङ्कोचः क्रियेत। "यद्यप्युच्चैः प्रवर्ग्येण चरन्ती" त्यादिनिरवकाशविध्यंन्तरबलात्सङ्कोचोऽस्ति; तथाऽपि लाघवमात्रानुसारात्स न युक्तः। न हि लाघवमस्तीति श्रुतं हातुं शक्यम्।

यत्किञ्चच्छब्दस्य वीप्सार्थ इवाऽज्ञातार्थत्वविषयत्वं भवत्वित्याशङ्का ।

ननु यत्किञ्चिच्छब्दो वीप्सितार्थ इवाऽज्ञातेऽपि प्रागुभवीयप्रत्ययवत्प्रसिद्धः। अस्ति चाऽत्र प्राग्भागवर्तिनामङ्गानां विशिष्याऽज्ञातत्वम्। प्राचीनमितिशब्देन प्राग्भागस्यैव तद्वर्तिनामङ्गानामनिर्दिष्टत्वात्। तथा च यत्किञ्चिदित्यस्याऽज्ञातार्थकत्वोपपत्तेर्नाऽत्र वीप्सानिश्चय इति चेत् ?

अज्ञातार्थकत्वस्वीकारे प्रयोजनाभावेन साकल्यार्थत्वनिर्णयः ।

मैवम्। किमिदमित्यादिप्रश्नोत्तरे यत्किञ्चिदित्यत्राऽज्ञातत्वाऽनादरणीयत्वादिबोध इवात्राज्ञातत्वबोधने प्रयोजनाभावेन प्रवृत्तिविशेषकरस्य साकल्यार्थकत्वस्यैव ग्राह्यत्वात्। यत्किञ्चिदादीनां साकल्यार्थकत्व एव "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा, प्राप्यान्तं कर्मणस्तस्य यत्किं चेह करोत्ययमि" त्यादौ तत्पदेन प्रतिनिर्देशस्य दर्शनाच्च। विशेषाज्ञान विशेषानादरणादिमात्रपरत्वे यत्किञ्चिदिदं यत्किञ्चिदानयेत्यादौ तदप्रयोगात्। अतः प्रवर्ग्य-तदङ्गदीक्षणीयादिव्यतिरिक्तसकलप्राग्भागवर्त्यङ्गसाधारणयाजुर्वैदिकत्वानपेक्षोपांशुत्वविधिरेवाऽत्र स्वीकर्त्तव्यः।

नन्वस्त्वेतदेवम्; तथाप्यस्य विधेः प्रकृत्यन्वयप्रयुक्तमपूर्वविधित्वमेव भवति, न तु विकृतिविशेषान्वयप्रयुक्तं नियमविधित्वमपि। प्रकृतिप्रकरणाम्नातस्याऽस्य प्रकृतिविकृतिसाधारणत्वाभावात् इति चेत्। सत्यम्; उपदेशतस्तथैव, अतिदेशतस्तूपकारमुखेनाऽङ्गवदङ्गशास्त्राणामपि विकृतिप्राप्तौ विकृतिविशेषं प्रतिपद्यमानस्याऽस्य विधेर्नियमविधित्वमापतत्केन वार्यते। यो हि सौर्यादिषु विकृतिष्वितिकर्त्तव्यताकाङ्क्षया प्रकृतिवच्छब्दः कल्प्य इत्युच्यते, स एवाऽतिदेशाद्वैकृतवाक्यशेषतामापन्नः प्राकृताङ्गशास्त्रसमूहः; स एव लाघवार्थं प्रकृतिवदि'ति संग्रहेण निर्दिश्यते। तस्य स्वरूपतः क्लृप्तत्वेऽपि तत्तद्दृष्टादृष्टोपकारवाचिपदयोगस्य; वैकृतविधिवाक्यशेषतायाश्च कल्प्यत्वेन कल्प्यत्वव्यपदेशः। अत एवोक्तं तन्त्ररत्ने "समिधो यजति" "व्रीहीनवहन्ती" ति प्रकृतावयमर्थः-समिदुपकृतोऽवघातवितुषीकृतव्रीहिसम्पादितपुरोडाशसाधनकश्च दर्शः कार्यः इति। ततश्च सौर्योऽपि तद्वत्कर्त्तव्य इत्युक्ते समिदुपकृतोऽवघातवितुषीकृतव्रीहिसम्पादितचरुसाधनकश्च सौर्यः कार्य इत्युक्तं भवति। ततश्च समिदादिशास्त्रं सौर्यशास्त्रस्य वाक्यशेषः सम्पद्यते। अनेनाऽभिप्रायेण भाष्यकारेण पौरोडाशिकं ब्राह्मणं सौर्यादीनां वाक्यशेष इत्युक्तम्; अध्याहाराद्व्यवहितकल्पना ज्यायसी इति।

"यद्येवमपि प्रकृतिवच्छब्दः प्राकृताङ्गशास्त्रसमूहादन्य एव समानार्थकः कल्प्यः शब्दः, न तु स एव। अन्यत्र निबद्धस्य शब्दस्य कार्यमुखेनाऽप्यन्यत्राऽन्वयासम्भवादिति विचिकित्स्येत; तदा यज्ञभागस्वरविधिराश्रयभेदरहितेऽपूर्व-नियमविधिलक्षणसाङ्कर्ये न भवत्युदाहरणम्। किन्त्वाश्रयभेदपौर्वापर्यसहिताऽपूर्वनियमविधिसाङ्कर्ये, तथा हि प्रकृतौ दीक्षणीयादीनामङ्गेषु बाधकबोधनेन प्रवृत्तिविशेषकरोऽपि यज्ञभागस्वरविधिः तद्व्यतिरिक्तेषु प्राचीनपदार्थेषु प्रकृतौ न प्रवृत्तिविशेषकरः; याजुर्वैदिकत्वोपाधिकेन वेदस्वरविधिनैव तेष्वुपांशुत्वानुष्ठानसिद्धेः, किं तु वेदान्तर-

विहितविकृतिगतेषूपांशुत्वप्रापणेन यजुर्वेद-वेदान्तरविहितविकृतिगतेषु तन्नियमेन च सफलः, इत्यप्रवृत्तिविशेषकरप्राप्तिपूर्वकप्राप्ति-नियमयोरिदमुदाहरणं स्यात्। ननु विकृतिगतेष्वपि कर्मसु स्वरप्राप्ति-नियमनाभ्यां न प्रवृत्तिविशेषलाभः; कर्मसु साक्षात्स्वरस्याऽनुष्ठातुमशक्यत्वात्। सत्यम्। तत्राऽप्यन्ततस्तदङ्गमन्त्रावतरणेन सफलता। अत एव प्राक् ऋग्वेद-यजुर्वेदविहितासु विकृतिषु नियमविधिरूपयज्ञ-भागस्वरविधिमुदाहृत्य, तत्राऽप्रवृत्तिविशेषकरनियमपूर्वकप्राप्ति-नियम-परिसंख्याः प्रदर्शिताः। तदेवमाश्रयभेदे सति असति च विधिलक्षणानाम्; आश्रयभेदपौर्वापर्य-योश्च सतोरसतोस्तत्फलानां साङ्कर्यस्य बहुलमुपलम्भात्। तथैव प्रागुदाहृतेषु रथ-न्तरादिविधिषु एकानेकविध्यप्रवृत्तिभ्यां विधि-नियमादिलक्षणसङ्करो न दोषायेत्या-शङ्कयाऽऽह—

यद्येकानेकविध्यप्रसृतिमुखभवः सङ्करो लक्षणानाम्
इष्येताऽन्याश्रयत्वप्रथमचरमताद्युक्तसाङ्कर्यरीत्या।
दैक्षादन्योऽपि दण्डः प्रकृतिजुषि भवेत्प्रैषकार्ये प्रशास्तुः
स्यात् पक्षे स्तोत्रसाम्नां क्रतुनिकरजुषामुत्तरास्वेव गानम् ॥ १० ॥

सत्यमेकानेकविध्यप्रवृत्तिभ्यां लक्षणसङ्करोपगमे रथन्तरपृष्ठादिनियमविधिष्व-निष्टं नाऽपद्यत इति क्वचित्क्वचिदनिष्टमप्यापद्यते। तथा हि "दण्डी प्रैषानन्वाहे-त्यत्र तद्विधिमात्राप्रवृत्तौ परिसंख्यालक्षणं प्रवर्तते, तदा हि "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती" ति विधिना मैत्रावरुणार्थत्वेन सिद्धस्य दीक्षितदण्डस्य प्रयोजनाकाङ्क्षायां तदीयानि दण्डापेक्षाणि सर्वाणि कार्याणि समुच्चित्य प्राप्नुवन्ति। "क्रीते सोमे" इत्यादिविधेरप्यप्रवृत्तौ न तल्लक्षणं प्रवर्तते। तदा दीक्षाव्यञ्जकस्य दण्डस्य यावद्दी-क्षानुवृत्ति दीक्षितेनैव धारणीयतया प्राप्तेः। किन्तु तदा नियमविधिलक्षणं प्रवर्तते। स्थित्वोच्चैरनवानं कर्त्तव्ये प्रैषानुवचने, किंचिदालम्बनसौकर्यापेक्षायामनियमेन यस्य कस्यचिदालम्बनस्य प्राप्तेः। ततश्च तत्र तद्विधिमात्राप्रवृत्त्यपेक्षया परिसंख्या-लक्षणानुगमने दीक्षितदण्ड एव प्रैषानुवचने योजनीयः। "क्रीते सोमे" इति विधे-रप्यप्रवृत्त्यपेक्षया नियमविधिलक्षणानुगमने निरूढपशाविव दैक्षपशावपि दीक्षित-दण्डादन्य एव कश्चिद्दण्डो योजनीयः। न चैतदुपपद्यते। न चोभयमपि विकल्पेन योजयितुं शक्यमिति वाच्यम्। वस्तुतः "क्रीते सोमे" इति विधेः सत्त्वेन तद्वशान्मैत्रा-वरुणार्थत्वेन सिद्धस्य प्रयोजनकाङ्क्षस्य दीक्षितदण्डस्यैव तत्र योजनीयत्वात्। अतः तत्र तद्विधिमात्राप्रवृत्त्यपेक्षया परिसंख्यैव केवलमेष्टव्येति। तत्र "क्रीते सोमे" इति-विधेरप्यप्रवृत्त्यपेक्षया समापतन्नियमविधिलक्षणसाङ्कर्यमनिष्टमेव।

उदाहरणान्तरे नियम-परिसंख्यालक्षणस्य साङ्कर्यप्रदर्शनम्।

तथा स्वयोनिषु स्तोत्रीयमिति विध्यनुसारेण कयोश्चिदन्ययोरप्यृचोर्गाने कर्तव्ये प्राप्ते "यद्योन्यां तदुत्तरयोर्गायती" ति वचनं क्वचिदुत्तरयोः प्राप्त्यर्थम्, क्वचित्तयो-र्नियमार्थमिति प्रागुक्तम्। त"त्रैकं सामे"ति विधेरप्यप्रवृत्तौ यद्योन्यामिति वचनं क्रतु-

साम्नां तद्योनेराच्छिद्योत्तरयोरेव गानप्राप्त्यर्थमिति प्रसज्येत। न चैतदिष्टम्। वस्तुतस्तृचगानप्रापकविधिबलाद्योन्यामिति विधानस्य योनेरनाच्छिद्य क्रतुसाम्नामुत्तरयोरपि प्राप्तिनियमार्थत्वात्।

तत्रैवाऽवहननादिविधिष्वर्थकर्मत्वप्रसञ्जनम्।

इदमुपलक्षणम्-व्रीहिशास्त्रश्रपणविध्याद्यप्रवृत्त्यपेक्षायामवहननादिविधयोऽर्थकर्मविधयः प्रसज्येरन्नित्यादीन्यपि दूषणानि द्रष्टव्यानि। तस्मादाश्रयभेदेन प्रथमचरमभावेन, अन्यथा वा विधि-नियम-परिसंख्यालक्षणफलसाङ्कर्यवदेकानेकविध्यप्रवृत्त्यपेक्षयातल्लक्षणसाङ्कर्यं न युक्तमभ्युपगन्तुमिति तत्तद्विध्यप्रवृत्त्यपेक्षयैव लक्षणान्युपपादनीयानि।

ननु तथा सति नियम-परिसंख्यालक्षणयोर्व्रीहि-यवसाम्नदश्यादिशास्त्रेष्वव्याप्तिः स्यादित्युक्तमिति चेत्? किं कुर्मः?, तत्संग्रहार्थमेकानेकविध्यप्रवृत्त्यपेक्षायां हि बलवन्त्यनिष्टानि दर्शितानि। तस्मादपूर्वविधिलक्षणस्य स्वर्गकामवाक्याद्यव्याप्तिवत्; नियम-परिसंख्यालक्षणयोरपि तदव्याप्तिरनिवार्यैव। अतः सतिसप्तमीपक्षोऽपि न युक्त इति भावः।

इति दशमश्लोकव्याख्या।

---

एकादशश्लोकस्यावतारिका।

अप्राप्त इति सति सप्तमीपक्षे परिसंख्याव्यावृत्तिर्न
भवितुमर्हतीति निरूपणम्।

किञ्चाप्राप्त इत्यस्य सतिसप्तमीपक्षे परिसंख्यानिवर्तकत्वं न लभ्यत इति दूषणान्तरमाह—

**किञ्चाप्राप्ते सतीति प्रभवति परिसंख्यानिवृत्तिं न कर्तुम्**
**नित्याप्राप्तां निवृत्तिं घटयति खलु साऽप्यत्र को वा विशेषः।**
**भावाप्राप्तिर्निषेधात्मकविधिनिकरव्यापकाव्याप्तिदुष्टा**
**सत्यप्येवं निषेधश्रुतिमुखपरिसंख्यासु चातिप्रसक्तिः॥ ११॥**

अप्राप्ते सतीतिविशेषणं परिसंख्यानिवृत्तिं कर्तुं न प्रभवति। यतः परिसंख्याप्यत्यन्तमप्राप्तामितरनिवृत्तिं प्रापयत्येव। तथा च "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त" इति परिसंख्याविधिः प्राप्तविषयोऽपि गर्दभरशनातो निवृत्तौ मन्त्रमप्राप्तायां सत्यांतत्प्राप्तिफलको भवतीति कथं विषयसप्तमीपक्ष इव सतिसप्तमीपक्षे तद्व्यावृत्तिरप्राप्तिविशेषणेन लभ्येत। न ह्यपूर्वविधितः परिसंख्याविधेरप्राप्तप्राप्तिफलकत्वेऽस्ति कश्चिद्विशेषः।

नन्वयमस्ति विशेषः—यत्परिसंख्याविधौ निवृत्तिरूपस्याऽभावस्याऽप्राप्तस्य प्राप्तिः फलम्, अपूर्वविधौ तु भावस्येति भावाप्राप्तिरेव चेहाऽप्राप्तिरित्यनेन विवक्षिता। लोके प्राप्तिशब्दस्य निवृत्तिप्रतिभटवाचित्वेन प्रसिद्धतया भावशब्दाप्रयोगेऽपि तद्विषयत्वलाभादिति चेत्?

एवं सति निषेधात्मकेषु "दीक्षितो न जुहोति, न तौ पशौ करोति" "नातिरात्रे षोडशिनं गृह्णाति" इत्यादिसर्वेष्वप्यपूर्वविधिष्वव्याप्तिः स्यात्; तेषां दीक्षामध्यपश्वतिरात्राद्यप्राप्तपुरुषार्थहोमाज्यभाग - षोडशिनिवृत्त्यादिरूपाभावप्राप्तिफलकत्वात्। न च निषेधाः विधयो न भवन्तीति वाच्यम्। दार्शपूर्णमासिके "नानृतं वदेदि" ति निषेधे सूत्रकृतैव विधित्वस्य व्यवस्थापितत्वात्। नन्वनुवादप्रतियोगिविधित्वं तत्र तस्य व्यवस्थापितम्। तत्र हि तस्य दर्शपूर्णमासप्रकरणे श्रुतस्य "नानृतं वदेदि" तिनिषेधस्य स्मृतिदृष्टपुरुषार्थनिषेधानुवादकत्वमाशङ्क्य क्रत्वङ्गत्वेनाऽनृतवदनवर्जनविधित्वम्; तेन क्रतुमध्येऽनृतवदने पुरुषार्थनिषेधातिक्रमात् प्रत्यवायवत्, क्रत्वर्थनिषेधातिक्रमात् क्रतुवैगुण्यं च भवतीत्युक्तम्। इह तु निषेधप्रतियोगिविधित्वं लक्ष्यरूपम्। अतो न तदव्यापनं दोष इति चेत्। मैवम्। इहाप्यनुवादप्रतियोगिविधेरेव लक्ष्यत्वात्। अपूर्वविध्याद्युदाहरणेषु विधित्वसमर्थनाय प्राप्त्यप्राप्तिविवेचनवत्, भावाभावविवेचनाऽदर्शनात्। भवतु वा विधिमुखप्रवृत्तापूर्वविधीनामेवाऽत्र लक्ष्यत्वाङ्गीकारेण कथञ्चिदव्याप्तिपरिहारः; तथाप्युक्तविवक्षायां निषेधमुखप्रवृत्तपरिसंख्यातिव्याप्तिरनिवार्या। तत्राऽप्राप्तत्वेन प्रापणीयाया इतरनिवृत्तेर्भावरूपत्वात्। यथा "शंय्वन्ता प्रायणीया सन्तिष्ठते, न पत्नीः संयाजयन्ती"ति। अत्र प्रायणीयायाः शंय्वन्तसमापनविधानात्तत उदीच्यानां सर्वेषामङ्गानामकरणे प्राप्ते, न पत्नीः संयाजयन्तीतिवचनं पत्नीसंयाजानेव न कुर्यात्; अङ्गान्तराणि तु कुर्यादिति परिसंख्यारूपेण प्रायणीयायामङ्गान्तरप्राप्त्यर्थम्।

यथा वा शङ्खस्मृतौ तैजसद्रव्यशुद्धिप्रकरणे—

"सूतिकोच्छिष्टभाण्डस्य सुरामद्यहतस्य च।
त्रिःसप्तमार्जनाच्छुद्धिर्न तु कांस्यस्य तापनम्॥"

इत्यत्र मार्जनवत्तापनस्य विधानाभावात्सर्वेषां तैजसानां तापनाकरणे प्राप्ते न तु कांस्यस्येति वचनं कांस्यस्यैव तापनं न कार्यमन्यस्य तु कार्यमिति परिसंख्यारूपेण तैजसान्तराणां तापनप्राप्त्यर्थम्। तथैव व्याख्यातमपरार्केण "तैजसानां सूतिकोच्छिष्टादिके स्वल्पोपघाते यवचूडादिभिरेकविंशतिकृत्वो मार्जनाच्छुद्धिर्न तु कांस्यस्य तापनम्, अर्थात्कांस्यव्यतिरिक्तस्य तापनमपि कार्यमिति गम्यते" इति।

यद्यप्यत्राऽऽद्योदाहरणे वस्तुतः परिसंख्या नेष्यते, शंय्वन्तसंस्थायाः परिसंख्यायाश्च विधिद्वयेन वाक्यभेदस्य तुल्यबलविधिद्वयप्राप्तयोः शंय्वन्तसंस्था पत्नीसंयाजवर्जं कृत्स्नसंस्थयोर्विकल्पस्य प्राप्तविषयत्वेन त्रिदोषायाः परिसंख्यायाश्च परिहाराय न पत्नीः संयाजयन्तीति शंय्वन्तसंस्थाविधेरर्थवादः पत्नीसंयाजाननुष्ठानलाघवेन तत्प्रशंसार्थ इति शंय्विडान्तत्वे विकल्पः स्यादिति दाशमिकाधिकरणे निर्णीतत्वात्। तथाऽपि पूर्वपक्षरीत्यातदुदाहरणम्।

यत्रैवं विध्यन्तरशेषत्वं न सम्भवति तत्र तदधिकरणपूर्वपक्षरीत्या परिसंख्यैवावतिष्ठत इति तथाभूतमुदाहरणमिहान्वेषणीयम्। प्रसिद्धा चान्यत्रापि

"न निलीवसनं धार्यं न भूपालैरनुत्सवे"

इत्यादिषु स्मृतिषु; यज्ञदत्तदेवदत्त-विष्णुमित्रा न भोजनीयाः; उत्सवेष्वपि विष्णुमित्रो न भोजनीय इत्यादिलोकव्यवहारेषु च विशषनिषेधः शेषाभ्यनुज्ञापर इति निषेधमुखपरिसंख्या। अतस्तत्रातिव्याप्तिः स्यादेवेतिभावः।

इत्येकादशश्लोकव्याख्या।

अपूर्वविधिलक्षणघटकाप्राप्तविशेषणविचार द्वारा दोषानुद्भाव्यात्यंतविशेषणार्थ विचारद्वारेण द्वादशश्लोकस्योपक्रमः।

एवमप्राप्तविशेषणविचारमुखेन लक्षणस्य दोषा दर्शिताः। अथाऽत्यन्तविशेषणार्थविचारमुखेनाऽपि तस्य दोषान्दर्शयति।

येनातिव्याप्तिभङ्गः किलनियमविधौ किं तदात्यन्तिकत्वम्
सर्वोद्देश्यानुवृत्तिर्यदि पुनरुदिताव्याप्तयः स्युर्विकल्पे।
प्राप्तोद्देश्यैकदेश अपि खलु कुहचिच्चारितार्थ्यं भजन्तः
श्रूयन्ते सार्वकाम्यप्रभृतिषु विधयस्तेषु चाव्याप्तयः स्युः॥ १२॥

आत्यन्तिकत्वं द्वेधा विकल्प्य सतिसप्तमी—विषयसप्तमीपक्षयोः सम्भावितानां दोषाणां निर्देशः।

येन विशेषणेन नियमविधौ लक्षणस्याऽतिव्याप्तिनिरासो ऽभिमतः; तदप्राप्तेरात्यन्तिकत्वं किं नाम? यद्युच्यते सर्वोद्देशयानुवृत्तिरप्राप्तेरात्यन्तिकत्वम्। अवघातस्य च न सर्वेषु व्रीहिष्वप्राप्तिः; केषुचिद्दर्शपूर्णमासप्रयोगगतेषु व्रीहिष्ववघातस्य स्वत एव प्राप्तेः अन्येषुः विदलनप्राप्तिस्तेष्वेव तदप्राप्तिसत्त्वादिति। एवं तर्हि प्रथमश्लोकोद्भाविताऽव्याप्तयः प्राक् समाहिताः पुनरपि विकल्पमुखेनोन्मज्जेयुः। तथा हि—सर्वोद्देश्यानुवृत्तिरित्यत्रोद्देश्यपदेन प्रापणीयोद्देश्यं विवक्षितम्; प्रकृतिविध्युद्देश्यं वा? आद्ये विषयसप्तमीपक्षोद्भावितवैकृताग्न्यादिविध्यव्याप्तेः। द्वितीये सतिसप्तमीपक्षोद्भाविताग्रताविध्यव्याप्तेश्च पुनरुन्मज्जनापातः। "श्येनचितं चिन्वीत स्वर्गकाम" इत्यादिवाक्यैः स्वस्वोद्देश्येषु स्वर्गादिषु श्येनाकृत्यादिगुणानां प्राप्तौ सत्यामेव स्वर्गाद्युद्देशेन तेषामनुष्ठानम्। वैकृतप्रयोगमध्ये परं न प्राप्तमिति, विकृतिष्वग्न्यादिपुनर्विधीनां तत्प्रापणं फलमित्युपेयते, एवमग्रताविध्युद्देश्येषु द्वादशाहिकगावामयनिकेषु आद्यद्वितीयेष्वहस्सु प्राप्तानामेवाग्रतानां तद्विकृतिषु प्राप्तिर्विधिफलमित्युपेयते। तत्र विकृतिषु प्रापणीयानां श्येनादिगुणानां स्वस्वोद्देश्येषु स्वर्गादिषु

अप्रतानां च विध्यन्वितोद्देश्ये द्वादशाहिकगावामयनिकेष्वहःसु क्वचिदत्यप्यप्राप्तिर्नास्ति कथं सा सार्वत्रिकी समर्थ्येत ।

अपि चोद्देश्यैकदेशे प्राप्तिमन्तोऽपि तदेकदेशान्तरे चरितार्था विधयो दृश्यन्ते यथा "एकस्मै वा अन्ये यज्ञक्रतवः कामायाऽऽह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः, सर्वेभ्यो दर्शपूर्णमासाविति"ति । अत्र ज्योतिष्टोम-दर्शपूर्णमासानां स्वर्गार्थत्वं प्रातिस्विकविधिना प्राप्तमिति फलान्तरेष्वेव विधिचारितार्थ्यम् ।

अभ्युदयेष्टिवाक्यस्य भाष्य—टुप्टकालवम्बनेन पूर्वदेवतापनयः, वक्ष्यमाण—देवतासम्बन्ध इत्यर्थद्वयस्य प्रतिपादनम्

यथा वाभ्युदयेष्टयां "तडुलान्विभजेदिति तण्डुलदधिऽश्रृतानां पूर्वदेवतापनयः; वक्ष्यमाणदेवताभ्यो विभागो वा मध्यमादिवाक्यैस्तेषां देवतान्तरविधानेनैव प्राप्त इति; उपांशुयाजाज्य एव विधिचारितार्थ्यम् । तथा हि "विवा एतं प्रजया पशुभिरर्धयति, वर्द्धयत्यस्य भातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डलान्विभजेद्ये, मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दध्नश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय श्रृते चरुमिति श्रूयते । अत्र चतुर्द्दश्याममावास्याभ्रान्त्या दर्शोपक्रमं कृतवतस्तत्प्रायश्चित्तविधाने; त्रेधा तण्डुलानां मध्यमादिभावेन त्रेधा विभागो न विधीयते; ये मध्यमा इत्यादिवाक्यैस्तत्सिद्धेः, किन्तु सर्वेषां दार्शिकहविषां पूर्वदेवताभ्योऽपनयो विधीयते । विभजेदित्युक्ते ह्ययमर्थोऽवगम्यते यानि संयुक्तानि तानि विभजेदिति । तण्डुलादीनि हवींषि च देवताभिः संयुक्तानि । अतस्तण्डुलशब्दो विभागकर्मत्वेनाऽर्थप्राप्तदार्शिकहविर्मात्रोपलक्षक इति; तेषां पूर्वदेवतापनयो विधीयत इति युक्तम् । अथ वा मनुः पुत्रेभ्यो दायं व्यभजदि तै० सं० काः ३. १. १. ति प्रयोगदर्शनादिह दार्शिकहविषां वक्ष्यमाणदातृत्वादिगुणकाग्न्यादिदेवताभ्यो विभजनं विधीयते, पूर्वदेवतापनयस्त्वर्थसिद्ध इत्येवमस्य वाक्यस्यार्थद्वयं भाष्य-टुप्टीकयोर्दर्शितम् । तत्राऽर्थद्वयेऽपि तण्डुल-दधि-श्रृतेषु न विधेश्चारितार्थ्यं देवान्तरसंयोजनेन पूर्वदेवतापनयस्य; विशेषतो विभजनेन सामान्यविभागस्याप्यर्थप्राप्तत्वात् । किन्तु तण्डुलशब्देन दार्शिकहविर्मात्रोपलक्षकेन लक्ष्यमाण उपांशुयाजाज्ये तस्य चारितार्थ्यम् । उपांशुयाजाज्यस्याऽग्रे देवतान्तरसंयोजनाभावेन पूर्वदेवतापनयस्य सामान्यविभजनस्य चाऽर्थप्राप्त्यभावात् । अत एव पूर्वदेवतापनयपक्षे उपांशुयाजाज्यस्य पूर्वदेवताया अपनयात् देवतान्तरस्य चाऽविधानात् देवतामन्तरेण यष्टुमशक्यत्वादुपांशुयाजस्य लोपः । सामान्यविभजनपक्षे उपांशुयाजाज्यस्याऽपि सामान्येन वक्ष्माणदेवताभ्यो निर्द्दिष्टत्वादग्रे देवतान्तरविशेषस्य चाऽनिर्द्देशाद्वक्ष्यमाणाभ्यः सर्वाभ्यो देवताभ्यो विभज्य दातव्यमिति भाष्य-टुप्टीकयो"रुपांशुयाजे वचनाद्यथाप्रकृति"६।५।२।१०। इत्येतदधिकरणे बह्वृचब्राह्मणानुसारेणामावास्यायामुपांशुयाजसत्तामभ्युपेत्य निरूपितम् ।

पूर्वदेवतापनयसामान्य विभागयोरार्थिकत्वसिद्धिशङ्का ।

ननु तण्डुल-श्रृत-सान्नाय्येष्वपि पूर्वदेवतापनयसामान्यविभागौ नार्थसिद्धौ;

त्रेधा तण्डुलानित्यत्र तदन्यतरविध्यभावे दार्शिकहविषां प्रकृतदेवतातिरिक्तदेवताविशेषाकाङ्क्षाविरहेण मध्यमादिवाक्यानि तेषामपूर्वदेवताविशेषसंयोजनपराणीत्यत्र निर्णायकाभावात्। न हि तदा मध्यमादिशब्दानां प्रकृततण्डुलादिपरत्वे नियामकमस्तीति चेत्।

न यच्छब्दोपबन्धबलात् तण्डुलानां प्रकृतानां ग्रहणे तत्समभिव्याहाराद् दधिशृतयोरपि प्रकृतयोर्ग्रहणमित्युपपत्तेः। न चाऽनपनीतपूर्वदेवतानां तेषां देवान्तराकाङ्क्षाविरहेण तत्संयोजनानुपपत्तिः; पूर्वदेवतापनयाकाङ्क्षाविरहेऽपि तदपनयवद् देवतान्तरसंयोजनस्याकाङ्क्षाविरहेऽपि तत्संयोजनस्य वचनबलादुपपत्तेः। सामान्यतो विभजनपक्षे विनैव पूर्वदेवतापनयं देवतान्तरसंयोजनस्य, तत एव पूर्वदेवतापनयस्याऽर्थसिद्धतायाश्च संप्रतिपत्तेश्च। अतस्त्रेधा तण्डुलानिति विधेरप्युद्देश्यैकदेश एव चारितार्थ्यम्; तस्मात्सर्वोद्देश्यानुवृत्तिप्राप्तिरहितेषूदाहृतविधिष्वव्याप्तिः स्यादित्यर्थः।

इति द्वादशश्लोकस्य व्याख्या।

---

अथ त्रयोदश श्लोकस्य व्याख्या।

स्यादेतत्-सर्वोद्देश्यानुवृत्तिरिह न सर्वासूद्देश्यव्यक्तिष्वप्राप्तेरनुवृत्तिर्विवक्षिता, किंत्वेकस्यामप्युद्देश्यव्यक्तौ सर्वात्मनानुवृत्तिस्तद्व्यापित्वरूपा। एवं च सार्वकाम्यविध्यादिषु नाव्याप्तिः; तेषु स्वर्गातिरिक्तफलोपांशुयाजद्रव्यादिरूपकिञ्चित्किञ्चिदुद्देश्यव्यापकाप्राप्तेः सत्त्वात्। नाऽपि नियमव्यावृत्त्यलाभः; नियमविधौ क्वचिदुद्देश्ये व्यापिकाया अप्रस्प्तेरभावात्। सर्वेष्वपि दार्शपूर्णमासिकेषु व्रीहिष्वाक्षेपादवहननस्य पाक्षिक प्राप्तिसत्त्वात्। न हि "व्रीहीनवहन्ती"ति नियमविध्यभावे केषु चिद्व्रीहिष्ववहननम्; केषुचिद् विदलनादिकं च व्यवस्थितमाक्षेपतः प्राप्यते, येन क्वचिदप्युद्देश्ये तदप्राप्तिर्व्यापिका स्यात्; किन्तु सर्वेष्वपि व्रीहिष्ववहनेन वा वैतुष्यं कार्यं विदलनादिना वेति तदुभयमपि पक्षे प्राप्यते; न चैकत्रोभयानुष्ठानस्य विरुद्धत्वादुभयोः प्राप्तिर्नास्तीति शङ्कनीयम्। न हि प्राप्तिर्नामानुष्ठानमेव; तथा सति क्वचिद्दर्शपूर्णमासप्रयोगे विदलनस्याऽप्यनुष्ठाने नियमविधिविरोधापत्तेः। किन्तु नियमविध्यभावे लोकसिद्धवैतुष्यकारणत्वात्तदर्थमवहननम्; विदलनादिकं वाऽनुष्ठीयेतेत्येवममनुष्ठानतर्कणमात्रं प्राप्तिः, तच्चैकत्राऽपि न विरुद्धं न ह्यविरोधेऽपि नियमविध्यभावे कचित्प्रयोगेऽवहननम्; प्रयोगान्तरे विदलनादिकं चानुष्ठीयेतेत्येवं तर्कः प्रवर्त्तत इति नियन्तुं शक्यते। कंचित्प्रयोगविशेषमेवाऽधिकृत्य नियमशास्त्राभावे इहाऽवहननम् विदलनादिकं वानुष्ठीयेतेत्येवमपि तर्कप्रवृत्तिसम्भवात्। तस्मादुक्तविवक्षायां न कश्चिद्दोष इत्यत आह—

**उद्देश्यव्यापिका सा यदि भवति तदाऽप्यादिमाव्याप्तिबन्धः**
**स्यादव्याप्तिश्च गावामयनिकषडहे पृष्ठसाम्नोर्विधाने।**

अन्यार्थप्रापणोद्यन्नियमहरणयोरप्यतिव्याप्तिरित्थम्
तच्चेत् त्रैकालिकत्वं न तु विधिरपवादापवादस्तथा स्यात् ॥ १३ ॥

एवं विवक्षायामपि प्रथमश्लोकोक्ताऽग्निविध्याद्यव्याप्तिपुनरुन्मज्जनरूपः प्रागुक्तदोषः स्यादेव; तदुदाहरणेषु क्वचिदपि तत्तदुद्देश्येऽप्राप्तेरभावात्। अन्यत्र चाऽव्याप्तिरधिका स्यात्। तथा हि—द्वादशाहे पृष्ठ्यः षडह उत्पन्नः। स च क्रमेण रथन्तर-बृहत्वैरूपवैराजशाक्वर-रैवताख्यपृष्ठस्तोत्रसाधनसामवतां षण्णामह्नां समाहारः। गवामयने पुनः श्रूयते "पृष्ठयः षडहो बृहद्रथन्तरसामा कार्यः" इति। तेन गावामयनिकषडहस्य बृहद्रन्तर एव पृष्ठ-सामनी इति वैरूपादीनि निवर्त्तन्ते। ततश्च षडहोद्देशेन बृहद्रथन्तरविधौ आद्यस्याऽन्ह्नो रथन्तरसामत्वम्, द्वितीयस्य बृहत्सामत्वं च द्वादशाहिकषडहे क्लृप्तमिहाऽपि प्राप्तमित्युद्देश्यव्यापकाप्राप्तेरभावादव्याप्तिः।

बृहद्रथन्तरसाम्नोः समुच्चयविधानमिति शंका।

नन्विहैकैकस्यान्हो बृहद्रथन्तरसामत्वं विधीयते। संसव उभे कुर्यात् गोसव उभे कुर्यादित्यादौ यथा। तत्तु क्वचिदप्यहनि न प्राप्तमिति चेत्। न। प्रकृतौ बृहद्रथन्तरयोः परस्परनैरपेक्ष्येण पृष्ठस्तोत्रसाधनत्वात्तथैव प्राकृतनैरपेक्ष्याऽबाधेन क्वचित् बृहत्, क्वचिद्रथन्तरमिति विधानोपपत्तौ तद्बाधनायोगात्। न च वाच्यं बृहच्च रथन्तरं च बृहद्रथन्तरे बृहद्रथन्तरे सामनी अस्येति बृहद्रथन्तरसामेति द्वन्द्वगर्भोऽत्र बहुव्रीहिः ततश्च द्वन्द्वावगतसाहित्यबलादेकैकस्याह्न उभयसामत्वं विधेयमिति अकृत्वैव द्वन्द्वसमासं बृहत्सामाऽस्य; रथन्तरं सामास्येत्यनेकपदबहुव्रीहिस्वीकारसम्भवात्। न च "द्वन्द्व-तत्पुरुषयोरुत्तरपदे नित्यं समासवचनमि"तिकात्यायनवचनादिह द्वन्द्वसमासो नियत इति वाच्यम्। अत्र द्वन्द्व,तत्पुरुषयोः सतोरन्यच्छन्दरूपम्; असतोश्चान्यद्भवति; तत्र समासकृतरूपनियमार्थं तद्वार्त्तिकप्रवृत्तेः। यथा-वाक्त्वचप्रियः पञ्चगवधनः-इति। अत्र हि द्वन्द्व-तत्पुरुषयोरकरणे "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति गोरतद्धितलुकीति समासान्तप्रत्यययोरप्राप्तेर्वाक्त्वक्प्रियः पञ्चगोधन इतिरूपं सिद्ध्येत्। इह तु द्वेधाऽपि रूपस्याभेदान्न्यायतोऽर्थनिर्णेतव्ये प्रत्येकप्रापिचोदकानुग्रहायाऽनेकपदबहुव्रीह्याश्रयणमेव युक्तम्। यद्यपि द्वन्द्वगर्भ एवाऽत्र बहुव्रीहिः स्यात्; तथापि प्रकृतितः प्राप्तं नैरपेक्ष्यं न बाधितव्यम्;। षडहापेक्षया साहित्यस्याऽर्थप्राप्तस्य तद्विषयत्वोपपत्तेः। अन्यथा बृहद्रथन्तरयोः; षडहसंबन्धस्य; तयोरेकैकस्मिन्नेवाऽहनि साहित्यस्य च विधेयत्वे बृहद्रथन्तरे एवाऽस्य षडहस्य सामनी ते चैकैकस्मिन्नहनि परस्परसहिते कर्त्तव्ये इत्यनेकार्थविधानेन वाक्यभेदप्रसङ्गात्। न ह्यत्र संसवादिवच्चोदकप्राप्तयोर्बृहद्रथन्तरयोः साहित्यमात्रविधानं शक्यम्, तृतीयादिष्वहःसु तयोरपि प्रापणीयत्वात्। तस्मादिह नोभयसामत्वविधानम्। तथैव व्यवस्थापितं "पृष्ठस्य युगपद्विधेरेकाहवद् द्विसामत्वमि"ति दाशमिकाधिकरणे। नन्वस्त्वेकैकस्याह्न एकैकसामविधानं तथाऽपि बृहद्रथन्तरसामेति पाठक्रमादाद्यस्याऽह्नो बृहत्; द्वितीयस्य रथन्तरमित्यनेन क्रमेण बृहद्रथन्तरसामत्वं विधेयं तत्तु

क्वचिदपि न प्राप्तमित्युद्देश्यव्यापिकाऽप्राप्तिरस्तीति चेत्-न। प्राकृतप्राप्त्यबाधेनाऽऽद्यस्याह्नो रथन्तरं द्वितीयस्य बृहदित्यनेन क्रमेण विधाने सम्भवति; अल्पाच्तरपूर्वनिर्देशार्थतयाऽन्यथासिद्धेन बृहद्रथन्तरपाठक्रमेण प्रकृतिप्राप्तबाधनायोगात्। "जगतीं वै छन्दांसि प्रत्यवरोहन्ति, आग्रयणं ग्रहाः, बृहत्पृष्ठानी"ति गवामयनस्थोत्तरे पक्षसि षाडहिकस्य पञ्चमस्याऽह्नो बृहत्पृष्ठत्वलिङ्गेनाऽऽद्यस्य रथन्तरं द्वितीयस्य बृहदित्यादिक्रमस्यैव निर्णयाच्च। बृहद्रथन्तरसामा कार्य इत्यादिविधयो हि गवामयनस्य पूर्वस्मिन्पक्षस्यवान्तरप्रकरणेन निविशन्ते-पूर्वस्मिन्पक्षस्यनुष्ठिताश्च छन्दोऽनीकपृष्ठसामस्तोमगणा उत्तरे पक्षसि प्रातिलोम्येनाऽनुष्ठेयाः। "प्रत्यवरोहिणो मासा भवन्ति उत्तरे पक्षस्यावृत्ता गणाः" इत्यादिदर्शनात्। ततश्च यदि पूर्वस्मिन्पक्षस्ययुग्मस्याऽह्नो रथन्तरम्; युग्मस्य बृहदिति नियमः स्यात्तदैवोत्तरे पक्षस्ययुग्मस्य पञ्चमस्याऽह्नो बृहत्पृष्ठतादर्शनमुपपद्यते। तस्मात् बृहद्रथन्तरसामा कार्य इत्यत्राद्यस्याऽह्नो रथन्तरम्; द्वितीयस्य बृहदित्यादिक्रमेणैव षडहोद्देशेन बृहद्रथन्तरसामत्वं विधीयते; तस्य च षडहरूपोद्देश्यव्यापिकाऽप्राप्तिर्नास्तीति अव्याप्तिरनिवार्या। अपि च यैर्विधिभिः स्वोद्देश्ये विधेयस्याऽप्राप्तस्य प्रापणं क्रियमाणमपि तत्राऽप्रवृत्तिविशेषकरत्वादन्यार्थत्वं वाच्यमिति, तेन कस्य चित्प्रापणं नियमनं परिवर्जनं वा समुदेति; तेषां नवमश्लोकावतारिकोदाहृतानां मध्ये यावन्यार्थप्रापणाद्यन्नियमपरिवर्ज्जनविधी साम्ना स्तुवीत, यदि रथन्तरसामा सोमः स्यादि"ति, तयोर्विध्योरतिव्याप्तिरप्येवं स्यात्।

विषयशुद्ध्यर्थमतिव्याप्तिस्थलं नियमविधेरुदाहरणान्तरम्।

विषयशुद्ध्यर्थमन्यदपि नियमविधिरूपमतिव्याप्तिस्थलमुदाह्रियते। "प्रजापतिर्वा इदमेक आसीदि"त्यादिना प्रजापतिसृष्टाग्निवाय्वादित्योत्पन्नत्वेन वेदानां प्रशंसयोपक्रम्य श्रूयते तस्मा"दुच्चैर्ऋचा क्रियते" उपांशु यजुषा "उच्चैः साम्ने"ति। अत्रोपक्रमे वेदानां प्रशंसया वेदविषये किञ्चिद्विधास्यत इत्यवगमात्; तदनुरोधेन ऋगादिशब्दा ऋगादिप्रायऋग्वेदादिपराः। तथा च ऋग्वेदेन यत् क्रियते-विधीयते तदुच्चैरित्यादिप्रकारेण ऋग्वेदादिविधेयकर्मोद्देशेनोच्चैस्त्वादिविधय इति स्थितमुपक्रमाधिकरणे। कर्मसु च साक्षान्निवेशमुच्चैस्त्वादयो न लभन्ते। अतस्ते तदङ्गमन्त्रेष्ववतरन्त ऋग्वेदादिविधेयकर्माङ्गमन्त्राणामनियतस्वरप्राप्तौ स्वरविशेषनियमार्था एते विधयः पर्यवस्यन्ति। ततश्चैतेषु विधिषु विधेयानामुच्चैस्त्वादीनां पाष्णिकान्वयविषयेषु मंत्रेषु पाक्षिकप्राप्तिसत्त्वेऽप्युद्देश्येषु कर्मसु कथमपि प्राप्त्यभावात्तेष्वपि लक्षणस्याऽतिव्याप्तिः स्यात्।

ननु कर्मोद्देशेनोच्चैस्त्वादिविधयोऽप्राप्तविषयत्वादपूर्वादिविधय एव युक्ताः, कथमतिव्याप्तिरिति चेत्। उच्यते-यत्र यदनुष्ठानं यस्य विधेः फलम्, तत्र तदनुष्ठानप्राप्त्यप्राप्तिविवेचनेनैव नियमापूर्वविधित्वव्यवस्था कार्या; नतु यत्र यच्छेषत्वं विधिबोध्यम्; तत्र तच्छेषत्वप्राप्त्यप्राप्तिविवेचनेन। तथा सत्यवघातगतापूर्वीयत्वशेषत्वाप्राप्त्या तद्विधेरप्यपूर्वविधित्वप्रसङ्गात्। न हि तत्रोद्देश्यतावच्छेदकावच्छेदेनाप्राप्तिः; इहोद्देश्यस्वरूप एवाऽप्राप्तिरित्येतावता कश्चिद्विशेषोऽस्ति; विवक्षितरूप-

अन्यार्थप्रापणोद्यन्नियमहरणयोरप्यतिव्याप्तिरित्थम्
तच्चेत् त्रैकालिकत्वं न तु विधिरपवादापवादस्तथा स्यात् ॥ १३ ॥

एवं विवक्षायामपि प्रथमश्लोकोक्ताऽग्निविध्याद्यव्याप्तिपुनरुन्मज्जनरूपः प्रागुक्तदोषः स्यादेव; तदुदाहरणेषु क्वचिदपि तत्तदुद्देश्येऽप्राप्तेरभावात्। अन्यत्र चाऽव्याप्तिरधिका स्यात्। तथा हि—द्वादशाहे पृष्ठ्यः षडह उत्पन्नः। स च क्रमेण रथन्तर-बृहत्वैरूपवैराजशाक्वर-रैवताख्यपृष्ठस्तोत्रसाधनसामवतां षण्णामह्नां समाहारः। गवामयने पुनः श्रूयते "पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः" इति। तेन गावामयनिकषडहस्य बृहद्रन्तर एव पृष्ठ-सामनी इति वैरूपादीनि निवर्त्तन्ते। ततश्च षडहोद्देशेन बृहद्रथन्तरविधौ आद्यस्याऽन्हो रथन्तरसामत्वम्, द्वितीयस्य बृहत्सामत्वं च द्वादशाहिकषडहे क्लृप्तमिहाऽपि प्राप्तमित्युद्देश्यव्यापकाप्राप्तेरभावादव्याप्तिः।

बृहद्रथन्तरसाम्नोः समुच्चयविधानमिति शंका।

नन्विहैकैकस्यान्हो बृहद्रथन्तरसामत्वं विधीयते। संसव उभे कुर्यात् गोसव उभे कुर्यादित्यादौ यथा। तत्तु क्वचिदप्यहनि न प्राप्तमिति चेत्। न। प्रकृतौ बृहद्रथन्तरयोः परस्परनैरपेक्ष्येण पृष्ठस्तोत्रसाधनत्वात्तथैव प्राकृतनैरपेक्ष्याऽबाधेन क्वचित् बृहत्, क्वचिद्रथन्तरमिति विधानोपपत्तौ तद्बाधनायोगात्। न च वाच्यं बृहच्च रथन्तरं च बृहद्रथन्तरे बृहद्रथन्तरे सामनी अस्येति बृहद्रथन्तरसामेति द्वन्द्वगर्भोऽत्र बहुव्रीहिः ततश्च द्वन्द्वावगतसाहित्यबलादेकैकस्याह्न उभयसामत्वं विधेयमिति अकृत्वैव द्वन्द्वसमासं बृहत्सामाऽस्य; रथन्तरं सामास्येत्यनेकपदबहुव्रीहिस्वीकारसम्भवात्। न च "द्वन्द्व-तत्पुरुषयोरुत्तरपदे नित्यं समासवचनमि"तिकात्यायनवचनादिह द्वन्द्वसमासो नियत इति वाच्यम्। अत्र द्वन्द्व,तत्पुरुषयोः सतोरन्यच्छब्दरूपम्; असतोश्चान्यद्भवति; तत्र समासकृतरूपनियमार्थं तद्वार्त्तिकप्रवृत्तेः। यथा-वाक्त्वचप्रियः पञ्चगवधनः-इति। अत्र हि द्वन्द्व-तत्पुरुषयोरकरणे "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति गोरतद्धितलुकीति समासान्तप्रत्यययोरप्राप्तेर्वाक्त्वक्प्रियः पञ्चगोधन इतिरूपं सिद्ध्येत्। इह तु द्वेधाऽपि रूपस्याभेदान्न्यायतोऽर्थनिर्णेतव्ये प्रत्येकप्रापिचोदकानुग्रहायाऽनेकपदबहुव्रीह्याश्रयणमेव युक्तम्। यद्यपि द्वन्द्वगर्भ एवाऽत्र बहुव्रीहिः स्यात्; तथापि प्रकृतितः प्राप्तं नैरपेक्ष्यं न बाधितव्यम्;। षडहापेक्षया साहित्यस्याऽर्थप्राप्तस्य तद्विषयत्वोपपत्तेः। अन्यथा बृहद्रथन्तरयोः; षडहसंबन्धस्य; तयोरेकैकस्मिन्नेवाऽहनि साहित्यस्य च विधेयत्वे बृहद्रथन्तरे एवाऽस्य षडहस्य सामनी ते चैकैकस्मिन्नहनि परस्परसहिते कर्त्तव्ये इत्यनेकार्थविधानेन वाक्यभेदप्रसङ्गात्। न ह्यत्र संसवादिवच्चोदकप्राप्तयोर्बृहद्रथन्तरयोः साहित्यमात्रविधानं शक्यम्, तृतीयादिष्वहःसु तयोरपि प्रापणीयत्वात्। तस्मादिह नोभयसामत्वविधानम्। तथैव व्यवस्थापितं "पृष्ठस्य युगपद्विधेरेकाहवद् द्विसामत्वमि"ति दाशमिकाधिकरणे। नन्वस्त्वेकैकस्याह्न एकैकसामविधानं तथाऽपि बृहद्रथन्तरसामेति पाठक्रमादाद्यस्याऽह्नो बृहत्; द्वितीयस्य रथन्तरमित्यनेन क्रमेण बृहद्रथन्तरसामत्वं विधेयं तत्तु

क्वचिदपि न प्राप्तमित्युद्देश्यव्यापिकाऽप्राप्तिरस्तीति चेत्-न। प्राकृतप्राप्त्यबाधेनाऽऽद्यस्याह्नो रथन्तरं द्वितीयस्य बृहदित्यनेन क्रमेण विधाने सम्भवति; अल्पाच्तरपूर्वनिर्देशार्थतयाऽन्यथासिद्धेन बृहद्रथन्तरपाठक्रमेण प्रकृतिप्राप्तबाधनायोगात्। "जगतीं वै छन्दांसि प्रत्यवरोहन्ति, आग्रयणं ग्रहाः, बृहत्पृष्ठानी"ति गवामयनस्थोत्तरे पक्षसि षाडहिकस्य पञ्चमस्याऽह्नो बृहत्पृष्ठत्वलिङ्गेनाऽऽद्यस्य रथन्तरं द्वितीयस्य बृहदित्यादिक्रमस्यैव निर्णयाच्च। बृहद्रथन्तरसामा कार्य इत्यादिविधयो हि गवामयनस्य पूर्वस्मिन्पक्षस्यवान्तरप्रकरणेन निविशन्ते-पूर्वस्मिन्पक्षस्यनुष्ठिताश्च छन्दोऽनीकपृष्ठसामस्तोमगणा उत्तरे पक्षसि प्रातिलोम्येनाऽनुष्ठेयाः। "प्रत्यवरोहिणो मासा भवन्ति उत्तरे पक्षस्यावृत्ता गणाः" इत्यादिदर्शनात्। ततश्च यदि पूर्वस्मिन्पक्षस्ययुग्मस्याऽह्नो रथन्तरम्; युग्मस्य बृहदिति नियमः स्यात्तदैवोत्तरे पक्षस्ययुग्मस्य पञ्चमस्याऽह्नो बृहत्पृष्ठतादर्शनमुपपद्यते। तस्मात् बृहद्रथन्तरसामा कार्य इत्यत्राद्यस्याऽह्नो रथन्तरम्; द्वितीयस्य बृहदित्यादिक्रमेणैव षडहोद्देशेन बृहद्रथन्तरसामत्वं विधीयते; तस्य च षडहरूपोद्देश्यव्यापिकाऽप्राप्तिर्नास्तीति अव्याप्तिरनिवार्या। अपि च यैर्विधिभिः स्वोद्देश्ये विधेयस्याऽप्राप्तस्य प्रापणं क्रियमाणमपि तत्राऽप्रवृत्तिविशेषकरत्वादन्यार्थत्वं वाच्यमिति, तेन कस्य चित्प्रापणं नियमनं परिवर्जनं वा समुदेति; तेषां नवमश्लोकावतारिकोदाहृतानां मध्ये यावन्यार्थप्रापणोद्यन्नियमपरिवर्ज्जनविधी साम्ना स्तुवीत, यदि रथन्तरसामा सोमः स्यादि"ति, तयोर्विध्योरतिव्याप्तिरप्येवं स्यात्।

विषयशुद्ध्यर्थमतिव्याप्तिस्थलं नियमविधेरुदाहरणान्तरम्।

विषयशुद्ध्यर्थमन्यदपि नियमविधिरूपमतिव्याप्तिस्थलमुदाह्रियते। "प्रजापतिर्वा इदमेक आसीदि"त्यादिना प्रजापतिसृष्टाग्निवाय्यादित्योत्पन्नत्वेन वेदानां प्रशंसयोपक्रम्य श्रूयते तस्मा"दुच्चैरृचा क्रियते" उपांशु यजुषा "उच्चैः साम्ने"ति। अत्रोपक्रमे वेदानां प्रशंसया वेदविषये किञ्चिद्विधास्यत इत्यवगमात्; तदनुरोधेन ऋगादिशब्दा ऋगादिप्रायऋग्वेदादिपराः। तथा च ऋग्वेदेन यत् क्रियते-विधीयते तदुच्चैरित्यादिप्रकारेण ऋग्वेदादिविषयकर्मोद्देशेनोच्चैस्त्वादिविधय इति स्थितमुपक्रमाधिकरणे। कर्मसु च साक्षान्निवेशमुच्चैस्त्वादयो न लभन्ते। अतस्ते तदङ्गमन्त्रेष्ववतरन्त ऋग्वेदादिविषयकर्माङ्गमन्त्राणामनियतस्वरप्राप्तौ स्वरविशेषनियमार्था एते विधयः पर्यवस्यन्ति। ततश्चैतेषु विधिषु विधेयानामुच्चैस्त्वादीनां पार्ष्णिकान्वयविषयेषु मंत्रेषु पाक्षिकप्राप्तिसत्त्वेऽप्युद्देश्येषु कर्मसु कथमपि प्राप्त्यभावात्तेष्वपि लक्षणस्याऽतिव्याप्तिः स्यात्।

ननु कर्मोद्देशेनोच्चैस्त्वादिविधयोऽप्राप्तविषयत्वादपूर्वादिविधय एव युक्ताः, कथमतिव्याप्तिरिति चेत्। उच्यते-यत्र यदनुष्ठानं यस्य विधेः फलम्, तत्र तदनुष्ठानप्राप्त्यप्राप्तिविवेचनेनैव नियमापूर्वविधित्वव्यवस्था कार्या; नतु यत्र यच्छेषत्वं विधिबोध्यम्; तत्र तच्छेषत्वप्राप्त्यप्राप्तिविवेचनेन। तथा सत्यवघातगतापूर्वीयत्वशेषत्वाप्राप्त्या तद्विधेरप्यपूर्वविधित्वप्रसङ्गात्। न हि तत्रोद्देश्यतावच्छेदकावच्छेदेनाप्राप्तिः; इहोद्देश्यस्वरूप एवाऽप्राप्तिरित्येतावता कश्चिद्विशेषोऽस्ति; विवक्षितरूप-

भेदेनाऽत्यन्ताप्राप्तेरुभयत्राप्यविशिष्टत्वात्। न च केनाऽपि रूपेण प्राप्त्यभाव एवाऽत्यन्ताप्राप्तिः, स्वर्गादिगतयागकार्यत्वादेरपि सामान्यतोदृष्टानुमानात्प्राप्तिसम्भवेन तत्राऽपूर्वविध्यभावापत्तेः। ततश्च यथापूर्वीयोद्देशेनावघातविधानेऽपि व्रीहिष्ववघातानुष्ठानमेव विधेः फलम्; तत्तु पक्षे प्राप्यत इति नियमविधिराश्रितः। एवमिह ऋग्वेदादिविधेयकर्मोद्देशेन स्वरविशेषविधानेऽपि तदङ्गमन्त्रेषु स्वरविशेषानुष्ठानमेव-विधेः फलम्; तत् पक्षे प्राप्यत इति नियमविधिरेवाश्रयितुं युक्तः। अनेनैव न्यायेन पूर्वोदाहृतविध्योरपि नियम-परिसंख्यात्वमुपपादनीयम्।

भाष्यमतेन गुणमुख्यव्यतिक्रमाधिकरणस्य वर्णनमुखेन स्वरविशेषे

नियमविध्यभावशङ्का।

ननु "गुण-मुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" इत्यधिकरणे भाष्यकारेण याजुर्वैदिकस्याधानस्य सामवेदे वारवन्तीयमङ्गं विहितम्, तत्र वारवन्तीयस्य किं स्वविधिनिवन्धनं सामवैदिकमुच्चैस्त्वं कार्यम्; उत प्रधानविधिनिबंधनं याजुर्वैदिकमुपांशुत्वमिति सन्देहे प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यतापेक्षित्वेन विलम्बितत्वात्; तदनपेक्षतया शीघ्रं प्रतीयमानमुच्चैस्त्वं कार्यमिति पूर्वपक्षं प्रापय्य, राद्धान्तितम्-विलम्बितप्रतीतिकमप्युपांशुत्वं प्रधानधर्मत्वाद्बलीयः, प्रधाने साक्षान्निवेशमलभमानतयाऽङ्गावतीर्णमपि हि तत्प्रधानस्यैव धर्मः। अतोऽङ्गधर्ममुच्चैस्त्वं बाधित्वा प्रधानधर्म उपांशुत्वं कार्यम्; अन्यथा प्रधानवैगुण्यापत्तेरिति। एवञ्च प्रधानकर्मोद्देशेन स्वरविशेषविधानानां न केवलं तदङ्गमन्त्रेष्वनियतस्वरप्राप्तिमत्सु प्रधानस्वरनियममात्रं फलम्; किन्तु नियतस्वविधिनिबन्धनस्वरप्राप्तिमत्सु वारवन्तीयादिषु तद्बाधावर्तनेनाऽप्राप्तप्रधानस्वरप्रापणमपि फलम्। अतश्चापूर्वविधित्वं युक्तमिति चेत्।

तन्निरासः।

अस्तु नामैवम्; तथाऽप्यनियतस्वरप्राप्तिमन्मन्त्रांशे नियमविधित्वमपि वक्तव्यं विनिगमनाविरहादित्यतिव्याप्तिरनिवार्यैव। न ह्यवहनने नियमविधिरेव; न परिसंख्येत्यत्राऽवहनननियमस्य विदलनादिनिवृत्तिं प्रत्युपजीव्यत्वमिव रशनादानमन्त्रावधिः परिसंख्यैव न नियमविधिरित्यत्र गर्दभरशनानिवृत्तेरन्यलभ्यत्वमिवेह विधिरेव, न नियम इत्यत्र किञ्चिद्विनिगमकमस्ति; इह तयोरुपजीव्योपजीवकभावाभावात्, द्वयोरप्यनन्यलभ्यत्वाच्च। न चैकस्यैव विषयभेदेन विधिनियमरूपत्वे कश्चिद्दोषः, विधिवैरूप्याभावेन पूर्वश्लोकोदाहृतसार्वकाम्यादिवाक्यानां विध्यनुवादरूपत्ववदेतेषां विधि-नियमरूपत्वस्याऽप्युपपत्तेः। अत एव प्रागाश्रयविषयभेदेन विधि-नियम-परिसंख्यानां संकरो दर्शितः।

आत्यन्तिकत्वं त्रैकालिकत्वं इति स्वीकारे प्रतिप्रसवविधेरनुपपत्त्याशङ्का स्यादेतन्माभूत्सर्वेषूद्देश्येष्वनुवृत्तिरूपा वा सर्वात्मना क्वचिदप्युद्देश्येऽनुवृत्तिरूपा

१. मु० पु० अनन्यलभ्येति पा०

वा सर्वोद्देश्याऽनुवृत्तिरात्यन्तिकत्वम्, किन्तु त्रैकालिकत्वम्; त्रिकालायामप्राप्तौ विधिरिति प्रसिद्धेरितिचेत्? एवंसति अपवादापवादविधिर्न स्यात्; तस्य प्राप्तापोदितपुनःप्राप्त्यर्थत्वात्। तथा हि कृष्णलचरोः श्रपणं श्रूयते "घृते श्रपयती"ति। नेदमपूर्वश्रपणं विधीयते, किन्तु दार्शपूर्णमासिकश्रपणं विक्लित्तिरूपप्रयोजनाभावान्निवर्त्तमानं प्रतिप्रसूयते; अतः प्राकृताः श्रपणधर्माः कर्त्तव्या इति स्थापितं दशमे।

टुप्टीकावलम्बनेन श्रपणविधेरपूर्वविधित्वासम्भवशङ्का।

ननु तत्र प्रतिप्रसवरूपस्य श्रपणविधेरपूर्वविधित्वं नाऽस्तीत्यङ्गीकृतं टुप्टीकायाम्।

तत्र ह्युक्तं "तस्मात्पाकान्तरं नैतत्त्वपूर्वविधिदोषतः।
प्रतिप्रसवमात्रं तु लाघवाद्विहितं वरमिति"॥

समाधानम्।

सत्यमुक्तं श्रपणान्तरं न विधेयमत्यन्तमबुद्धिस्थस्य विधौ तस्य बुद्ध्यारोहणकल्पनागौरवात्। किन्तु चोदकानीततया स्वत एव बुद्ध्यारूढमर्थाभावान्निवर्त्तमानं प्राकृतमेव श्रपणं विधेयमित्यत्र तात्पर्यम्; न तु न प्रतिप्रसवविधिरपूर्वविधिरित्यत्र तात्पर्यम्; तदभावे श्रपणस्याऽपोदितस्य प्राप्त्यसम्भवेन तस्यापूर्वविध्यन्तर्भावौचित्यात्। अन्यथा नियम-परिसंख्याऽनन्तर्भूतस्य विध्यन्तरत्वापत्त्या विधित्रैविध्यभङ्गप्रसङ्गात्।

प्रतिप्रसवविधेरुदाहरणान्तरप्रदर्शनम्।

एवं "पूषा प्रपिष्टभागः" इति पौष्णचरौ चोदकतः प्राप्तस्य प्राकृतस्य पेषणस्य प्रयोजनाभावान्निवर्त्तमानस्य विधिरपि प्रतिप्रसवविधिः। एतद्दशाः प्राप्तस्यापवादे प्रसक्ते तदपवादार्था विधयः; एतेषु प्राक्प्राप्तिसत्त्वात् त्रैकालिकाप्राप्तिर्नाऽस्तीत्यव्याप्तिः। केचित्पुनः प्रसक्तप्राप्तिकस्य प्रागेवापवादे प्रसक्ते तदपवादार्थाः सन्ति विधयः; "अपबर्हिषः प्रयाजान्यजती"त्यादयः। तथा हि— अवभृथस्तावद्गृहमेधीयवदपूर्वः। तत्राप्सुमन्तावाज्यभागौ यजतीत्याज्यभागपुनः श्रवणेनावभृथप्रयोगविधेः क्लृप्तोपकारप्राकृताज्यभागनैराकाङ्क्ष्यतया चोदकस्याऽकल्पनीयत्वात्। न च तदप्सुशब्दोपेतस्य "अप्सु मे सोमोऽब्रवीदि" त्यादियाज्यानुवाक्यामन्त्रद्वयस्य विधानार्थम्; लिङ्गक्रमाभ्यामेव मन्त्रप्राप्त्या तदनुवादेन तस्याऽऽज्यभागविधिपरत्वात्। एवं चाज्यभागविधिना चोदककल्पनाप्रतिबन्धेन ततः प्रसक्तायां प्रयाजादिप्राप्तौ निवारितायां बर्हिर्व्यतिरिक्तप्रयाजादिप्राप्त्यर्थमपबर्हिष इति श्रवणम्। एतादृशेषु नियमविध्यभावेऽवहननं विदलनादीनामाक्षेपादिव, अपूर्वं तापराज्यभागादिविध्यभावे प्रयाजादीनां चोदकात्प्राप्तिर्भवेदिति; भविष्यत्प्राप्तिसत्त्वेन त्रैकालिकाप्राप्त्यभावादव्याप्तिः। एवमथातोऽग्निमग्निष्टोमेनानुयजन्तीत्यादिविधिष्वव्याप्तिः, दर्शितं हि नवमश्लोकावतारिकायाम्, "अथातोऽग्निमित्या"दिविधेरपवादापवादत्वम्। तस्मात् त्रैकालिकत्वमात्यन्तिकत्वमित्यपि न युक्तमिति भावः।

इति त्रयोदशश्लोकस्य व्याख्या

———

अथ चतुर्दशश्लोकस्यावतारिका ।

पाक्षिकत्वाभाव आत्यन्तिकत्वं इति पक्षमादाय शंका ।

ननु तर्ह्यपाक्षिकत्वमात्यन्तिकत्वमस्तु । युज्यते च नियमविधिव्यावृत्त्यर्थस्य तस्य तथा निर्वचनम्; । "नियमः पाक्षिके सती"ति नियमविधिलक्षणादित्याशङ्क्याह—

युज्येतापाक्षिकत्वं तदिति यदि निरुच्येत तत्पाक्षिकत्वम्
प्राप्त्या किम्मीरितत्वम् कथिततदधिकाव्याप्तिदुष्टं न युक्तम् ।
त्यक्त्वावच्छेदभेदं तदिति तु नियमातिप्रसक्त्या निरास्यम्
तत्रोपायान्तरं तद्विरह इति तयोर्ह्यस्त्यवच्छेदभेदः ॥ १४ ॥

युज्येत तथा निर्वचनम्; यदि तत्प्रतियोगिपाक्षिकत्वं निरुच्येत । प्राप्तिशबलत्वं पाक्षिकत्वमिति न युक्तम्; पूर्वश्लोकयोर्दर्शिताभिः सार्वकाम्यादिविधिषु बृहद्रथन्तरसामत्वविधौ चाऽव्याप्तिभिः; ततोऽधिकाभिः प्रागुदाहृतेपूपदेशातिदेशाभ्यां प्रकृतिविकृतिसाधारणेषु द्वादशाहिक-गावामयनिकाश्रुतयज्ञभागस्वरविधिष्वव्याप्तिभिश्चाऽऽक्रान्तत्वात् ।

अवच्छेदभेदं विना प्राप्तिशबलत्वमप्राप्तेः पाक्षिकत्वमितिपक्षोपन्यासः ।

स्यादेतत् अवच्छेदभेदं विना प्राप्तिशबलत्वं पाक्षिकत्वम्; सार्वकाम्यादिविधिषु स्वर्गत्वाद्यवच्छेदेन प्राप्तिः तदितरफलत्वावच्छेदेनाऽप्राप्तिरित्यवच्छेदभेदसत्वान्नाव्याप्तिरिति चेत् ?

तथा स्वीकारे नियमविधावतिव्याप्त्युद्भावनम् ।

एवं तर्हि विशेषणफलं नियमविधिव्यावर्तनं न लभ्यते । एकस्मिन्नपि व्रीह्यादिद्रव्येऽवहननादीनामुपायान्तरप्राप्त्यवच्छेदेन प्राप्तिः; तद्विरहावच्छेदेनाप्राप्तिरिति; प्राप्त्यप्राप्त्योरवच्छेदभेदसत्वादित्यर्थः ।

इति चतुर्दशश्लोकस्य व्याख्या ।

---

अथ पञ्चदशश्लोकस्यावतारिका ।

ननु तर्ह्यवच्छेदभेदे उपायान्तरप्राप्ति-तद्विरहभिन्नत्वं विशेषणं निवेश्यते । तथा चोपायान्तरप्राप्ति-तद्विरहभिन्नावच्छेदभेदं विना प्राप्तिशबलत्वं पाक्षिकत्वमिति पर्यवसानात्; अपाक्षिकत्वविशेषणेनाऽवहननादिनियमविधिव्यावृत्तिलाभः; तत्र निरुक्तपाक्षिकत्वसत्त्वात् सार्वकाम्यादिविध्यनुगमश्च तत्रोपायान्तरप्राप्ति-तद्विरहभिन्नस्वर्गत्व-तदितरफलत्वाद्यवच्छेदभेदेनैव प्राप्त्यप्राप्त्योः करम्बिततया निरुक्तपाक्षिकत्वाभावसत्त्वात्; अतो नात्र कश्चिद् दोष इत्याशङ्क्याह—

तद्भिन्नत्वं निवेश्यं यदि खलु तदवच्छेदभेदे ततो न
व्यावृत्तिः कार्यषोडश्यृतुगमनबृहत्संश्रिताया नियत्याः ।
स्थाने वैकल्पिकोक्तिः क्रियत इति मतं यद्युपायान्तराणाम्
तद्वाच्यं पाक्षिकत्वव्यतिकररहितं किन्तु वैकल्पिकत्वम् ॥ १५ ॥

एवं विवक्षया उपायविषयनियमविधिव्यावृत्तिलाभेऽपि कार्यादिविषयतद्व्यावृत्तिर्नलभ्यते । तथा हि—"यद्योन्यां गायति तदुत्तरयोर्गायतीति" विधिर्योनिसमच्छन्दस्कयोरुत्तरयोर्नियमार्थ इत्युपपादितं नवमश्लोकावतारिकायाम् । अयञ्च कार्यनियम एव; ऋचोः सामसंस्कार्ययोः तत्कार्यत्वात् । ततश्चोपायान्तरप्राप्ति-तद्विरहभिन्नकार्यान्तरप्राप्ति-तद्विरहरूपावच्छेदभेदेनैव प्राप्तिशबलत्वमिति विशेषणाभावप्रयुक्तविशिष्टाभावरूपाऽपाक्षिकत्वसत्त्वात्तेन विशेषणेनाऽस्य व्यावृत्तिर्न लभ्यते --इति तत्रातिव्याप्तिः स्यात् ।

तत्रैवातिव्याप्तेः स्थलान्तरप्रदर्शनम् ।

तथा प्रकृत्यतिरात्रे विकल्पितस्य षोडशिग्रहस्योत्तरेऽहन्द्विरात्रस्य गृह्यत इति विकृतिविशेषे नियमोऽप्युपायद्वयप्राप्तौ नियमो न भवति । षोडशिग्रहाभावेऽपि क्रतोरवैगुण्ये षोडशिग्रहोपदेशो निरर्थकः स्यादिति; तत्सार्थकत्वाय षोडशिग्रहसाध्यतया कल्पनीये फलभूम्नि तदभावस्योपायान्तरत्वाभावात्; अतस्तत्रापि पूर्ववदतिव्याप्तिः स्यात् ।

स्मार्तोदाहरणप्रदर्शनम् ।

"ऋतावुपेयादि"ति ऋतुगमननियमे कदाचिदृतावनिच्छयाऽनुपगमनमपि प्राप्नुयादिति तदर्थं प्रवृत्तेऽनुपगमनस्योपगमनसाध्यं पुत्रोत्पादनं प्रत्युपायान्तरत्वाभावादतिव्याप्तिः स्पष्टैव ।

तथा ज्योतिष्टोमे "बृहत्पृष्ठं भवति" "रथन्तरं पृष्ठं भवती"ति बृहद्रथन्तरसाधनके पृष्ठाख्ये द्वे स्तोत्रे विहिते, तयोः स्तुतशस्त्राधिकरणन्यायेनाऽदृष्टार्थतया प्रयाजानुयाजवद्भिन्नकार्ययोरपि वचनबलाद्विकल्पो न तु व्रीहियवादिवदेककार्यत्वात् । अत एव व्रीहिधर्माणामवघातादीनां यवेष्विव बृहद्धर्माणां "बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेदि"त्यादिना विहितानां रथन्तरे वा; रथन्तरधर्माणां 'रथन्तरे प्रस्तूयमाने नेत्रे संमीलयेदित्यादिना" विहितानां बृहति वा न सङ्करः । तदेतत् "एकार्थत्वादविभागः स्यादि" ३।३।१५।४६ ति च नावमिकाधिकरणे प्रपञ्चेन व्यवस्थापितम् । ज्योतिष्टोमविकृतिषु चोपहव्यादिषु बृहत्पृष्ठनियमः श्रूयते । तत्राऽपि तत्कार्यमदृष्टं प्रति रथन्तरपृष्ठस्योपायान्तरत्वाभावादतिव्याप्तिः ।

उपायान्तरस्थाने वैकल्पिकेति विशेषणदानेन पूर्वोक्तदूषणपरिहारशङ्का ।

स्यादेतत्-उपायान्तरस्थाने वैकल्पिकप्राप्ति-तद्विरहभिन्नावच्छेदभेदं विना प्राप्तिशबलत्वं पाक्षिकत्वमिति पर्यवसानादुदाहृतनियमविधिषु चाप्राप्तेरुक्तरूपपाक्षिकत्वसत्त्वान्नातिव्याप्तिरिति चेत् ।

तत्रात्माश्रयदूषणापादनम् ।

एवं हि वैकल्पिकत्वं पाक्षिकत्वानुप्रवेशरहितं निर्वक्तव्यम्; अन्यथात्माश्रयादिदोषापत्तेः । तत्तु न सम्भवति विधित्सितेन सह पाक्षिकत्वम्; विधित्सितस्य पाक्षिकत्वापादकत्वमित्यादिरूपेणैव तस्य निर्वक्तव्यत्वादितिभावः ।

इति पञ्चदशश्लोकस्य व्याख्या ।

———

अथ षोडशश्लोकस्यावतारिका

लक्षणेऽवच्छेदभेदं विनेत्यस्य स्थाने

आश्रयभेदं विनेतिनिवेशेन पूर्वोक्तदूषणपरिहारशङ्का ।

स्यादेतत्—अवच्छेदभेदं विनेतिस्थाने आश्रयभेदं विनेति करिष्यामः । ततश्च नियमस्याप्राप्तेरेकस्मिन्नप्याश्रये प्राप्तिकरम्बिततया पाक्षिकत्वान्न नियमविधिष्वतिव्याप्तिः । नाऽपि सार्वकाम्यादिविधिष्वव्याप्तिः, तेषु सर्वेष्वपि स्वर्गाद्याश्रयव्यक्तिभेदेनैव प्राप्त्यप्राप्त्योः करम्बितत्वादित्याशङ्क्याह—

**यद्युच्येतान्तरेण त्वधिकरणभिदा प्राप्तिसंमेलनं तत्**
**तत्रापि प्राक्षु पक्षेष्वपि समुदयते तावदव्याप्तिरेका ।**
**कार्त्स्न्येनैवोपहव्यप्रभृतिभृति-हविःशेषयोर्ब्रह्मणोक्तौ**
**पूतीकाधारमन्त्रान्तरमुखनियमातिप्रसक्तिस्तथाऽन्या[1] ॥१६॥**

इत्थं विवक्षायामप्यव्याप्तिरेको दोषः स्यात्, अतिव्याप्तिरपरो दोषः । तथाहि उपहव्यनामकक्रतौ "अश्वः श्यावो दक्षिणेति" दक्षिणां विधाय श्रूयते स ब्रह्मणे देयः" इति । तथा ऋतपेयस्य क्रतोः "औदुम्बरः सोमचमसो दक्षिणेति" दक्षिणां विधाय श्रूयते "स प्रियाय सगोत्राय ब्रह्मणे देयः" इति । अत्र क्रतुदक्षिणात्वेन विहितयोरश्वचमसयोर्ब्रह्मणः संबन्धः प्राप्त एव । किन्त्वन्येषामप्यृत्विजां तयोः संबन्धः प्राप्त इति तदंशे ब्रह्मसंबन्धाप्राप्तेः कार्त्स्न्येन ब्रह्मसंबन्धप्राप्त्यर्थमिदं वचनद्वयम् । तेनार्थादृत्विगन्तरेभ्यस्तयोरपनीतत्वात्तेषामानतिर्विनैव भृतिं सामाद्युपायैः करणीया । तदेतत्सर्वं "धेनुवच्चाश्वदक्षिणेति" १०।३।१७।६५ सोमचमसः तथा १०।३।१९।६८ इति च दाशमिकाधिकरणयोर्निरूपितम् । एवञ्चैकस्यामेवाऽश्वव्यक्तौ चमसव्यक्तौ च ब्रह्मणः प्राप्त्यप्राप्त्योर्मेलनात्तद्विध्योरव्याप्तिः ।

तथा "प्राजापत्यं घृते निर्वपेच्चरुं शतकृष्णलमायुष्कामः" इति इष्टिविशेषं विधाय तत्संनिधावाम्नायते "तत्सर्वं ब्रह्मणे परिहरती"ति । अत्र हविःशेषस्य सर्वेभ्य ऋत्विग्भ्यो भक्षणाय परिहरणीयत्वे प्राप्ते कार्त्स्न्येन ब्रह्मसंबन्धार्थमिदं वाक्यम् ।

---

१. स्यादिति मु० पु० पा० ।

अतोऽत्राप्येकस्यामेव हविःशेषव्यक्तौ ब्रह्मणः प्राप्त्यप्राप्त्योर्मिलितत्वादव्याप्तिः। नन्विडा, प्राशित्रं, चतुर्द्धाकरणं चेति त्रिविधमपि हविःशेषं ब्रह्मणे परिहरणीयम्। तच्च सर्वं युगपदेव परिहरणीयम्; "एकधा ब्रह्मण उपहरती"तिवचनात्, युगपदुपहृतमपि तत्सर्वं चोदकप्राप्ततत्तद्भक्षणकालाबाधेन यथाकालमेव भक्षणीयमिति निर्णीतं दशमे १०।२।५।६—कृष्णलपेटिकायाम्। ततश्च प्राशित्रे कार्त्स्न्येन ब्रह्मसंबन्धस्य प्राप्तत्वात् कथं तत्र विधानमिति चेत्, माभूत्, इडाया, चतुर्धाकरणार्थे च विधानमुपपद्यत एव। तथा च परिहरणीयस्य सर्वस्य कार्त्स्न्येन ब्रह्मसंबन्धविधिः सार्वकाम्यविधिः स्वर्ग इव प्राशित्रेऽनुवादो भविष्यति तथाप्यव्याप्तिर्विषययोर्द्वयोः सुदृढैव। एकैकस्यामेवेडारूपहविःशेषव्यक्तौ चतुर्धाकरणार्थहविःशेषव्यक्तौ च प्राप्त्यप्राप्त्योर्मिलितत्वात्। एवं सत्यव्याप्तिः समर्थिता।

अव्याप्तिदूषणमुद्भाव्य पूतिकादिनियमविधिष्वतिव्याप्त्युद्भावनम्।

अतिव्याप्तिस्तु पूतीकादिनियमविधिषु। कथं? "यदि सोमं न विन्देत पूतीकानभिषुणुयादि"ति श्रूयते। अयं सोमालाभे सत्यभावविधिरूपः पूतीकानां यागसाधनत्वविषयकोऽपूर्वविधिर्न भवति, किन्तु "श्रुतिप्रमाणत्वाच्छिष्टाभावेनागमोऽन्यस्याशिष्टत्वादि" ६।३।४।१३। त्यधिकरणोक्तन्यायेन नित्यस्य प्रारब्धकाम्यस्य च सोमयागस्य सोमाभावेऽपि यथाशक्त्यवश्यानुष्ठेयतया कर्मचोदनाक्षिप्ते यस्मिन् कस्मिंश्चित् द्रव्येऽवश्यमुपादेये तत्राऽपि "सामान्यं तच्चिकीर्षा ही" ३।११।२७ त्यधिकरणोक्तन्यायेन सोमविधानस्याऽपि किंचिदनुग्रहसिद्धये कतिपयसोमावयवानुप्रवेशवति सोमसदृशद्रव्य एवोपादेये बहुषु च सोमसदृशद्रव्येषु सत्सु नियमविधिरयम्—यः सोमलताया अभावे सोमजातिपरिच्छिन्नान् सकलावयवानुपादातुमशक्तः तत्सदृशेषु स्थितान्विकलानवयवानुपादातुमिच्छति; स पूतीकगतानेवोपाददीत इति। एवं नियमविधिरिति निर्णीतम् नियमार्था पुनः श्रुतिरिति तृतीयाध्यायाधिकरणे; "वचनाच्चान्याय्यमभावे" इति ६।३।१३।३१ षष्ठाध्यायाधिकरणे च। अयं च सोमलतया सुसदृशानामन्येषां सत्त्वात्ऽतेषामेव बह्वयवानुग्रहानुरोधेन प्रतिनिधितया प्राप्तेरीषत्सोमसदृशानां पूतीकानां तत्प्रतिकोटितया पाक्षिकप्राप्तिरहितानामेव विधिः, अत एवोक्तं शास्त्रदीपिकायाम् 'मुख्याभावे प्रतिनिधेः प्राप्तिः तस्यांश्चाऽवस्थायां यावन्न्यायेन सुसदृशं नियन्तुमुपक्रम्यते तावत् वचनेन[1] मन्दसदृशाः पूतीका नियम्यन्ते; अतः प्रतिनिधिनियमोऽयम् इति शा० पृ० ४७७। एवं पूतीकानामप्राप्तेः प्राप्तिकरम्बितत्वाभावादतिव्याप्तिः।

वायव्यपशौ उत्तराघारमन्त्रविधावतिव्याप्तिप्रतिपादनम्।

तथा वायव्यपशौ श्रूयते "हिरण्यगर्भः समवर्त्तताग्र इत्याघारमाघारयती"ति। अयं प्राजापत्ये पूर्वाघारे मन्त्रविधिर्न भवति। किन्त्वैन्द्रउत्तराघार इति निर्णीतं दशमे, "हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गात्"। "उत्तरस्य वा मन्त्रार्थ-

१. अत्रत्यमुद्धरणं शास्त्रदीपिकां विसंवदति यथा मन्दसदृशा इव असुसदृशा अपि इति पा.।

वत्त्वात्” १०।३।२।१३, १५ इति पूर्वोत्तरपक्षसूत्राभ्याम्। तत्राऽयं सिद्धान्तन्याय उक्तः—मन्त्रविधौ मन्त्रजन्यं नियमादृष्टमपेक्षणीयम्, अन्यथा ब्राह्मण-कल्पसूत्रोपद्रष्टृवचनादिभिरप्यनुष्ठेयार्थस्मरणसंम्भवेन मन्त्रनियमवैयर्थ्यात्। तत्तु नियमादृष्टं प्रकृतौ पूर्वाघारे न क्लृप्तम्; तत्र तस्याऽमन्त्रकत्वात् इति पूर्वाघारे मन्त्रविधिपक्षेऽत्रैव तत्कल्पनीयम्, उत्तराघारे तु तत्क्लृप्तम्; तस्य प्रकृतावपि समन्त्रकत्वात्। अतः क्लृप्ते नियमादृष्टे मन्त्रविशेषमात्रविधानं लघ्वित्युत्तराघार एव मन्त्रविधिर्युक्तः—इति। उक्तं च टुप्टीकायाम् मन्त्रनियमादवश्यमदृष्टं कल्पनीयं पूर्वाघारे। तत्तु क्लृप्तमुत्तराघारे तस्मिन्सति कल्पयितुं न शक्यते-इति। एवं चाऽत्र नियमविधित्वेनाऽङ्गीकृते आघारमन्त्रान्तरविधौ चोदका“दिन्द्र ऊर्ध्वोऽध्वरः” इति प्राकृतमन्त्रस्यैव प्राप्तिरस्ति न विधेयमन्त्रस्येत्यत्राऽप्यतिव्याप्तिः। न च विकृतौ मन्त्रांतरविधानसमये प्राप्त्यभावेऽपि प्रकृताविन्द्र “ऊर्ध्वोऽध्वरः” इति मन्त्रविधानसमये सर्वेषामुपायान्तराणां पक्षे प्राप्तिरस्ति; सैवाऽर्थतो विकृतावपि प्राप्तिरिति वाच्यम्। तदानीमपि ब्राह्मणकल्पसूत्रादीनामिन्द्रप्रकाशमन्त्रान्तराणाञ्च पक्षे प्राप्तावपि प्रजापतिलिङ्गकस्याऽस्य मन्त्रस्य प्राप्त्यभावात्। न च लिङ्गमिन्द्रेऽप्यविशिष्टमिति भाष्ये समर्थितमिति वाच्यम्। तत्र हि विहितविनियोगनिर्वाहायेन्द्रेऽपि कथं चिन्मन्त्रं योजयितुं तस्मिन्नपि सृष्टेः प्रागेकत्वेनाऽवस्थानं मन्त्रान्तरे वर्णितमस्तीत्येतावदुदाहृतम्; न तु हिरण्यगर्भशब्दस्य तत्र स्वारसिकं लिङ्गं समर्थितम्। न वा तत्समर्थनं शक्यम्; तस्य प्रजापतावेव रूढत्वात्। प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वायेति वाक्यशेषाच्च। “हिरण्यगर्भे पूर्वस्य मन्त्रलिङ्गादि”ति सूत्रकृतापि प्रजापतावेव लिङ्गसद्भावस्योक्तत्वाच्च। एवमन्येष्वप्येतादृशेषु नियमविधिष्वतिव्याप्तिरूहनीया। इयं चाऽव्याप्तिः, अतिव्याप्तिश्च प्राचीनेष्वप्यात्यन्तिकत्वनिर्वचनपक्षेषु समाना। तस्मादप्राप्त्यात्यन्तिकत्वयोरनिर्वचनादयुक्तमपूर्वविधिलक्षणम्॥

इति षोडशश्लोकस्य व्याख्या।

---

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमद्विश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ विधिरसायनसुखोपयोजिन्यामपूर्वविधिलक्षणाक्षेपः।

---

नियमविधिर्नानाप्रकारो दृश्यते। तस्य "नियमः पक्षिके सति" इति वार्तिकोक्तेन लक्षणेन सङ्ग्रहो न भवितुमर्हतीति शङ्का।

अथ नियमविधिलक्षणमाक्षिपति—

हेतुः कुत्रापि कार्यं क्वचन तदुभयं कुत्र चिद्विध्युपात्तम्
त्रिध्यस्पृष्टं नियम्यं क्वचिदुभयविधं पाक्षिकत्वेन दृष्टम्।
तस्यैव प्रत्यनीकं क्वचिदपि कुहचित्पाक्षिकं नैव दृष्टम्
नानारूपं तदित्थं नियमविधिशतं दुर्ग्रहं लक्षणेन ॥१८॥

नानाप्रकारस्तावन्नियमविधिर्दृश्यते। स सर्वोऽपि "नियमः पाक्षिके सतीत्यनेन लक्षणेन संगृहीतुं न शक्यः। तथा हि-क्वचिदेकस्मिन्कार्येऽनियतानेकोपायप्राप्तावेकोपायनियमः, यथा "व्रीहीनवहन्ती"ति। क्वचिदेकस्योपायस्यानियतानेककार्यप्राप्तावेककार्यनियमः। यथा "यद्योन्यां गायति तदुत्तरयोर्गायती"ति। इदं नवमश्लोकावतारिकायामुपपादितम्। क्वचिदुभयनियमः यथा "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति"। इदमपि तत्रैवोपपादितम्।

यद्योन्यामित्यत्र कार्यमात्रनियमोदाहरणत्वशंका।

ननु तत्रोक्तया रीत्या "यद्योन्यामित्यत्राप्युभयनियमो लभ्यते। तथा च कथं कार्यमात्रनियमे तदुदाहरणम्; यथा हि—स्तोत्राङ्गत्वेनाऽवगतस्य साम्नस्तृचगाननिर्वाहाय तत्संस्कार्यत्वेनाऽनियतानेकर्ग्द्वयप्राप्तावुत्तरयोर्नियम; तथा स्तोत्राङ्गत्वेनाऽवगतयोरुत्तरयोर्ऋचोः संस्कारकत्वेनाऽनियतानेकसामप्राप्तौ योनिसाम्ना नियम इत्यपि सम्भवति; स्तोत्रस्य प्रगीतमन्त्रसाध्यस्तुतिरूपत्वेन सामापेक्षावश्यंभावात्; विशिष्य सामापेक्षाभावेऽपि सामसाधारणऋगभिव्यञ्जकापेक्षावश्यम्भावाच्चेति चेत्?

उभयनियमस्योदाहरणसमर्थनम्।

सत्यम्, यत्र साम्न इव ऋचामपि स्तोत्राङ्गत्वं प्रकरणपाठादिनावगतं, तत्र तथैव। यत्र तु विकृतिविशेषे वामदेव्यादिपृष्ठविधौ साममात्रस्य स्तोत्राङ्गत्वावगतौ तत्प्रकरणपाठादिरहितापि तत्संस्कार्या योनिः प्रकृतौ बृहद्योनिवत् वैश्यस्तोमे कण्वरथन्तरयोनिवच्च साम्नः स्तोत्राङ्गत्वनिर्वाहाय स्वयमपि तदङ्गत्वमर्थादापद्यते।[१] तत्र तदुत्तरयोः प्रागवगतं स्तोत्राङ्गत्वं नास्तीति; तन्निर्वाहायानियतसामप्राप्त्यभावान्न तत्र सामनियमः; किन्तु साम्न एव स्तोत्रीयस्य तृचगाननिर्वाहाय संस्कार्यऋग्विशेषनियम इति केवलं कार्यनियम एव। अतो "यद्योन्यां गायति तदुत्तरयोर्गायती" त्ययं योनिविषमच्छन्दस्कयोरुत्तरयोरपूर्वविधिः। योनिसमच्छन्दस्कयोस्तु क्रमप्रकरणावगतविनियोगयोः कार्योपायद्वयनियमविधिः; सामविनियोगाक्षिप्तविनियोगयोः कार्यमात्रनियमविधिरिति युक्तं कार्यनियमेऽपि तदुदाहरणम्।

---

[१] तत्र तत्रेति मु० पु० पा०।

### उभयनियमस्योदाहरणम् ।

एवं वाजपेये दक्षिणात्वेन देयानां सप्तदशानां रथानां मध्ये "इन्द्रस्य वज्रोऽसि वार्त्रघ्नः" इत्यादि याजुर्वैदिकमन्त्रैः सज्जीकृतं रथमधिकृत्य प्रवृत्ते यजुर्युक्तं रथमध्वर्यवे ददातीति वाक्ये; "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीते"ति फलार्थत्वेन विहितं ब्रह्मसामस्तोत्राश्रयं सौभरमधिकृत्य प्रवृत्तेषु "हीषिति वृष्टिकामाय निधनं कुर्यात्; ऊर्गित्यन्नाद्यकामाय; ऊ इति स्वर्गकामायेति वाक्येषु चोभयनियमो द्रष्टव्यः। एषूदाहरणेषु समप्राधान्येनोभयतो नियमलाभः। उपजीव्योपजीवकभावेनाऽपि स सम्भवति ।

### स्मार्तनियमस्योदाहरणम् ।

यथा—"याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदि"त्यत्र याजनादिषु कृष्यादिषु च धनार्जनोपायेष्वनियमेन प्राप्तेषु ब्राह्मणस्य याजनादय एव तदुपाया इति नियम्यन्ते । तेन ब्राह्मणानामेव याजनादयस्तदुपाया इत्यपि नियमो लभ्यते । एतद्विध्यभावे हि यज्ञ-दानाध्ययनविधिभिर्याजकाध्यापकप्रतिगृहीतृसाकाङ्क्षैरार्त्विज्यादिसमर्था ये केचिद्याजकादय आक्षिप्येरन्। एतद्विधिसत्त्वे त्वस्मदीयोऽयं धनार्जनोपाय इति याजनादिषु स्वत एव प्रवृत्तानां ब्राह्मणानां सत्त्वेन तत एव निराकाङ्क्षतया यत्किञ्चिदनियतयाजकाद्याक्षेपो नाऽवतरतीति ।

एवं तावन्नियम्ये तत्प्रतिसंबन्धिनि च विधिवाक्येनोपात्ते क्वचिदुपायनियमः, क्वचित्कार्यनियमः, क्वचिदुभयनियम इति त्रैविध्यं दर्शितम्। नियम्ये तत्प्रतिसंबन्धिन्युन्युभयस्मिन्नपि वा तदनुपात्तेऽपि स दृश्यते। तद्यथा "पुरोडाशं प्रथयती"त्यत्रानुपात्ते कर्त्तरि नियम्ये नियमः। "उच्चैर्ऋचा क्रियत" इत्यत्रानुपात्ते नियम्यप्रतिसंबन्धिनि मन्त्रे नियमः, व्रीहिभिर्यजेतेत्यत्र नियम्येऽवहनने तत्प्रतिसंबन्धिषु यवेषु चानुपात्तेषु नियमः। एवमुपात्तमनुपात्तमिति द्विविधमप्युदाहृतं नियम्यजातं पक्षप्राप्तमदृष्टं क्वचिन्नियम्यस्य पक्षप्राप्त्यभावेऽपि तत्प्रतिद्वन्द्विनां पक्षप्राप्तिमात्रेण नियमो दृश्यते। यथा "यदि सोमं न विन्देत्पूतीकानभिषुणुयादि"ति। अत्र हि सुसदृशानां बहूनामनियतप्राप्तौ मन्दसदृशानां पूतीकानामप्राप्तानामेव नियमः; क्वचिन्नियमविधौ किमपि पक्षप्राप्तौ न दृश्यते, यथा "हिरण्यगर्भः समवर्त्तताग्रे" इत्याघारमाघारयतीति। तत्र नियमतश्चोदका"दिन्द्र ऊर्ध्वोऽध्वर" इति मन्त्रप्राप्ताविन्द्रलिङ्गरहितत्वादत्यन्ताप्राप्तमेव मन्त्रान्तरमैन्द्राघारे नियम्यते। एतान्युदाहरणानि प्राक् तत्र तत्राऽऽविष्कृतानीति नेह प्रपञ्चितानि ।

एवं न्यायतौल्यादि"षेत्वेति"शाखामाच्छिनत्ति "उत्करे वाजिनमासादयति" "परिधौ पशुं नियुञ्जीते" ति वाक्येष्वपि नियमविधिरङ्गीकरणीय इति; तान्यपि पक्षप्राप्तिरहितोदाहरणानि ।

### हिरण्यगर्भमन्त्रविधेर्नियमत्वसमर्थनम् ।

यथा खलु हिरण्यगर्भमन्त्रस्य प्रजापतिलिङ्गस्यैन्द्राघारे स्वयमप्राप्तस्यैव विनि-

योगानन्तरं तन्निर्वाहाय कथं चिदिन्द्रप्रकाशकत्वस्य कल्पनीयत्वेऽपि दृष्टार्थत्वान्नियमादृष्टकल्पनावश्यंभावाच्च नियमविधित्वमभ्युपगम्यते ।

तथेषेत्वेतिमन्त्रस्य शाखाच्छेदने, तीक्ष्णाग्रस्योत्करस्य वाजिनासादने तनीयसः परिधेः पशुनियोजने च विनियोगानन्तरमेव तन्निर्वाहाय मन्त्रे छिनद्मीत्यध्याहारस्य उत्करे पृथ्वग्रत्वस्य, परिधौ प्रथिम्नश्चापेक्षणीयत्वेऽपि न्यायसाम्यान्नियमविधित्वमभ्युपगन्तव्यमेव । इत्थं नानारूपा नियमविधयः कथमनेन संग्रहीतुं लक्षणन शक्याः ।

पाक्षिके सतीत्यस्याऽर्थान्तरवर्णनेन नियमविधावव्याप्त्युद्भावनम् ।

पाक्षिकत्वे सतीत्यस्य कार्योपायद्वयपाक्षिकत्वपरत्वे एकैकनियमाव्याप्तेः; कार्यस्यैवोपायस्यैव वा पाक्षिकत्वपरत्वे तदन्यतरनियमाव्याप्तेः। कार्योपायद्वयमनुगमय्य विध्युपात्तस्य पाक्षिकत्वपरत्वे विध्यनुपात्तनियमाव्याप्तेः; उपात्तमनुपात्तं वा अनुगमय्य नियम्यस्य पाक्षिकत्वोक्तौ नियम्यप्रतिद्वन्द्विनामेव पाक्षिकत्ववन्नियमविधाव्याप्तेः । नियम्यस्यान्यस्य वा यस्य कस्य चित्पाक्षिकत्वपरत्वोक्तावपि पांक्षिकत्वमात्ररहितेषु नियमविधिष्वव्याप्तेरित्यर्थः । श्लोके "तस्यैव प्रत्यनीकं क्वचिदपी" त्यत्र पाक्षिकत्वेन दृष्टमित्यनुषङ्गः ॥१७॥

इति सप्तदशश्लोकव्याख्या ।

---

अष्टादशश्लोकस्यावतारिका ।

नियमविधिलक्षणस्यातिव्याप्त्युद्भावनम् ।

एवं लक्षणस्याव्याप्तिमुक्त्वाऽतिव्याप्तिमाह—

तच्चातिव्याप्तमग्नेर्विकृतिजुषि विधौ मीलनस्याग्रतायाः
नैमित्तिकयाश्च विध्योरखिलविधिषु च प्रापकावर्तकेषु ।
अप्राप्तांशस्य पूर्तिः फलमपि यदि तत्राधिकं योजनीयम्
शेषांशव्यर्थता स्यादखिलफलकताविध्यतिव्यापनं च ॥१८॥

यदि पाक्षिके सतीत्यत्र विधिविषयस्य पाक्षिकत्वं विवक्षितम् । तदा वैकृताग्निविधावतिव्याप्तिः; तद्विषयस्याग्नेरुत्तरवेद्या विकल्पितस्य पाक्षिकत्वात् । यदि विध्युद्देश्यस्य; तदा रथन्तरे प्रस्तूयमाने संमीलयेदितिविधावतिव्याप्तिः; । तदुद्देश्यरथन्तरस्य ज्योतिष्टोमे पाक्षिकत्वात् । यद्युभयोः; तदा 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादि" ति प्रागुदाहृतपरिसंख्यायामतिव्याप्तिः; तत्रोद्देश्यरथन्तरसामत्वस्य तन्निमित्तकस्य विधेयस्यैन्द्रवायवाग्रत्वस्य च प्रकृतौ पाक्षिकत्वात्। यदि विधेयोद्देश्यसाधारण्येन विध्युपात्तस्य पाक्षिकत्वं विवक्षितम्; तदोदाहृतेषु त्रिष्वपि विधिष्वतिव्याप्तिः । यदि विध्युपात्त-तदनुपात्तसाधारण्येन नियम्य-

पाक्षिकत्वं विवक्षितम्; तदा नियमविधिलक्षणे नियम्यप्रवेशे आत्माश्रयापत्तेः। यदि नियम्यशब्देन प्रकृतविधिफलाश्रयमात्रं विवक्षणीयं, तथा सत्युदाहृते नैमित्तिकाग्रताविधावतिव्याप्तिः। तत्र विकृतिविशेषव्यावृत्तिफलाश्रयस्यैन्द्रवायवाग्रत्वस्य पाक्षिकत्वात् यदि नियम्यानियम्यसाधारण्येन यस्य कस्य चित्पाक्षिकत्वं विवक्षितम्; तदा सर्वेष्वप्यपूर्वविधि-परिसंख्याविधिष्वतिव्याप्तिः।

पाक्षिके सतीत्यत्राप्राप्तांशपूरणफलकत्वविशेषणदानेन
पूर्वोक्तातिव्याप्तिवारणेऽपि श्रुतांशस्य वैयर्थ्यापादनम्।

स्यादेतत् यस्य कस्य चित्पाक्षिकत्वे सति तदप्राप्तांशपूरणफलो नियमविधिरित्यधिकं योज्यते; तथा सति न क्वाप्यतिव्याप्तिरिति चेत्। एवं तर्हि लक्षणे श्रुतांशो व्यर्थः स्यात्; अप्राप्तांशपूरणफलो नियमविधिरित्येतावत एव विशिष्टलक्षणपूर्ववत्त्वात्' न चैवमेवाऽस्त्विति वाच्यम्; "सर्वेभ्यो ज्योतिष्टोम" इति सर्वफलकत्वविधावतिव्याप्तेः। प्रातिस्विकवाक्येन स्वर्गार्थत्वे प्राप्ते तस्य[१] तदप्राप्तफलान्तराप्राप्तांपूशरणार्थत्वादित्यर्थः।

इत्यष्टादशश्लोकस्य व्याख्या।

---

अथैकोनविंशश्लोकस्यावतरणिका।

अप्राप्तेर्विरोध्याक्रमणप्रयुक्तत्वविवक्षयातिव्याप्तिनिरसनकथनम्।

स्यादेतत्—अप्राप्तांशपूरणफलको नियमविधिरितिलक्षणे अप्राप्तत्वं विरोध्याक्रमणप्रयुक्तत्वं विवक्षितम्। अतो नोक्तातिव्याप्तिः। सार्वकाम्यविधौ स्वर्गान्यफलांशस्याऽप्राप्तेः प्रापकप्रमाणाभावप्रयुक्तत्वेन विरोध्याक्रमणप्रयुक्तत्वाभावात्। न चाऽसम्भवः। नियमविध्युदाहरणेऽवहननादिप्रापकलौकिकप्रमाणादिसत्त्वेऽपि तदप्राप्तेर्विदलनादिविरोध्याक्रमणप्रयुक्तत्वात्।

अप्राप्तांशस्यानिर्धारितत्वविशेषणदानेनातिव्याप्तिपरिहारकथनम्।

यद्वाऽनिर्द्धारितत्वमप्राप्तांशस्य विशेषणं क्रियते। तथा च सार्वकाम्यविधौ स्वर्गांशः प्राप्तः तदन्यफलांशस्त्वप्राप्त इति निर्द्धारणसद्भावान्नातिव्याप्तिः। नाप्यसम्भवः। व्रीह्यादिष्ववहननाद्यप्राप्तांशस्येदन्तया निर्द्धारणाभावादित्याशङ्क्याह—

अप्राप्तत्वं विरोध्याक्रमणकृतमिहापेक्ष्यते यद्यथापि
स्याद्दोषोऽयं हि पृष्ठ्यः षडह इतिविधावप्ययं निर्निरोधः।

---

१ पूर्वहत्वादिति २ पु० पा०।

अप्राप्तांशं विशेष्टुं क्रियत इति मतं यद्यनिर्धारितत्वम्
श्यावाश्वब्राह्मणोक्तिप्रभृतिविधिगणातिप्रसक्तिस्तथापि ॥१६॥

प्रथमविवक्षायां कृतायामप्युद्भावितसार्वकाम्यविध्यतिव्याप्तिदोषस्तदवस्थ एव; विश्वजिदधिकरणपूर्वपक्षन्यायस्य स्वर्गान्यफलानामपि प्रापकप्रमाणस्य सत्त्वेन तदप्राप्तेस्तन्न्यायापवादकस्वर्गकामविधिप्राप्ति-तद्विरोध्याक्रमणप्रयुक्तत्वात्।

प्राप्तत्वं विरोध्याक्रमणप्रयुक्तत्वमिति प्रथमपक्षेऽतिव्याप्त्युद्भावनम्।

ननु-अप्राप्तिकरम्वितविरोध्याक्रमणप्रयुक्तत्वं विवक्षितम्। अस्ति च व्रीह्या-दिष्ववहननाद्यप्राप्तावाक्षेपकृताप्राप्तिकरम्वितप्राप्तिकविदलनादिरूपविरोध्याक्रमणप्रयुक्त-त्वम्। एवं च न सार्वकाम्यविधावतिव्याप्तिस्तदभावे स्वर्गान्यफलाप्राप्तेः स्वर्ग-कामवाक्यकृतनियतप्राप्तिकस्वर्गरूपविरोध्याक्रमणप्रयुक्तत्वादिति चेत्। एवमपि "पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य" इति पृष्ठ्यषडहोद्देशेन बृहद्रथन्तरपृष्ठविधावति-व्याप्तिरनिवार्या। षडहांशेषु तृतीयादिष्वहस्सु, बृहद्रथन्तराप्राप्तेरप्राप्तिकरम्वित-प्राप्तिकवैरूपवैराजादिरूपविरोध्याक्रमणप्रयुक्तत्वात्।

अनिर्धारितत्वमप्राप्तांशस्य विशेषणमिति द्वितीयप्रकारस्य दूषणम्॥

द्वितीयविवक्षायां यद्यपि नोक्तातिव्याप्तिः; बृहद्रथन्तराद्यप्राप्तांशस्तृतीयसुत्या-दिरूप इति निर्द्धारणसम्भवात्। तथापि "अश्वः श्यावो दक्षिणेत्युपहव्यदक्षिणां विधाय श्राविते "स ब्रह्मणे देय" इति विधौ; "औदुम्बरस्सोमचमसो दक्षिणे"ति दक्षिणां विधाय "ऋतपेये श्राविते स प्रियाय सगोत्राय ब्रह्मणे देय" इति विधौ; आयुः—कामेष्टिप्रकरणश्रुते "सर्वं ब्रह्मणे परिहरती"ति विधौ चातिव्याप्तिः, सर्वऋत्विक्साधारणेष्वश्व-सोमचमस-हविःशेषेष्वयं ब्रह्मणोंऽशः, अयमन्येषामिति निर्द्धारणासम्भवात्। तस्मादव्याप्त्यतिव्याप्तिग्रस्तत्वान्नियमविधिलक्षणमपि न युक्तमिति भावः ॥१९॥

इत्येकोनविंशश्लोकव्याख्या।

---

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमद्विश्वजि-
द्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ विधिरसायन-
सुखोपयोजिन्यां नियमविधिलक्षणाक्षेपः।

---

परिसंख्यालक्षणमाक्षिपति—

तत्राऽन्यत्रेति राशिद्वितयमभिहितं लक्षणे पारिसंख्ये
पश्यामस्तत्र लक्ष्योपगतमनुगतं भिन्नधर्मोपगूढम् ।
पाठप्राप्ताग्रताविध्यनुगतिरहितं विध्युपात्तानुपात्तम्
ग्राह्यं व्यावर्तनीयं तदपि च न भजत्यावपन्तीति लक्ष्यम् ॥२०॥

### शेषि-शेषभेदेन परिसंख्याया द्वैविध्यनिरूपणम् ।

"तत्र च अन्यत्र च प्राप्त" इति परिसंख्यालक्षणमित्थं खलु लक्ष्येषु योज्यते । "इमामगृम्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति लक्ष्ये तत्र-अश्वरशनाग्रहणे अन्यत्र—गर्दभरशनाग्रहणे च शेषिणि, एकस्मिन्मन्त्ररूपे शेषे मन्त्रलिङ्गाविशेषात्प्राप्ते सति गर्दभरशनाग्रहणरूपशेष्यन्तरपरिसंख्या । "दण्डी प्रैषानन्वाहे"ति लक्ष्ये तत्र-प्रैषानुवचने, अन्यत्र-रात्रिप्रचारादिके च स्थित्वोच्चैरनवानकरणाय, तमोवगाहनादिसौकर्याय च किञ्चिदवलम्बनापेक्षे मैत्रावरुणकार्ये शेषिणि मैत्रावरुणगृहीतदीक्षितदण्डरूपे एकस्मिन् शेषे प्राप्ते, रात्रिप्रचारादिशेष्यन्तरपरिसंख्या ।

### शेषपरिसंख्याया उदाहरणम् ।

"शंय्वन्ता प्रायणीया सन्तिष्ठते" इति लक्ष्ये प्रायणीयायामेकस्यां शेषिण्यां शंय्वन्ताङ्गकलापरूपे; तदुपरितनाङ्गकलापरूपे च शेषे प्राप्ते तदुपरितनाङ्गकलापरूपशेषान्तरपरिसंख्या । एव "मिडान्तातिथ्या सन्तिष्ठत" इत्यादावपीति ।एवञ्चाऽश्वरशनाग्रहण-प्रैषानुवचन-शंय्विडान्ताङ्गकलापादिकमेकराशिं—गर्दभरसनाग्रहण-[2]रात्रिप्रचार-शंय्विडोपरितनाङ्गकलापादिकमपरं च राशिं कृत्वा; तद्राशिद्वयं लक्षणगताभ्यां तदन्यशब्दाभ्यामभिधातव्यम्; समभिव्याहृतपरस्यापि सर्वनाम्नः स्तेनरक्तं रागात्" तद्वति तत्प्रकारकं ज्ञानं प्रमेत्यादाविव किञ्चिद्रूपक्रोडीकृतराश्यन्तर्गतपरत्वावश्यंभावात् । अन्यथा तस्य तत्र तत्र व्यवस्थितार्थबोधकत्वनियमानुपपत्तेः । तत्तु राशिद्वयं लक्ष्यप्राप्तं सर्वलक्ष्यानुगतं परस्परव्यावृत्तधर्मावच्छिन्नं न पश्यामः ।

### उपात्तानुपात्तभेदेन राशिद्वयस्य तच्छब्दान्यशब्दाभ्यां ग्रहणमिति पक्षस्योदाहरणम् ।

अथोच्येत-विध्युपात्तमश्वरशनादि तच्छब्देनाऽभिधीयते; तदनुपात्तं गर्दभरशनान्यशब्देन इति, नैतद्युक्तम् । "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादि"ति परिसंख्यायामव्याप्तिप्रसङ्गात् । रथन्तरसामसु; अरथन्तरसामसु च ज्योतिष्टोमविकृतिषु चोदकादैन्द्रवायवाग्रतायां शेषतया प्रसक्तायाम्; अरथन्तरसाम्नां परिसंख्यार्थं ज्योतिष्टोमे पाठप्राप्तायास्तस्या नैमित्तिकत्वकरणमिति हि प्रागुक्तम् । एवं "दीक्षाः सोमस्य, दक्षिणाः सोमस्ये"त्यादिपरिसंख्यास्वप्यव्याप्तिर्द्रष्टव्या ।

---

[1] तच्चान्यच्चेति इ० १ पु: पा २ ।

[2] अयं पा० २ पु० मा९ ।

तत्र चाऽन्यत्र चेतिशब्दाभ्यां ग्राह्यव्या-
वर्तनीययोर्ग्रहणमिति पक्षस्योपस्थापनम्।

ननु माभूद्विध्युपात्तं तदनुपात्तमिति राशिद्वयम्। ग्राह्यं व्यावर्त्तनीयमिति राशिद्वयं तदन्यशब्दाभिधेयं भविष्यति।

तत्र दोषोद्भावनम्।

तदपि न युक्तम्। "त्रीणि ह वै यज्ञस्योदराणि गायत्रीबृहत्यनुष्टुप् च, अत्र ह्येवावपन्ति अत एवोद्वपन्ती"ति परिसंख्यायामव्याप्तिप्रसङ्गात्। अत्र हि विवृद्धस्तोमक्रतुगतेषु सर्वेष्वपि स्तोत्रेषु स्तोमविवृद्ध्यर्थं प्राकृतेभ्योऽधिकावापे प्राप्तेऽत्र ह्येवावपन्तीत्यनेन पवमानगतगायत्र्यादिभ्योऽन्यत्सर्वं परिसंख्यायत इति प्रागुक्तम्। अत्र परिसंख्यायामावापस्य व्यावर्तनीयेषु स्तोत्रान्तरेष्वेव प्राप्तिरस्ति, न तु ग्राह्येषु पवमानगतगायत्र्यादिषु। यद्यपि स्तोत्रान्तरेष्विव पवमानेष्वपि स्तोमविवृद्ध्यर्थमावापप्राप्तिरस्ति; तथापि न सामान्तराणामावापप्राप्तिः। किन्तु सामसहितानामृगन्तराणामेव स्तोत्रीयऋगतसंख्याधिक्यरूपस्तोमविवृद्धये ऋगन्तरावाप एवाऽतिसामञ्जस्यात्।

येषु तु विवृद्धस्तोमकेषु क्रतुषु प्रत्यक्षविहितानि सामानि सन्ति, तेष्वपि तानि कण्वरथन्तरन्यायेन स्वयोनौ स्वयोन्युत्तरयोश्च गेयानि प्राप्नुवन्ति न प्राकृतीषु ऋक्षु। उत्तराग्रन्थे तत्तद्योनेः तत्तदुत्तरयोश्च पाठस्य क्रत्वर्थतया ताभिरतिदेशप्राप्तप्राकृतऋग्बाधात्। अतस्तेष्वपि तत्तत्सामसहितानामृगन्तराणामेव प्राप्तिः। एवञ्च गायत्र्यादिषु प्राप्तिर्न शक्यशङ्का; ऋचामृगन्तरेष्वावापासम्भवात्।

येषां प्रत्यक्षविहितानां वैकृतसाम्नामुत्तराग्रन्थे योनिर्न पठिता, अत एव तदुत्तरे अपि न स्तः, तेषामावापस्य प्राकृतक्ष्वेव प्राप्तावपि न गायत्र्यादिषु प्राप्तिः। किन्त्वन्त्यतृच एव "आगन्तूनामन्ते निवेश इतिन्यायस्या"ऽन्ते तु बादरायण [५-२-८-१९] इति पञ्चमे दर्शितत्वात्। ततश्चऽत्र ह्येवावपन्ति" इति वाक्येनैवकारश्रुतिबलात्पवमानगतगायत्र्यादिभ्योऽन्यत्र सर्वत्राप्यावापं परिसञ्चक्षाणेन स्तोत्रान्तराणां पवमानगतान्त्यस्यतृचस्य च निवृत्तौ सत्यामर्थादावापः पवमनगतगायत्र्यादिष्वेव व्यवतिष्ठते, स च गायत्र्याद्याधारत्वसामर्थ्यात् साम्नामेव नर्चामित्यपि व्यवतिष्ठते। न च गायत्र्यादिभ्योऽन्यत्राऽऽवापपरिसंख्यानेऽपि गायत्र्यादिष्वावापविधाने तास्वावापो न प्राप्नोति; स्तोत्रान्तरेष्विवावश्यकेनाभ्यासेन संख्यापूरणसम्भवात्। ततश्च गायत्र्यादिष्वावापमिच्छता तद्विधानार्थमेवेदं वाक्यं न तु स्तोत्रान्तरपरिसंख्यार्थमित्यङ्गीकरणीयम्। एकस्य वाक्यस्योभयत्र व्यापारायोगादितिवाच्यम्; एवकारोपहतविधिशक्तिकस्याऽस्य परिसंख्यापरत्वावश्यम्भावात् स्तोत्रान्तराणामगत्याभ्यासेनैव संख्यापूरणेऽपि पृथक्त्वनिवेशिन्याः संख्यायाः सम्भवत्सामञ्जस्यापरित्यागाय न्यायप्राप्तस्य क्वचित् क्वचित् "द्वात्रिंशत्पवमानोऽभिषेचनीय" इत्यादौ प्रत्यक्षविहितराजनसामाद्यपेक्षितस्य चाऽऽवापस्यार्थाद्गायत्र्यादिषु व्यवस्थासिद्धेः। ततश्चात्र परिसंख्यैव वाक्यार्थः।

इयांस्तु विशेषः-इमामगृभ्णन् इत्यादिपरिसंख्यायामश्वरशनाग्रहणे मन्त्रप्राप्तिः श्रौती। आर्थी गर्दभरसनाग्रहणपरिसंख्या। इह त्वेवकारश्रवणादावापे शाब्दी गायत्र्याद्यतिरिक्तपरिसंख्या, आर्थी तस्य गायत्र्यादिषु प्राप्तिः, तत्सामर्थ्याच्च तस्य ऋग्विषयत्वं परित्यज्य सामविषयत्वप्राप्तिः। एवञ्चाऽत्र स्तोत्रान्तरपवमानगतान्यतृचेषु व्यावर्त्तनीयेष्विव ग्राह्येषु गायत्र्यादिष्वेतद्वाक्योपजीवनमन्तरेणाऽऽवापस्य प्राप्त्यभावाद् अत्राऽतिव्याप्तिरनिवार्या। इयं चाव्याप्तिर्विध्युपात्तानुपात्तराशिद्वयमितिपक्षे तत्र चाऽन्यत्र चेति पदद्वयस्वारस्यानुरोधेन, राशिद्वयकरणव्यसनं परित्यज्य द्वयोः समुच्चित्य प्राप्तिमात्रं तत्र चाऽन्यत्र प्राप्त इत्यनेन विवक्षितमिति पक्षान्तर[1]परिग्रहे चाऽविशिष्टैव। तदेवमत्र हयेवावपन्तीति परिसंख्यायां लक्षणस्याऽव्याप्तिः स्थिता।

इति विंशश्लोकस्य व्याख्या।

---

अथैकविंशश्लोक व्याख्या।

अथान्यत्राप्यव्याप्तिं-तत्परिहारार्थविवक्षाप्रसक्तामतिव्याप्तिञ्च दर्शयति—

प्राप्तिः शेषिद्वये चेदिह विविदिषिताऽशेषयुग्मे न सा स्यात्
अव्याप्तिस्तत्राश्रयादिद्वितयजुषि भवेच्छेषशेषित्वतश्चेत्।
यत्किञ्चिद्योगतश्चेत् बहुषडहशतोक्थ्यादिविध्याक्रमः स्यात्
सर्वत्र ब्राह्मणोक्तिप्रमुखविधिषु चाऽतिप्रसक्तिः समाना ॥२१॥

यदि "तत्र चाऽन्यत्र च प्राप्त" इत्यनेन शेषिद्वये एकस्य शेषस्य प्राप्तिर्विवक्षिता, तदानीमेकस्मिन् शेषिणि शेषद्वयप्राप्तौ या परिसंख्या शंय्विडोत्तराङ्गकलापादिविषया तस्यां लक्षणं न स्यात्। यदि त्वेकस्मिन् शेषिणि शेषद्वयप्राप्तिर्विवक्षिता, तदा शेषिद्वये एकस्य शेषस्य प्राप्तौ या परिसंख्या गर्दभरशनाग्रहणादिविषया तस्यां लक्षणं न स्यात्।

शेष-शेषिद्वयसंग्रहाय शेष-शेषि भावसम्बन्धेन
प्राप्तिविवक्षायामपि दोषापरिहारेण न्यायसुधा-
कृन्मतेन सप्तम्याः सामानाधिकरण्येन
वैयधिकरण्येन च योजनाप्रदर्शनम्।

यद्युच्येत—उभयसंग्रहाय शेषशेषिभावसंबन्धेन प्राप्तिर्विवक्षिता इति; तथापि तदुभयसंग्रहालाभस्तदवस्थ एव। यतस्तत्र चाऽन्यत्र चेति सप्तम्योः प्राप्त इति

---

[1] पक्षाभ्यन्तर इ० २ पु० पा०।

सप्तम्याश्च सामानाधिकरण्यविवक्षायां गर्दभरशनाग्रहणादिपरिसंख्यायामेव लक्षणं न[1]स्यात्, वैयधिकरण्येनाऽन्वयविवक्षायां शंय्विडोत्तराङ्गकलापादिपरिसंख्यायामेव न स्यात्[2]। प्राप्तिर्हि शेषिणि शेषस्य व्यवह्रियते न तु शेषे शेषिणः। अत एव न्यायसुधायां "तत्र चान्यत्र च प्राप्त इत्यस्य" शेषान्तरपरिसंख्यायां सामानाधिकरण्येन; शेष्यन्तरपरिसंख्यायां वैयधिकरण्येन च योजना दर्शिता। एवं योजनया हि लक्षणस्य शेष-शेषिपरिसंख्ययोरननुगम एव ख्यापितः।

शेषस्य शेषिसम्बन्धित्वमिव शेषिणोऽपि शेषसम्बन्धित्वेनाऽवगतेः प्राप्तिरिति क्रोडीकारेणैकपक्षस्योपस्थापनम्।

अथाऽननुगमपरिहाराय सामानाधिकरण्य-वैयधिकरण्ययोरेक एव पक्ष[3] आश्रीयते। न चैवं सति सामानाधिकरण्यपक्षे शेष्यन्तरपरिसंख्यायाम्; वैयधिकरण्यपक्षे शेषान्तरपरिसंख्यायाञ्चाव्याप्तिः। न हि प्राप्तिः शेषस्यैवेति नियमः। शेषस्य किञ्चिच्छेषिसंबन्धित्वेनावगतेरिव शेषिणोऽपि किञ्चिच्छेषसम्बन्धित्वेनावगतेः प्राप्तिरिति व्यपदेष्टुं शक्यत्वात्। तथा च सामानाधिकरण्यपक्षेऽश्वगर्दभरशनाग्रहणयोः शेषशेषिभावेन मन्त्रसंबन्धितया प्राप्तिरविकला। वैयधिकरण्यपक्षेऽपि गृहमेधीयस्य शेष-शेषिभावेनाज्यभाग-तदितराङ्गकलापसंबन्धितया प्राप्तिरविकलेति पक्षद्वयेऽपि न क्वाप्यव्याप्तिरिति चेत्।

येन केनचित्सम्बन्धेनेति विवक्षयाऽव्याप्तिपरिहारं मन्यमानस्य शङ्का।

अस्तुनामाऽत्रैवमव्याप्तिपरिहारः; तथाप्याश्रयान्तर-निमित्तान्तरपरिसंख्ययोरव्याप्तिः स्यात्; आश्रयाश्रयिणोर्निमित्तनिमित्तिनोश्च शेषशेषिभावाभावात्। दर्शितञ्च नवमश्लोकावतारिकायां "वाग्वा एषा यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इतिविधेराश्रयान्तरपरिसंख्यार्थत्वम्, "सायं जुहोति" "प्रातर्जुहोती"ति विध्योर्निमित्तान्तरपरिसंख्यार्थत्वञ्च माभूत्तर्हि शेषशेषिभावेनेति विवक्षा, प्रयोजनाभावादव्याप्त्यावहत्वाच्च।

शेषशेषिभावेनाश्रयाश्रयिभावेन निमित्तनिमित्तिभावेन; अन्येन वा येन केनचित्सम्बन्धेन "तत्र चान्यत्र प्राप्त" इत्येतावदेव लक्षणमस्तु इति चेत्।

पूर्वोक्त विवक्षयाऽव्याप्तिपरिहारेऽप्यतिव्याप्त्या तस्य दूषणम्।

एवं सति "षडहा भवन्ति" चत्वारो भवन्ति[4] "शतोक्थ्यं भवति" "शताग्निष्टोमं भवति" सर्वस्त्रिवृद्भवति "सर्वः पञ्चदश" इत्यादिविधिष्वतिव्याप्तिः स्यात्। नन्वेकत्र समुच्चित्य प्राप्तिरिह विवक्षिता, न चोदाहृतस्थलेषु सास्ति। षट्त्रिंशदात्रे

---

[1] लक्षणमव्याप्तं २पु० पा०।

[2] लक्षणमव्याप्तं स्यादिति २ पु० पा०।

[3] एक पक्ष आश्रीयत इति० मु० पु० पा०।

[4] अयं पा० २ पु.ना०।

ह्यादितः षट्स्वहःसु षडहधर्मजातस्य चोदकात्प्राप्तिः। ततश्चतुर्षु[1] छन्दोमधर्मजातस्य। [2]नत्वेकत्रोभयोः समुच्चित्य प्राप्तिरस्ति तथा शतोक्थ्ये शताग्निष्टोमे चाऽद्ये अहन्यग्निष्टोमसंस्थाया द्वितीय-तृतीययोरुक्थसंस्थाया इत्येवं प्रकारेण चोदकाद्भिन्नविषया प्राप्तिः। एवमेकस्तोमकक्रतुषु बहिष्पवमाने त्रिवृत्स्तोमस्य, आज्येषु माध्यंदिनपवमाने पञ्चदशस्तोमस्येत्येवं रूपेण चोदकाद्भिन्नविषयैव प्राप्तिरतो न क्वाप्यतिव्याप्तिरिति चेत् न। षडहधर्मोक्थ्यादिसंस्था त्रिवृदादिस्तोमशेषिणामहः स्तोत्राणां भेदसत्त्वेऽप्येकैकस्मिन्षट्त्रिंशद्रात्र-शतोक्थ्यशताग्निष्टोमैकस्तोमक[3] क्रतुप्रयोगाणामभिन्नत्वेनैकैकस्मिन् क्रतुप्रयोगे षडहछन्दोमधर्मादीनां समुच्चित्य प्राप्तिसत्त्वात्तेषामहरादिशेषत्वेऽपि प्रयोगेणाऽपि सह तदन्तर्गतत्वलक्षणसंबन्धसत्त्वाच्छेषशेषिभावसंबन्धविशेषस्याविवक्षितत्वात्।

स्थलान्तरेऽतिव्याप्त्युद्भावनम्।

अपि च शेषत्वादिविषयासु सर्वास्वपि विवक्षासु "सर्वं ब्रह्मणे परिहरति" "स ब्रह्मणे देयः" "स प्रियाय सगोत्राय ब्रह्मणे देय" इति विधिष्वतिव्याप्तिः समाना; ब्रह्मणस्तदतिरिक्तर्त्विग्वर्गस्य चैकस्मिन्हविःशेषे, श्यावाश्वे सामचमसे च प्राप्तिसत्त्वात्। एवमग्निष्टुत्याग्नेया ग्रहा भवन्ति इति विधौ चाऽतिव्याप्तिः; तस्याग्निष्टुतीन्द्रवाय्वाद्यनेकदेवताप्राप्तौ चाग्निविधानार्थत्वात्। तस्मादतिव्याप्तत्वादपि नेदं लक्षणं युक्तमिति भावः।

इति एकविंशश्लोकव्याख्या।

---

अथ द्वाविंशश्लोकस्यावतारिका।

अप्राप्तविषयेष्विव पक्षप्राप्तविषयेष्वपि विधिष्वतिव्याप्तिरस्तीत्याह—

तत्राऽन्यत्राऽपि चाप्तिर्नियमविधिषु चास्तीत्यतिव्याप्तिरेव<br>
नित्यप्राप्तिर्विवक्ष्या न खलु विरहतः कूर्मकीशादिभक्षे।<br>
नित्यानित्यापि वाऽस्मिन्कथमपि च समुच्चित्य चेत्प्राप्तिरिष्टा<br>
पत्नीसंयाजान्तायां नियमकृतिविधौ सा तथाप्यप्रणोद्या ॥२२॥

परिसंख्यायां प्रसिद्धोदाहरणसङ्ग्रहाभावाभिया<br>
नित्यप्राप्तत्वं न विवक्षितुं शक्यत इति कथनम्।

---

[1] छन्दोगजातस्येति मु० पु० पा०।

[2] नन्वेकत्रेति मु० पु० पा०।

[3] स्तोमकेति १ पु० ना०।

अवहननादिविधयोऽप्यवहननविदलनादिषु पक्षप्राप्तेषु प्रवर्त्तन्त इति तेष्वतिव्याप्तिः स्पष्टैव। "ननु तत्र चाऽन्यत्र च प्राप्ते" इत्यत्र नित्यप्राप्तत्वं विवक्षितमिति चेत्। नैवं विवक्षितुं शक्यते; "पञ्च पञ्चनखा भक्ष्या" इति प्रसिद्धपरिसंख्यासंग्रहाभावप्रसङ्गात्। न हि कूर्म-शश-शल्यक-श्वावित्-गोधानां वानर-शृगालादीनाञ्च भक्षणं पुरुषे नित्यप्राप्तम्, तेषां भक्षणेनेव कदा चित्तद्वर्जनेनापि पुरुषस्येप्सितत्वसंभवेन तद्वर्जनस्याऽपि क्वचिद्रागतः प्राप्तिसत्त्वात्।

तत्र चाऽन्यत्र चेत्यनेन नित्यानित्याप्रवेशेन समुच्चित्यप्राप्तिरितिशङ्का।

ननु तर्हि नित्यानित्यत्वानादरेण समुच्चित्य प्राप्तिरत्र विवक्ष्यते। तथा च सति न नियमविधिष्वतिव्याप्तिः, अवहननविदलनादीनां परस्परप्रतिक्षेपकत्वेन समुच्चित्य प्राप्त्यसंभवात्। नाऽप्युदाहृतपरिसंख्यायामव्याप्तिः, कूर्मादि-वानरादिभक्षणयोः परस्परप्रतिक्षेपकत्वाभावेन समुच्चित्य प्राप्तिसंभवात् इति चेत्।

समुच्चित्यप्राप्तिविवक्षायां नियमविधावतिव्याप्त्युद्भावनम्।

एवमपि "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त" इति नियमविधावतिव्याप्तिः। इदं हि वाक्यं शंय्विडान्तवाक्यरीत्या द्वादशाहिकानामह्नां पत्नीसंयाजान्तत्वविधानेन तदुत्तराङ्गकलापपरिसंख्यार्थं न भवति; किन्तु "द्वादशाहेन प्रजाकामं याजयेदि" त्यहः शब्दोदितानां द्वादशानां यागानां प्रजाकामार्थेन चोदितानामेकफलत्वेन प्रयोगैक्ये सति तन्निर्वाहाय पूर्वपूर्वमहः क्व चित्पदार्थेऽवस्थाप्य; परंपरमुपक्रमितव्यमिति, अनियमेन पत्नीसंयाजरूपे, तत्प्राचीने, तदुपरितने वा क्व चिदङ्गेऽवस्थाने प्राप्ते पत्नीसंयाजेष्ववस्थापननियमार्थमित्युपपादितं नवमे पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ५।१।८।२९ इत्यधिकरणे। ततश्च पत्नीसंयाजान्तानां तदुपरितनानाञ्चाङ्गानां कदा चित्समुच्चित्य प्राप्तिरप्यस्तीत्यतिव्याप्तिरनिवार्या।

अतिव्याप्तेरुदाहरणान्तरम्।

एवं "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदि"ति नियमविधावतिव्याप्तिर्द्रष्टव्या। उपपादितञ्च जौहवाज्ये प्रयाजानामन्येषां च कदा चित्समुच्चित्य प्राप्तिसत्वम् अथाऽपि नियमविधित्वं च नवमश्लोकावतारिकायाम्।

इति द्वाविंशश्लोकव्याख्या।

---

त्रयोविंशश्लोकस्यावतारिका ;

स्यादेतत् तत्र चान्यत्र च प्राप्तैतदन्यतरनिवृत्तिफलको विधिः परिसंख्येति फलमप्यधिकं लक्षणे योजयिष्यामः। तथा चोदाहृतेष्वप्राप्तविषयेषु चतुष्षडहादिविधिषु तत्तप्राप्तेरेव फलत्वेन पक्षप्राप्तविषयेष्ववहननादिविधिषु तत्तन्नियमनस्यैव फलत्वेन निवृत्तेरानुषङ्गिकत्वान्नातिव्याप्तिरित्याशङ्क्याह—

परिसंख्यालक्षणे व्यावृत्तिफलकत्वनिवेशेन पूर्वोक्तदूषणनिराकरणम्।

योज्यस्तत्रैव बोधः फलमपि यदि तद्वार्थ एवाऽवशिष्टः
तस्याप्युक्त्या निषेधात्मकविधिनियमातिप्रसक्तेरवरोधात्।
प्राप्तं सर्वत्र किञ्चित्खलु सुलभतरं वर्जनीयेन साकम्
गृह्यन्ते ते ऽपि लक्ष्या यदि तदपि विधौ सर्वथातिप्रसक्तिः ॥२३॥

यदि लक्षणे निवृत्तिफलकत्वमप्यधिकं निवेश्यते; तर्ह्यवशिष्टः श्रुतांशो व्यर्थः, विधि-नियमयोः प्राप्ति-पूर्तिफलकयोर्निवृत्तिफलकत्वाभावेन तावतैव सर्वातिव्याप्ति-वारणात्। स्यादेतत् निषेधात्मका अपि सन्ति विधयो नियमाश्च, यथा "दीक्षितो न जुहोति" "न तौ पशौ करोति" "नाऽतिरात्रे षोडशिनं गृह्णाति" इत्यादयो विधि-प्राप्तानां निषेधानां विधयः दीक्षामध्येऽग्निहोत्रहोमानाम्, पशावाज्यभागयो; अतिरात्रे षोडशिग्रहस्य च वर्जनानामत्यन्ताप्राप्तत्वात् "न हिंस्यात्" "नानृतं वदेत्" इत्यादयो रागप्राप्तानां निषेधा नियमाः। हिंसादिनेव कदा चित्तद्वर्जनेनाऽपि पुरुषस्येप्सितसंभवेन तस्याऽपि पक्षे प्राप्तत्वात् त[1]त्राऽन्यनिवृत्तिमात्रफलकस्याऽति-व्याप्तेः, तत्र चाऽन्यत्र समुच्चित्य प्राप्त इत्यपि विशेषणं क्रियत इति चेत्।

मैवम्। तेष्वतिव्याप्तेः। तस्य विशेषणत्वस्योक्त्याऽपि निरोधसम्भवात्। सर्वत्र हि किञ्चित्किञ्चिद्वर्जनीयं वर्जनीयेन सह समुच्चित्य प्राप्तं सुलभमेव यथा दीक्षामध्ये क्रत्वर्थहोमाः पुरुषार्थहोमैरग्निहोत्रादिभिः सह प्राप्ताः पशावाज्यभाग-व्यतिरिक्ताङ्गान्याज्यभागाभ्यां सह प्राप्तानि। अतिरात्रे षोडशिग्रहव्यतिरिक्ताङ्गानि षोडशिग्रहेण सह प्राप्तानि पुरुषे भोजनादीनि हिंसादिभिः सह प्राप्तानि।

अत्यन्ताप्राप्तनिवृत्तिफलकत्वमिति लक्षणस्य विवक्षा।

ननु "तत्र चान्यत्र च प्राप्त" इत्यत्रैकरूपसंबन्धेन प्राप्तिर्विवक्षिता। अस्ति च प्रागुदाहृतेषु सर्वेषु परिसंख्योदाहरणेषु शेषत्वेन शेषित्वेनाऽऽश्रयत्वेन निमित्तत्वेन वा येन केन चिदेकरूपेणैव संबन्धेनोभयोः प्राप्तिः। तथा च "दीक्षितो न जुहोती" त्यत्राऽपूर्वविधौ नाऽतिव्याप्तिः, दीक्षामध्ये क्रत्वर्थहोमानां क्रतुशेषत्वेन प्राप्तिः; पुरुषार्थहोमानां कालैक्येनेति संबन्धभेदात्। "न तौ पशौ करोति" "नातिरात्र" इति निषेधयोरुक्तलक्षणानुसारेण परिसंख्यात्वमेवाऽस्तु। न चैवमपि न हिंस्यादिति नियमविधावतिव्याप्तिः, पुरुषं प्रति शेषत्वेनैव भोजनादीनां हिंसादीनां च प्राप्ति-सत्त्वादिति वाच्यम्। अत्यन्ताऽप्राप्तनिवृत्तिफलकत्वस्य लक्षणे विवक्षितत्वादिति।

अपूर्वविधावतिव्याप्त्युद्भावनम्।

चेन्मैवम्। दृष्टार्थानां कण्डूयनादीनाम्, अदृष्टार्थानां च हरिहरस्मरणादीनां पुरुषार्थहोमैः सह क्रतौ कालैक्यसबन्धेन प्राप्तिसत्त्वेन "दीक्षितो न जुहोति" इत्य-

---

[1] तत्रेत्यादि क्रियत इत्यन्तः मु. पु. नास्ति।

पूर्वविधावुक्तविवक्षयाप्यतिव्याप्त्यनिरासात्। निवृत्तावत्यन्ताप्राप्तत्वविशेषणविवक्षायां शशादिपञ्चकव्यतिरिक्तपञ्चनखलक्षणनिवृत्तेरत्यन्ताप्राप्तत्वाभावेन "पञ्च पञ्चनखा भक्ष्या" इति परिसंख्यायामव्याप्तिप्रसक्त्या तस्य विशेषणस्याऽविवक्षणीयतया" न हिंस्यादिति" नियमविध्यतिव्याप्त्यनिरासाच्च।

दीक्षितो न जुहोतीत्यादीनां परिसंख्यात्वशंका।

ननु "यदि दीक्षितो न जुहोती" त्यादिषु सर्वेषु निषेधेषु लक्षणमस्ति; तदा सन्तु तेऽपि परिसंख्या इति चेत्। तथाप्यपूर्वविधावतिव्याप्तिः। यदि निवृत्तिफलको विधिरित्येतावदेव लक्षणं क्रियते; यदि वानेकस्य समुच्चित्य प्राप्ताविति विशेष्यते, सर्वथाप्यग्निहोत्रादिविधावस्त्येवेदं लक्षणम्। श्रमपरिहाराद्यर्थं लौकिककर्मणामग्निहोत्रादिकर्मणाञ्चाऽकरणयोः समुच्चित्य प्राप्तौ "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिविधेरग्निहोत्राद्यकरणनिवृत्तिरूपतदनुष्ठानफलकत्वात्। न चाऽत्र निवृत्तिपदेनाभावरूपैव निवृत्तिर्विवक्षितेति शक्यं वक्तुम्। प्रागुदाहृतनिषेध-परिसंख्यास्वनुष्ठानफलास्वव्याप्तिप्रसङ्गात्। तस्मात्परिसंख्यालक्षणमपि न युक्तमिति भावः।

इति त्रयोविंशश्लोकव्याख्या।

---

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमद्विश्वजिद्याजि-
श्रीरंगराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ विधिरसायन-
सुखोपयोजिन्यां परिसंख्याविधिलक्षणाक्षेपः

---

विलक्षणान्यप्युदितानि लक्षणान्यपूर्वविध्यादिविभागसिद्धये।
भजन्ति भूम्नेह कृतां पदावलिं परस्परामप्यपरस्परामिमाम् ॥

---

अपूर्वविधिलक्षणाक्षेपाणां नियमविधिलक्षणेऽतिदेशः नियमविधिलक्षणाक्षेपाणां परिसंख्यालक्षणेऽतिदेशः। एवं परिसंख्याविधिलक्षणाक्षेपाणां नियमविधिलक्षणेऽचातिदेशः इति संक्षेपेण कथनम्। तस्यैव विस्तरेण प्रतिपादनं चतुर्विंशेनश्लोकेन।

एवं संक्षिप्तमाक्षेपातिदेशमेतत्प्रपञ्चनहेतूपन्यासव्याजेन सामान्यतः प्रदर्शयति—

पूर्वाक्षेपप्रकारः प्रभवति परमप्यात्मवश्यं विधातुम्
प्रायः सूक्ष्मं विभागं विधिषु गमयतां लक्षणानाममीषाम्।
शक्यं तन्न्यायसाम्यं प्रणिहितमतिभिर्बोद्धुमित्यप्रदर्श्य
त्रिष्वप्येतेषु भिन्नस्थितिषु नवनवो वर्णितस्तत्प्रकारः ॥२४॥

अपूर्वविध्यादिविभाजकानामुदाहृतलक्षणानां मध्ये पूर्वस्य अपूर्वविधिलक्षणस्य[1] य आक्षेपप्रकारः; स प्रायेण परं-नियमविधिलक्षणमप्यास्कन्दितुं प्रभवति। तद्यथा-पाक्षिके सतीत्यत्र विधिविषयस्य पाक्षिकत्वं विवक्षितं, यस्य कस्य चिद्वा ? आद्ये सर्वत्र पाक्षिकत्वविवक्षायां विकृतिविशेषगतरथन्तरपृष्ठनियमविधावव्याप्तिः, विकृत्यन्तरेऽपि तथैव नियमविधिसत्त्वेन तद्विध्यभावे रथन्तरपृष्ठस्य सार्वत्रिकपाक्षिकत्वाभावात्। प्रकृतिविध्युद्देश्ये पाक्षिकत्वविवक्षायामपि [2]पुरोडाशकर्तृनियमार्थे प्रथनविधावव्याप्तिः; विधिविषयस्य प्रथनस्योद्देश्ये पुरोडाशे नित्यप्राप्तत्वात्। द्वितीये सतिसप्तम्या यस्य पाक्षिकत्वमुपलक्षणत्वेन निर्दिष्टम्; तन्नियमफलकत्वपर्यन्तलक्षणं विवक्षितं, न वा ? अन्त्ये सांग्रहिण्यां चोदकाद्व्रीह्यादौ पक्षप्राप्ते सति तदङ्गानामामनहोमानामपूर्वविधावव्याप्तिः। आद्ये मन्त्रगतस्वरनियमार्थेषूपांशु यजुषेत्यादिषु कर्मगतस्वरविधानेष्वव्याप्तिः। यस्य स्वरस्य नियमो विधेः फलम्; तस्योद्देश्ये यजुर्वेदादिविहिते ज्योतिष्टोमादिकर्मण्यत्यन्ताप्राप्तत्वेन पाक्षिकत्वाभावात्। यस्य तत्र विकल्पितस्य दीक्षापरिमाणादेः पाक्षिकत्वमस्ति; तन्नियमनस्यैतद्विधिफलत्वाभावात्। यवेष्ववहनननियमार्थे व्रीहिभिर्यजेतेति नियमविधौ चाव्याप्तिः। तत्र नियम्यस्याऽवहनस्य प्रकृतविध्युद्देश्ये यागे पक्षप्राप्त्यभावात्।

नियमविधिलक्षणेऽपूर्वविधिलक्षणाक्षेपप्रकारप्रदर्शनम्।

यद्युच्येत प्रकृतोद्देश्ये पाक्षिकत्वं न विवक्षितं किन्तु यत्र क्वचित्। तथा चोद्देश्येऽन्यस्मिन्वा यस्मिन्कस्मिंश्चिद्विधिविषयस्याऽन्यस्य वा पाक्षिकत्वे सति तन्नियमफलको विधिरिति लक्षणमतो नोक्ताव्याप्तिरिति। एवमपि

---

[1] विधौ लक्षणस्येति मु० पु० पा०।

[2] पुरोडाशकर्तृनिमार्थे इति खपुस्तके पा०।

मन्त्रार्थवादसामर्थ्यादिलभ्यद्रव्य-गुण-संस्कारादिनियमफलकेषु नानाशाखादिगतेषु च नियमविधिष्वव्याप्तिः। भूयांसो "इजो ऽग्नीषोमीय" इत्यादयो मन्त्रार्थवाद-सामर्थ्यादिलभ्यविषया नानाशाखागताश्च नियमविधयः। मन्त्रार्थवादसामर्थ्यादि-कल्प्यशाखान्तरगतविधीनामप्यप्रवृत्त्यपेक्षया तेषु पाक्षिकत्वसमर्थने "दण्डी प्रैषान-न्वाह" इत्यादिविधिषु नाऽनेकविध्यप्रवृत्त्यपेक्षया नियमपरिसंख्यालक्षणसाङ्कर्या-पत्त्याऽनिष्टं प्रसज्येतेत्युक्तम्।

परिसंख्याविधिलक्षणोऽपूर्वविधिलक्षणाक्षेपप्रकारप्रदर्शनम्।

अपि च पञ्च "पञ्चनखा भक्ष्या" इति परिसंख्यायामतिव्याप्तिः; तत्फलभूतायाः शशादिपञ्चकव्यतिरिक्तपञ्चनखभक्षणनिवृत्तेः पक्षे रागत एव प्राप्तिसम्भवात्। भावस्य पाक्षिकत्वविवक्षायां "न हिंस्यात्सर्वा भूतानी"त्यादिनियमविधावव्याप्तिः, क्वचिद्व्रतविशेषे कांश्चिन्नियमान्विधाय तद्विकृतौ व्रतान्तरे तन्नियमाभावमुक्त्वा पुनस्तद्व्रतकर्त्तव्यत्वेन विहिते व्रतान्तरे विशिष्य किञ्चिन्नियमाभावो यत्रोपदिश्यते तत्र परिसंख्याविधया तदन्यनियमाः प्राप्यन्त इति तस्यां परिसंख्यायामतिव्याप्तिश्च; तत्र भावरूपनियम्यगतपाक्षिकत्वसत्त्वात्।

किञ्च किं पाक्षिकत्वं विवक्षितम्। यदि सर्वोद्देश्यानानुवृत्तप्राप्तिमत्त्वम्; तदा सार्वकाम्यविधावतिव्याप्तिः; ज्योतिष्टोमप्राप्तेः स्वर्गान्यफलेष्वनुवृत्त्यभावात् असम्भवश्च। अवहननादीनामुद्देश्येषु सर्वेष्वपि व्रीह्यादिषु प्राप्तेः समर्थितत्वात्। उद्देश्याव्यापकप्राप्तिमत्त्वं तदिति चेत्। तर्ह्युद्देश्येष्वप्राप्तिकरम्बितप्राप्ति-मत्त्वम्। तदुद्देश्यप्राप्तिरहितेषु "साम्ना स्तुवीते"त्यादिनियमविधिष्वव्याप्तम्। उद्देश्येष्विति विशेषाविवक्षायामपि षाडहिकबृहद्रथन्तरपृष्ठत्वादिविध्यतिव्याप्तम्। तत्राऽह भेदादिरूपावच्छेदे भेदोऽस्तीति चेत्। किं विनैवावच्छेदभेदमप्राप्तिकर-म्बितप्राप्तिमत्त्वं विवक्षितम्। ॐ मिति चेत्। तर्ह्यसम्भवः, अवहननादिप्राप्त्योरपि उपायान्तरतद्विरहरूपावच्छेदभेदनियतत्वात्। उपायान्तरतद्विरहभिन्नावच्छेदभेदं विनेति विवक्षायामपि कार्यषोडशयूतुगमनरथन्तरादिनियमाव्याप्तिः। वैकल्पिक-तद्विरहभिन्नावच्छेदभेदं विनेति विवक्षायां वैकल्पिकत्वस्य पाक्षिकत्वानुप्रवेशर-हितस्य निर्वक्तुमशक्यत्वादात्माश्रयः। आश्रयभेदं विनेति विवक्षायामपि श्यावाश्व-ब्रह्मत्वोक्तिप्रमुखापूर्वविधिष्वतिव्याप्तिः। पूतीकाऽन्यलिङ्गमन्त्र-उत्कर-परि-ध्यादिनियमाव्याप्तिश्च। कादाचित्कप्राप्तिमत्त्वं पाक्षिकत्वमिति विवक्षायामपि चोदकप्राप्तापोदितकृष्णलश्रपणादिविध्यतिव्याप्तिः—इति।

नियमविधिलक्षणाक्षेपप्रकारस्य परिसंख्यालक्षणे योजनम्।

एवं नियमविधिलक्षणाक्षेपप्रकारः प्रायेण परिसंख्यालक्षणमप्यास्कन्दितुं प्रभवति। तद्यथा प्रायणीयादिषूपायपरिसंख्या रशनादानादिषूपेयपरिसंख्या "हृदयस्याग्रेऽवद्यती" त्यादिषूपायोपेयपरिसंख्या। त्रिविधायामप्यस्यां परिसंख्यायां कस्य चिदुपेयस्य कस्य चिदुपायस्य तत्तत्प्रतियोगिनश्च विध्युपात्तत्वमस्ति।

ननु "हृदयस्याग्रेऽवद्यती"त्यादिषु हृदयाद्येकादशातिरिक्तपश्ववयववर्गस्या-ऽवदानोपेयत्वपरिसंख्यायामेव प्रतियोगिनोऽवदानस्य विध्युपात्तत्वमस्ति; न तु तस्य पशुयागोपायत्वपरिसंख्यायां प्रतियोगिनः पशुयागस्येति चेत्। न। तत्राङ्गवाक्यानां प्रधानवाक्यैकवाक्यताकल्पने सति तस्य विध्युपात्तत्वलाभात्। क्व चित्क्व चिदु-पेय-तत्प्रतियोगिनोरुपायतत्प्रतियोगिनोश्च मध्ये एकस्य द्वयोर्वा विध्यनुपात्तत्वमपि दृश्यते। यथा "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान् गृह्णीयादि"त्यत्र रथन्तरसामारथन्तरसामविकृतिरूपस्योपेयस्यैकस्य विध्यनुपात्तत्वम्। "कपा-लेषु श्रपयती" त्यत्र चित्रेष्टि-व्रीहिनियमयोरुभयोरपि विध्यनुपात्तत्वम्। तदेवमुपा-त्तानुपात्तरूपे द्विविधेऽप्युदाहरणे ग्राह्यव्यावर्त्तनीययोर्नियतप्राप्तिरस्ति। क्व चिद्व्या-वर्त्तनीयमात्रप्राप्तावपि परिसंख्या दृश्यते। यथा "ऽत्र ह्येवावपन्ती"ति। क्वचित्तु परिसंख्यायां नियतप्राप्तमेव न दृश्यते। यथा "पञ्च पञ्चनखा भक्ष्या"इति। एवं नानाप्रकारः परिसंख्याविधिर्नियमविधिवदेव लक्षणेन संग्रहीतुं शक्यः, अयं तु प्रकारः परिसंख्याविधिलक्षणाक्षेपे प्रदर्शितप्राय इति; नेह प्रपञ्च्यते।

विषयसप्तमीपक्षे सामानाधिकरण्ये लक्षणस्याऽसम्भवः

वैयधिकरण्ये त्वव्याप्त्युद्भावनम्।

एवमपूर्वविधिलक्षणाक्षेपप्रकारोऽपि परिसंख्याविधिलक्षणमवस्कन्दितुं प्रभ-वति। तथा हि-प्राप्त इति विषयसप्तमीति पक्षे तत्र चान्यत्र चेति सप्तम्योस्तया सामानाधिकरण्ये लक्षणस्याऽसम्भव एव स्यात्; ग्राह्यव्यावर्तनीययोरुभयोरपि विधिविषयत्वाभावात्। वैय्यधिकरण्ये तु सार्वत्रिकोभयप्राप्तिविवक्षायां गृहमेधीय-गताज्यभागद्वयविधावव्याप्तिः। अवभृथेऽपि तथैव आज्यभागविधिसत्त्वेन तद्विध्य-भावे सर्वविकृतिगताज्यभाग-तदितराङ्गकलापरूपोभयप्राप्त्यभावात्। प्रकृतिविधा-वुद्देश्यत्वेन विधेयत्वेन वाऽन्वयिन्युभयप्राप्तिविवक्षायामपि "कपालेषु श्रपयती"ति परिसंख्याविधावव्याप्तिः।

सतिसप्तमीपक्षे इतरसम्बन्धव्यावृत्तिफलकत्वपर्यन्तं लक्षणं
विवक्षितं नवेति द्वेधा विकल्प्य पक्षद्वयेऽपि दोषोद्भावनम्।

सतिसप्तमीपक्षे यस्य ययोरुभयोः प्राप्तिरुपलक्षणत्वेन निर्दिष्टा; तस्य तदन्य-तरसंबन्धव्यावर्त्तनफलकत्वपर्यन्तं लक्षणं न विवक्षितं चेत्सांग्रहिण्यां चोदकादने-कस्मिन्नङ्गकलापे प्राप्ते सत्यामामनहोमविधावतिव्याप्तिः। तथा विवक्षितं चेत्कपाल-श्रपणविध्याद्यव्याप्तिः।

यद्युच्येत प्रकृतविध्युपात्तगतोभयप्राप्तिर्न विवक्षिता किन्तु यस्य कस्य चिद्य-त्किञ्चिदुभयप्राप्तिः। तथा च तस्य तदन्यतरसंबन्धनिवृत्तिफलको विधिः परिसंख्येति विवक्षितत्वान्नोक्ताव्याप्तिः; नाप्यतिव्याप्तिरिति चेत्। एवमपि मन्त्रार्थवाद-सामर्थ्यलभ्यप्रयोजनेषु नानाशाखागतेषु च परिसंख्याविधिष्वव्याप्तिरित्यादि-

प्रागुक्तमेवानुवर्त्तते-इति। एवं यद्यपि पूर्वाक्षेपप्रकारः परत्रापि प्रवर्तते तथापि स धीमद्भिः संचारयितुं शक्य इति; नियम-परिसंख्ययोर्भिन्नभिन्न आक्षेपप्रकारो दर्शितः। तथा चैते त्रयोऽपि विधयस्तुल्यस्थितय इत्युत्तरोत्तरस्मिन्वर्णिताक्षेपप्रकारोऽपि पूर्वं-पूर्वस्मिन्संभवन्सञ्चारणीय इति भावः ॥२४॥

इति चतुर्विंशश्लोकव्याख्या।

---

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमद्विश्वजिद्याजि श्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ विधिरसायनसुखोपयोजिन्यां त्रिविध-विधिलक्षणाक्षेपपरस्परातिदेशः।

---

'एवमपूर्व-नियमपरिसंख्यानामाचार्योक्तलक्षणान्याक्षिप्य, उदाहरणान्याक्षिपति–

उत्पश्यामो न चोदाहरणगणमपि प्राप्तरूपं विधीनाम्
प्राप्तं खल्वग्निदीक्षाहवनमिव हविःप्रोक्षणं मन्त्रलिङ्गात् ।
नैयत्यं सोमपात्रग्रहण इव ततः प्राप्तमेवावहन्तौ
प्राप्तं तद्दृष्टकार्यान्वयपरमुसलोलूखलाम्नानतश्च ॥२८॥

"व्रीहीन्प्रोक्षती"तिविधिरित्युदाहृतं वार्त्तिके । तत्तावदयुक्तम् । दर्शपूर्णमासप्रकरणेन तदपूर्वार्थत्वेनाऽवगतस्या"ग्नये त्वा जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामि"-त्यादिमन्त्रस्य देवतार्थद्रव्यप्रोक्षणलिङ्गबलाद्धविःप्रोक्षणद्वारेण तादर्थ्यं स्यादिति; तत एव हविःप्रोक्षणकर्त्तव्यता प्राप्यते; किमत्र "व्रीहीन्प्रोक्षती"ति विधिना ? अङ्गीकृता खलु दशमे "षड्भिर्दीक्षयती"त्यग्निप्रकरणगतविधिना दीक्षार्थतयाऽवगतानाम् "आकूतिमग्निं प्रयुजं स्वाहे"त्यादिमन्त्राणां स्वाहाकारलिङ्गबलाद्धोमद्वारेण तादर्थ्य-सिद्धेस्तत एव होमकर्त्तव्यता प्राप्यत इति ।

वार्तिकोक्तस्य नियमविध्युदाहरणस्याक्षेपः ।

तथा-व्रीहीनवहन्तीतिविधिर्नियमविधिरित्युदाहृतमप्ययुक्तम् । दर्शपूर्णमासप्रकरणेन तदपूर्वार्थत्वेनाऽवगतस्या"ऽवरक्षो दिवः सपत्नं वध्यासमि"तिमन्त्रस्यावहननलिङ्गबलादवहननद्वारेण तादर्थ्यं स्यादिति; तत एव पुरोडाशीयद्रव्यवितुषीकरणार्थत्वेनाऽनियतप्राप्तस्याऽवहननस्य नियमलाभात् । अयमपि न्यायस्तुतीये संप्रतिपन्नः । तत्र हि भक्षानुवाकसमाख्यया भक्षसंबन्धित्वेनाऽवगतयोर्भक्षानुवाकमध्यपठितयो"रश्विनोस्त्वा बाहुभ्यां सध्यासम् ; नृचक्षसं त्वा देवसोमसुचक्षा अवख्येषमि"तिमन्त्रयोर्ग्रहणावेक्षणलिङ्गबलात्तद्द्वारेण भक्षसंबन्धित्वं स्यात् इति । तत एव परहस्तगतं सोमपात्रमगृहीत्वाऽप्यनवेक्ष्याऽपि भक्षयितुं शक्यत्वेनाऽनियत-प्राप्तयोर्ग्रहणावेक्षणयोर्नियमोऽङ्गीकृतः ।

किञ्च वारणो यज्ञावचरो; वैकङ्कतो यज्ञावचर इति वारण-वैकङ्कतपात्राणां यज्ञसाधनत्वं विदधता वाक्येनोलूखल-मुसलयोरपि वारणपात्रयोर्यज्ञसाधनत्वमवगतम् । तच्च तयोरुत्पत्तिशिष्टपुरोडाशाद्यवरुद्धेष्वाग्नेयादियागेषु साक्षात्साधनत्वासम्भवात्किञ्चिद्द्वारेण निर्वहणीयमिति; तद्द्वारत्वेन नित्यकर्त्तव्यमवहननं प्राप्यते । न च वाच्यम् "स्फ्यश्च कपालानि चे"त्याद्यनुक्रम्यै"तानि वै दशयज्ञायुधानी"ति यज्ञसाधनत्वेनाम्नातानां स्फ्यादीनां "यज्ञायुधानि सम्भरन्ती"ति सादनविधानात्तदन्तर्गतयोरुलूखल-मुसलयोः सादनद्वारेणैव यज्ञसाधनत्वं स्यात्-इति । अग्रे तयोर्दृष्टकार्याभावेन तत्प्रत्यासत्तिसंपादकस्य सादनस्याऽदृष्टार्थतापत्तेर्दृष्टार्थत्वे सम्भवति तस्याऽदृष्टार्थत्व[2]कल्पनानौचित्यात् । "स्फ्येनोद्धन्ती"त्यादिभिरुद्धननादिषु विनियुक्तानां स्फ्यादीनां सादनं दृष्टार्थम्; उलूखल-मुसलयोस्तददृष्टार्थमिति सादनविधिवैरूप्या-

[1] उदाहरणेष्वित्यादि......आक्षेप इत्यन्तः मु० पु० या०

[2] त्वायोगादिति मु० पु० या०

पत्तेश्च। अतस्तदुलूखल-मुसलद्वन्द्वं दृष्टकार्यविनियोगसाकाङ्क्षं सत्सामर्थ्यादर्थ-प्राप्तावहननार्थं सम्पद्यते; अवहननस्य चूर्णीकरणादिवद् दृषदुपलादिसाधनान्तर-साध्यत्वाभावेन नियमतस्तदुभयापेक्षत्वादिति नित्यवदाम्नातोलूखल-मुसलकार्यत्वे-नान्वयबलादप्यवहननस्य नियमो लभ्यते; किमत्र "व्रीहीनवहन्ती"तिविधिना। तस्मात् "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ती"ति अपूर्वनियमविध्युदाहरणमयुक्तमिति भावः ॥२५॥

पञ्चविंशश्लोकस्य व्याख्या

------

षड्विंशश्लोकस्यावतरणम्

प्रोक्षणावहननविध्योरभ्युदयार्थत्वनिषेधेन

परिसंख्यार्थत्वेन चारितार्थ्यकथनम्।

नन्वन्यलभ्ययोरपि प्रोक्षणावहननियमयोरभ्युदयार्थावेतौ विधौ स्याताम् गत्यन्तराभावात् स्वर्गकाम-साम्रदश्यादिविधिवदित्याशङ्क्य परिसंख्याद्यर्थत्वेन तयोश्चारितार्थ्यमाह –

**तस्मादत्रोभयस्मिन् यवपरिहृतये पारिसंख्यो विधिः स्यात्**
**नोचेत्प्राप्त्यै नियत्यै कथमपि च भवन्न प्रसिद्धोऽपि सः स्यात् ॥**
**यद्वापूर्वो विधिः स्यान्नियमपर इहाध्वर्यवत्वं नियच्छन्**
**अन्यस्मिन्द्वंद्वसंपादनविधिवशगे तत्प्रयच्छन्नपूर्वः ॥२६॥**

मन्त्रलिङ्गात्प्राप्नुवदाग्नेयाग्नीषोमीयपुरोडाशार्थद्रव्यविषयं प्रोक्षणम्; मन्त्र-लिङ्गोलूखल-मुसलाम्नानाभ्यां प्राप्नुवन्नवहननियमश्च व्रीहीणामिव यवानामपि प्राप्नुयात्। तन्निवर्तकतया परिसंख्याविधित्वेन सम्भवत्यनयोश्चारितार्थ्ये, नाऽनन्य-गतिकमभ्युदयार्थापूर्वनियमविधित्वं कल्पनीयम्। यदि तु नित्यप्राप्तबाधकपरिसंख्या-पेक्षया नित्यप्राप्तमभ्युदयार्थं प्रापयन्नियच्छन्वा विधिः श्रेयानित्येवं प्रोक्षणावहनन-वाक्ययोरपूर्व-नियमविध्यभ्युपगमो न त्वनन्यगतिकतयेति मन्यसे; तदानी"मश्वा-भिधानीमादत्त" इत्यत्र प्रसिद्धोऽपि परिसंख्याविधिर्न सिद्ध्येत् किन्तु तत्र मन्त्रप्राप्तौ मन्त्रनियमे वान्यलभ्येऽप्यभ्युदयशिरस्कतया मन्त्रस्य प्राप्तिम्; नियमं वा कुर्वन्नपूर्व-विधिः; नियमविधिर्वा स्यात्। शक्यते ह्येवं वक्तुम्-अश्वरशनाग्रहणप्रकाशने मन्त्रं प्रापयन्नयमपूर्वविधिः; तत्र कल्पसूत्रोपद्रष्टृवचनात्सीयग्रहणकवाक्यरूपानियतानेको-पायप्राप्तौ मन्त्रं नियच्छन्नियमविधिर्वा-इति।

अत्रेदं वक्तव्यम् – मन्त्रलिङ्गबलादेव तत्र मन्त्रस्य तावत्प्राप्तिर्लभ्यते; सा च तस्य नित्यवदाम्नातबलान्नियतैव लभ्यते; तथा च प्राप्ति-नियमयोरन्यलभ्यत्वेनापूर्व-नियम-

विध्योरसम्भवात्परिसंख्याविधिरभ्युपगत—इति। कथमेतदुपपद्यते। यद्यन्यलभ्ययोरपि प्राप्ति-नियमयोरभ्युदयशिरस्कत्वेनानन्यलभ्यत्वमुपपाद्य प्रोक्षणावहननविध्योरपूर्वनियमविधित्वमिति परिसंख्यार्थत्वं प्रतिक्षिप्येत; तथा ह्यत्राऽपि तथैवाऽपूर्वविधित्वं नियमविधित्वं वा सम्भवतीति परिसंख्यार्थत्वं न सिध्येत्। अथाऽपि तत्र परिसंख्यार्थत्वाभ्युपगमे तथैव प्रोक्षणावहननविध्योरपि तादर्थ्यमभ्युपगन्तुं युक्तम्। अथोच्येत-"व्रीहीनवहन्ती"त्ययं परिसंख्याविधिरित्यभ्युपगमेऽवहननपरिसंख्या; तन्नियमपरिसंख्या वेति निर्द्धारणं न सम्भवति, नियामकाभावात्। अतस्तत्र यथा कथञ्चिन्नियमविधिरेवाऽऽश्रयणीय इति। अत्राऽपि चोद्ये प्रसिद्धोऽप्येवं सति परिसंख्याविधिर्न स्यात्। तत्रापि कथं चिदपूर्वविधिर्नियमविधिरेव वाऽऽश्रयणीयः स्यादित्येवोत्तरम्। तत्राऽपि मन्त्रपरिसंख्या; तन्नियमपरिसंख्या वेति निश्चयो न सम्भवत्येव।

यद्युच्येत मन्त्रस्य विधिबोधितेनाऽश्वाभिधानीग्रहणसंबन्धमात्रेण तस्याग्निप्रकरणाम्नानञ्चरितार्थमिति; नैराकाङ्क्ष्येण तत्र गर्दभरशनाग्रहणसाधारणस्य लैङ्गिकविनियोगकल्पनस्याऽप्रवृत्तेर्मन्त्रो गर्दभरशनाग्रहणं न स्पृशत्येव। अतो मन्त्रपरिसंख्येयम्; न तन्नियमपरिसंख्या। अश्वरशनायां मन्त्रनियमे विधिना प्रतिपादिते ह्यन्यत्र तन्नियमपरिसंख्या स्यात्; न त्वत्राऽश्वरशनामन्त्रेणैवाऽऽदद्यादिति मन्त्रनियमो विधिना प्रतिपादितः। स तु नियमः परिसंख्यावदर्थाल्लभ्यते; अश्वरशनाग्रहणे मन्त्ररूपोपायसंबन्धे विधिना बोधिते तावता नैराकाङ्क्ष्येण पाक्षिककल्पसूत्रादिसाधारणलौकिकोपायकल्पनाऽप्रवृत्तेः। किन्तु प्रकरणसनाथमन्त्रलिङ्गपर्यालोचनयापि लब्धुं शक्यत्वात्सोऽस्य विधेः फलत्वेन नाद्रीयते-इति। सर्वमेतदवहननविधावपि समानम्।

अथैवमुच्येत-"तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयत" इति परिसंख्यालक्षणं तत्र चाऽन्यत्र च नित्यप्राप्त इत्येवम्परम्; अन्यथा नियमविधिरपि तत्र चान्यत्र च पक्षप्राप्ते प्रवर्त्तत इति तत्राऽतिव्याप्तिप्रसङ्गात्। ततश्च रशनाग्रहणमन्त्रविधेः परिसंख्यात्वम्; अश्वगदर्दभरशनाग्रहणयोर्मन्त्रस्य नित्यप्राप्तिमपेक्ष्योपपादनीयम्। नित्यप्राप्तिश्च तस्य तयोः प्रकरणानुगृहीतमन्त्रलिङ्गकल्प्यविधिलभ्या; नत्वनियतानेकोपायकल्पनालभ्या, प्रकरणानुगृहीतमन्त्रलिङ्गकल्प्यश्च विधिरश्व-गर्दभरशनाग्रहणयोर्मन्त्रकल्पसूत्राद्यनियतानेकोपायप्राप्तौ नियमविध्यात्मक इति नियमविधिलभ्यामश्व-गर्दभरशनागृहणयोर्मन्त्रनियमरूपां प्राप्तिमपेक्ष्य प्रवर्तमाना परिसंख्या पर्यवस्यतीति; गर्दभरशनाग्रहणान्मन्त्रनियम एव व्यावर्त्तते न तु कल्पसूत्रादिवदनियमेन प्राप्नुवन्मन्त्रोऽपि।

मन्त्रनियमरूपां प्राप्तिमपेक्ष्य परिसंख्यापर्यावसानमिति
तन्त्ररत्नानुसारेणोदाहरणान्तरप्रदर्शनम्।

अत एव "वैखानसं पूर्वेहन्साम भवति षोडश्युत्तर" इत्यत्र परिसंख्येति वृत्तिकारपक्षे प्रकृत्यतिरात्रतश्चोदकात्पाक्षिकी षोडशिग्रहस्य या प्राप्तिः; तामपेक्ष्य नेयं

परिसंख्या; परिसंख्याया नित्यप्राप्त्यपेक्षत्वात् चोदकाधीनपाक्षिकप्राप्त्यपेक्षत्वे नियमविधित्वप्रसङ्गात्। "किन्तूत्तरेऽहन् द्विरात्रस्य गृह्यत" इति द्विरात्रसामान्यस्योत्तरेऽहनि यः षोडशिग्रहनियमविधिश्चोदकाधीनपाक्षिकषोडशिग्रहप्राप्त्यपेक्षः; तल्लभ्यमङ्गिरसां द्विरात्रस्य द्विरात्रान्तराणाञ्चोत्तरेऽहनि समुच्चित्य प्राप्तं षोडशिग्रहनियममपेक्ष्येयं परिसंख्येति द्विरात्रान्तराणामुत्तरादह्नो नियमविध्यधीनः षोडशिग्रहनियम एव व्यावर्त्तते, न तु चोदकलभ्यः पाक्षिकः षोडशिग्रहोऽपीत्युपपादितं तन्त्ररत्ने।

## मन्त्रनियमपरिसंख्यायां शङ्का

ननु सर्वद्विरात्रविषयं प्रत्यक्षं सामान्यशास्त्रं प्रथमप्रवृत्तमिति; तेन सर्वद्विरात्रेषु प्राप्तं षोडशिग्रहनियममपेक्ष्य द्विरात्रान्तरेभ्यस्तत्परिसंख्या युज्यते। इह मन्त्रलिङ्गबलादश्वगदर्दभरशनाग्रहणयोर्मन्त्रनियमकल्पनं प्रथमं न प्रवृत्तमिति; कथं तल्लभ्यं तयोर्मन्त्रनियमपेक्ष्य गदर्दभरशनातो मन्त्रनियमपरिसंख्या घटते। न च वाच्यं तत्रापि द्विरात्रसामान्यविषयतया सामान्यद्वारेणाङ्गिरसां द्विरात्र-तदितरद्विरात्ररूपेषु विशेषेषु प्रवर्त्तमाना"दुत्तरेऽहन् द्विरात्रस्य गृह्यत"इति शास्त्रादङ्गिरसां द्विरात्ररूपविशेषविषयमेव शास्त्रं प्रथमं प्रवर्त्तते; आहवनीयशास्त्रादिव पदशास्त्रमिति। सामान्यशास्त्रे द्विरात्रमात्रमपि वर्णोपात्तमस्ति तदपि नाऽस्ति षोडश्युत्तर इति शास्त्रे। किन्तु प्रकरणपर्यालोचनया तस्याऽङ्गिरसां द्विरात्रसम्बन्धो ऽवगन्तव्य इति; तत्र सामान्यशास्त्रस्यैव प्रथमप्रवृत्तिसत्त्वादिति चेत्।

## आर्थिकनियमपरिसंख्यायां तदपेक्षाराहित्येऽपि शाब्दनियमपरिसंख्यायां तदपेक्षासत्त्वेनेति तन्निरासः।

मैवम्। षोडश्युत्तर इति शाब्दनियमपरिसंख्यायां परिसंख्येयनियमप्रापकप्रमाणस्य प्रथमप्रवृत्त्यपेक्षणेऽप्यत्राऽर्थनियमपरिसंख्यायां तदपेक्षाभावात्। तर्कितां[1] नियम्यप्रापकप्रमाणप्रवृत्तिमपेक्ष्याऽर्थनियमशास्त्रप्रवृत्तिवत्तर्कितां परिसंख्येयप्रापकप्रमाणप्रवृत्तिमपेक्ष्याऽर्थपरिसंख्या शास्त्रप्रवृत्तिसम्भवात्। "कपालेषु श्रपयती"त्यत्राऽन्यलभ्यपुरोडाशश्रपण[2]-तत्प्रवृत्त्यधीनप्रवृत्तिक-व्रीहिनियमशास्त्रप्रवृत्तिमपेक्ष्य चित्रेष्टावर्थाद्व्रीहिनियमपरिसंख्यालाभस्य नवमश्लोकावतारिकायां प्रदर्शितत्वाच्च तस्मादिह नियमपरिसंख्या युक्ता।

## स्वरूप-नियमभेदेन परिसंख्याया द्वैविध्यम्।

न च वाच्यं परिसंख्यामात्रस्य नियतप्राप्त्यपेक्षत्वात्सर्वाऽपि परिसंख्या नियमपरिसंख्यैव स्यात्-इति। यत्राऽनियतप्राप्तस्यानियामकतया प्रवृत्तं वा प्रमाणमपेक्ष्य परिसंख्या यत्र त्वनियतप्राप्तिरहितस्य नियतप्रापकतया [2]प्रवृत्तं [3]निवृत्तं वा प्रमाणमपेक्ष्य परिसंख्या तत्र नियमपरिसंख्या तत्रा"ऽऽज्यभागौ यजती"त्यादौ स्वरूपपरिसंख्येति

---

[1] विषयेति मु. पु. पा.।
[2] क्लृप्तमिति ख. पा.।
[3] तर्कितमिति मु. पु. पा.।

व्यवस्थोपपत्तेः। अतः स्वरूपपरिसंख्या नियमपरिसंख्यात्रेति परिसंख्याया द्वैविध्यं लभ्यत एव।

स्वरूप-परिसंख्याभ्यां नियमस्य द्वैविध्यम्।

नियमेऽप्येवं द्वैविध्यं दृश्यते स्वरूपनियमः, परिसंख्यानियम इति "व्रीहिभिर्यजेते"त्यादावनियतप्राप्तस्य व्रीह्यादिस्वरूपस्य नियमः। "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त" इत्यादावनियतप्राप्तायाः प्राकृताङ्गपरिसंख्याया नियम इति। तस्मादिह नियमपरिसंख्येति निर्द्धारणमुपपद्यत इति। इदमपि सर्वमवहननविधिसाधारणम्।

अनन्यलभ्यपरिसंख्ययाऽन्यलभ्यनियमस्य
लाभोऽनन्यलभ्यनियमेनाऽन्यलभ्यपरि-
संख्याया लाभ इति नियम-तत्परि-
संख्ययोः पौर्वापर्येण वर्णनम्।

एवमेव हि तस्याप्यवहननियमपरिसंख्यात्वमुपपद्यते। ननु "व्रीहीनवहन्ती"त्यत्रावहननरूपपरिसंख्या, तन्नियमपरिसंख्या वेत्युपन्यस्तेऽस्मिन्पक्षद्वयेऽप्ययं विधिरनन्यलभ्यां परिसंख्यामिवाऽन्यलभ्यमपि नियमं स्पृशति, इत्येवं तत्राऽवहननस्वरूपपरिसंख्यापक्षे नियम-परिसंख्ययोरेकवृन्तगतफलद्वयन्यायेन परस्परानपेक्षयोर्व्रीहिष्ववहननसंबन्धकरणेनार्थाल्लाभः। तन्नियम-परिसंख्यापक्षे व्रीहिष्ववहननसंबन्धं बोधयन्विधिस्तस्य लोकतः पाक्षिकीं प्राप्तिं परामृश्य; तन्नियमेऽवतरन्नियम्यस्यापि मन्त्रसामर्थ्यादिलभ्यत्वं परामृश्य; नियमपरिसंख्यायां पर्यवस्यतीति नियम-तत्परिसंख्ययोः पौर्वापर्येण लाभ इत्येव विशेषः। एवं पक्षद्वयेऽपि नियमस्पर्शावश्यम्भावे सति यवपरिसंख्या न सम्भवति; व्रीहिस्वरूप-तद्गतवैतुष्यानुपयोगिनो नियमस्याऽऽनर्थक्यपरिहाराय व्रीहिगतापूर्वीयत्वरूपोपयोगितासिद्धये व्रीहिपदेऽपूर्वीयत्व[1] लक्षणावश्यम्भावेनाऽवहननियमे यवसाधारण्यस्याऽवर्जनीयत्वात् इति चेत्।

इदमपि चोद्यमेवं सति प्रसिद्धोऽपि परिसंख्याविधिर्न स्यादित्यनेनैव दत्तोत्तरमिति "अश्वाभिधानीमादत्त" इति प्रसिद्धपरिसंख्याविधिर्मन्त्रलिङ्गप्राप्तं मन्त्रादानसंबन्धमनूद्य मन्त्रस्याऽश्वाभिधानीसंबन्धं प्रापयन् गर्दभरशनातस्तं व्यावर्त्तयतीति हि भाष्यकारेणोक्तम्। अयमश्वाभिधान्यां मन्त्रनियममप्युक्तेन न्यायेन स्पृशेदेव। ततश्चाऽश्वाभिधानी तत्स्मरणानुपयोगिनो नियमस्याऽऽनर्थक्यपरिहारायाश्वाभिधानीगतापूर्वीयत्वोपयोगित्वसिद्धयेऽश्वाभिधानीपदेऽपूर्वीयत्वलक्षणावश्यमापतति। अपूर्वीयत्वं चगर्दभाभिधानीसाधारणमिति कथं ततो मन्त्रो व्यावर्ततताम्। न हि बृहद्रथन्तरयोरिवाश्वगर्दभरशनयोर्भिन्नापूर्वानुप्रवेशोऽस्ति; येन बृहद्धर्माणां रथन्तर इवाऽपूर्वीयत्वलक्षणाभ्युपगमेऽप्यश्वाभिधानीधर्माणां गर्दभाभिधान्या सांकर्यं न स्यात्। यद्यप्यत्र—

"तस्मान्नादत्त इत्येतद्रूपात्प्राप्तमनूद्यते
न वेत्यश्वाभिधानीमित्येतदत्र विधीयते।

[1] रूपेति मु. पु. पा।

किन्त्वश्वरशना-मन्त्र-धात्वर्थैर्युगपत्त्रिभिः
विशिष्टाभावनैवैका प्रत्ययेन विधीयते ॥" तन्त्रवा ७११ पृष्ठ

इति वार्त्तिकोक्तं विशिष्टविधिपक्षमवलम्ब्याऽश्वाभिधान्युद्देशेन मन्त्रस्याऽविधानान्नाऽश्वाभिधानीपदेऽपूर्वीयत्वलक्षणाप्रसक्तिरिति परिहर्तुं शक्यम्,

तथाप्ययं परिहारो न सार्वत्रिकः; तथैव व्रीह्यवहननविशिष्टभावनाविधिरिति प्रकृतेऽपि वक्तुं शक्यत्वात्, विशिष्टविधिपक्षेऽपि फलतः परिसंख्या।

"प्रयोजनं विधेः किं स्यादस्येति सुनिरूपणे
न गर्द्दभाभिधानीतः फलमन्यन्निवर्त्तनादि"ति।

तन्त्रवार्तिकोक्तया रीत्यापि सुलभैव। तस्मात्प्रोक्षणावहननविध्योर्यवपरिसंख्यार्थत्वे न काचिदनुपपत्तिः।

प्रोक्षणावहनविध्योर्यवपरिसंख्यार्थत्वाभावेऽपि प्रोक्षणस्य
नियमविधित्वम्, अवहननस्यापूर्वविधित्वमिति कथनम्।

नन्वेवं सति "व्रीहिभिर्यजेते"तिविधिर्व्रीहिसंस्काराणां यवसाधारण्यापादनार्थ इति त्वया व्यवस्थापितं न सिद्ध्येदिति चेत्। एवं तर्हि प्रोक्षणावहननविधौ यवपरिसंख्यार्थौ माभूतां, प्रोक्षणविधिः प्रोक्षणस्याध्वर्युकर्तृकत्वं नियच्छन्नियमविधिः; अवहननविधिरवहननस्य तदेव प्रयच्छन्नपूर्वविधिरस्तु, प्रोक्षणस्य हि मन्त्रलिङ्गकल्प्यश्रुतिविधेयत्वे कल्प्यश्रुतावाध्वर्यवादिसमाख्यानाभावात्तत्राऽनियमेन यः कश्चित् ऋत्विक् कर्त्ता प्राप्नुयात्; प्रत्यक्षश्रुतिविधेयत्वे तु तत्राऽऽध्वर्यवसंज्ञककाण्डाम्नानेनाऽऽध्वर्यवसमाख्यालाभादध्वर्युरेव कर्त्तेति नियमो लभ्यते।

अवहननविधिलभ्यमवहनननियमं द्वारीकृत्य यजमानस्य
कर्तृत्वप्राप्तावप्राप्तमध्वर्योः कर्तृत्वमितिपर्यवसानेना-
पूर्वविधिरतः प्रोक्षणविधिरपूर्वविधिरवहनन-
विधिनियमविधिरिति नोदाहरणमित्याक्षेपः।

तथाऽवहननस्य मन्त्रलिङ्गादिकल्प्यश्रुतिमूलत्वे द्वन्द्वसंपादनविधिवशात्तत्र यजमान एव कर्त्ता प्राप्नुयात्। तथा हि-याजमानकाण्डे "वत्सञ्चोपावसृजति, उखाञ्चाधिश्रयन्ति अवहन्तिच" "दृषदौ च समाहन्ती"त्याद्यनुकीर्त्त्य "एतानि वै द्वादशद्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्य यजेते"ति श्रूयते। तत्र द्वन्द्वसंपादनं नाम-क्रियाविशेषेण द्वयोः प्रत्यासन्नत्वसंपादनम्। यथा वत्सोपावसर्जनक्रियया धेनुवत्सयोः। यथा वावहननक्रियया मुसलोलूखलयोः, ताश्च द्वन्द्वसंपादिन्यो द्वादशाऽपि क्रियाः समाख्यावशाद्यजमानेन कर्त्तव्याः प्राप्ताः। आध्वर्यवकाण्डेऽपि "वत्समुपावसृजति" "इत्युखामधिश्रयति" "व्रीहीनवहन्ती"त्यादिश्रवणात् अध्वर्युणा कर्त्तव्याः प्राप्ताः। न चाऽऽसां द्व्याम्नावानामपि "वाजस्य मा प्रसवेने"त्यादिमन्त्रोच्चारणवदुभयकर्त्तृकत्वं सम्भवति; एकेन कृतानामितरेण कर्तुमशक्यत्वात्। अत एकः कर्त्तेति स्थिते कः कर्त्ता इति विशेषाकाङ्क्षायामाध्वर्यवकाण्डमध्ये याजमानकाण्डाम्नानेन विशेषसमाख्यानाद्यजमानः कर्त्तेति प्राप्ते तासां क्रियाणां स्वरूपेणा-

ऽऽध्वर्यवकाण्डे विधानादध्वर्युरेव साक्षात्कर्ता। याजमानकाण्डे द्वन्द्वसंपादनात्मना यजमानः स्मारकतया प्रयोजको भविष्यतीत्यविरोध इति समर्थितं "याजमाने समाख्यनात्कर्माणि याजमानानि स्युरि"ति ३।८।२ तार्त्तीयाधिकरणे। तत्र यथाऽऽध्वर्यवकाण्डे "वत्समुपावसृजतीत्यादिवद्"व्रीहीनवहन्ती"ति विधिरपि नाश्रोष्यत्; तदा-क्रियान्तरेषु विध्यन्तरानुसारेण यजमानस्य प्रयोजकत्वेऽप्यवहनने याजमानविधिस्वारस्यभङ्गायोगात्तत्र तस्य साक्षात्कर्तृत्वमापत्स्यत्। अतो "व्रीहीनवहन्ती"ति विधिना तत्राऽप्राप्तमध्वर्योः कर्तृत्वं लभ्यते। एवञ्च प्रोक्षणविधिरन्यलभ्यं प्रोक्षणं द्वारीकृत्य कर्तृनियमे पर्यवसानान्नियमविधिः; अवहननविधिलभ्यमवहनननियमं द्वारीकृत्य कर्तृप्राप्तौ पर्यवसानादपूर्वविधिरित्येव परिणमेत्। सर्वथाऽपि प्रोक्षणविधिरपूर्वविधिरवहननविधिर्नियमविधिरित्युदाहरणमयुक्तमिति भावः।

इति षड्विंशश्लोकव्याख्या।

———

सप्तविंशतिश्लोकस्यावतारिका परिसंख्योदाहरणाक्षेपः।

उक्तन्यायेन परिसंख्योदाहरणमपि कर्तृनियमार्थमेव स्यात्; न तु परिसंख्यार्थमिति; तदुदाहरणमप्ययुक्तमित्याह —

**एवञ्चाश्वाभिधानीग्रहविधिरपि तत्कर्तृनैयत्यमात्र-**
**प्राप्त्यर्थः पर्यवस्येत्प्रथनविधिरिव प्राप्तमन्त्रानुवादी।**
**मन्त्रेऽप्यन्याप्रसक्त्यै विधिमिह सगुणप्राकृताङ्गोक्तनीतिः**
**न क्षाम्येन्मन्त्रमात्रे सति विधिविषये स्याद्विशिष्टानुवादः ॥२७॥**

विध्यन्तरावकाशसत्त्वे जघन्यपरिसंख्यार्थत्वं न स्वीकर्त्तव्यमिति प्रागुक्तम्। प्रोक्षणावहननविध्योश्च कर्तृनियमकर्तृप्राप्त्यर्थतया चारितार्थ्यमुक्तम्; तेन न्यायेन परिसंख्योदाहरणेऽपि कर्तृनियमार्थतैव स्यात्; अर्थप्राप्ते ग्रहणेऽध्वर्योः पाक्षिकत्वेन नियमविध्यवकाशसत्त्वात्। तत्र मन्त्रग्रहणं कर्तृनियमार्थं प्रथनविधाविव लिङ्गप्राप्तस्य मन्त्रस्याऽनुवादकं स्यात् "उरुप्रथस्वेति पुरोडाशं प्रथयती"ति विधिर्न प्रथनविधिः; प्रथनस्य पुरोडाशान्यथानुपपत्तिलभ्यत्वात्। नाऽपि तत्रोरुप्रथस्वेति मन्त्रविधिः; तस्य मन्त्रलिङ्गादेव प्रथने प्राप्तिसत्त्वात्, किं त्वन्यलभ्यप्रथनविधानद्वाराऽऽध्वर्युकर्तृकत्वनियमार्थस्तत्र मन्त्रग्रहणं लिङ्गप्राप्तानुवाद इति ह्युक्तम् मन्त्राधिकरणे।

"अश्वभिधानीमादत्त" इत्यत्र न परिसंख्यत्याशङ्का।

ननु प्रथनविधौ लिङ्गप्राप्तस्य मन्त्रस्य विधाने प्रयोजनाभावादस्त्वनुवादः। इह तु लिङ्गात्प्राप्नुवन्मन्त्रो गर्दभरशनायामपि प्रसज्येतेति तद्व्यावर्तनेन मन्त्रविधेः प्रयोजनवत्त्वादिह मन्त्रांशेऽपि विधिः स्यात्। तल्लभ्यपरिसंख्यायाः समाख्यालभ्यकर्तृनियमाविरोधित्वेन तदर्थत्वे परिसंख्यार्थत्वं नाऽभ्युपगन्तव्यमिति निर्बन्धाभावादिति चेत्।

सत्यमिदम् परिसंख्यालाभार्थं मन्त्रस्याऽपि विधानं विकृतिषु सगुणप्राकृताङ्ग-पुनः श्रवणान्यधिकृत्य 'विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात्' १०।३।१।१ इति दाशमिकाधिकरणे प्रदर्शितन्यायो न सहते। "एकादशप्रयाजान्यजति" "हिरण्यगर्भः समवर्त्तताग्रे" इत्याघारमाघारयतीत्यादौ यत्र प्राकृतं प्रयाजाघारादिकमङ्गं वैकृतसंख्या-सन्त्रादिगुणयुक्तं श्रूयते; तत्र गुणमात्रविधाने प्राकृतगुणस्य स्थाने वैकृत-गुणनिवेशमात्रं लभ्यते। यथेहाऽश्वाऽभिधानीग्रहणमात्रविधाने तत्र कर्तृनियम-मात्रप्रयाजादिप्राकृताङ्गस्याऽपि विधाने गृहमेधीयाज्यभागविधानन्यायेन तस्य चोद-कलोपकतया प्राकृताङ्गान्तरपरिसंख्याऽपि लभ्यते। यथेह मन्त्रस्याऽपि विधाने गर्दभरशनाग्रहणपरिसंख्याऽपि लभ्यते। अथापि तस्मिन्नधिकरणे विशिष्टविधि-गौरवपरिजिहीर्षया गुणमात्रविधिमङ्गीकृत्य परिसंख्या निवारिता। एवमिहाऽपि विशिष्टविधिगौरवपरिहाराय कर्तृनियमार्थमश्वाभिधानीग्रहणमात्रविधानमङ्गीकर्त्तव्यं न तु परिसंख्यार्थं मन्त्रविधानमपीति तेनैव न्यायेन प्राप्नोति।

ननु तर्हि तत्र संख्यादिवदिह मन्त्र एव विधीयताम्। एवमपि विशिष्टविधि-गौरवपरिहारलाभात् चोदकप्राप्तप्रयाजादिवदर्थप्राप्तस्य ग्रहणस्याऽनुवादसम्भवादिति चेत्। किन्तदा ग्रहणमात्रे मन्त्रविधिः, अश्वाभिधानीग्रहणे वा। आद्ये मन्त्रलिङ्गा-देव प्राप्तिसम्भवाद्विधिवैय्यर्थ्यम्। द्वितीये विशिष्टानुवादः स्यात्; तथा च विशेष-णांशाविवक्षया पुनरपि तदेव विधिवैय्यर्थम्। अश्वाभिधानीमात्रमन्त्रविधिरित्यभ्यु-पगमेऽप्युक्त एव दोषः; विशिष्टानुवादपरिहाराय तत्राऽप्यश्वविशेषणस्याविवक्षणीय-त्वात्। तस्मात् "यस्योभयं हविरार्तिमार्छेत्;" तरसमयाः सवनीयाः पुरोडाशाः; "ऐन्द्रवायवाग्रंप्रथममहरि"त्यादिष्विव वाक्यभेदाप्रसङ्गाय विशिष्टानुवादस्य परि-हरणीयत्वात्; एकादश प्रयाजान्यजतीत्यादिष्विव सतिसम्भवे विशिष्टविधिगौर-वस्याऽपि परिहरणीयत्वादिह चाऽर्थप्राप्तग्रहणविधानेन कर्तृनियमार्थतया विधिचारि-तार्थ्यसम्भवाच्चाऽत्र नियमविधित्वमेव न्याय्यम्; न तु परिसंख्याविधित्वम्।

"नन्वेकादशप्रयाजान्यजती"त्यादिषु प्रयाजानुवादस्यास्तिविधी यमान-गुणाश्रयसमर्पकतयोपयोगः। इह तु "इमामगृभ्णन्नि"तिमन्त्रानुवादस्य न तथा-ऽस्त्युपयोगः। न च परिसंख्यार्थत्वेनोपयोगसम्भवे प्रथनमन्त्रवन्निष्फलानुवादत्वकल्पनं युक्तमिति चेन्मैवम्। "ब्रह्मसाम्न्यालभत" इत्यत्र द्रव्य-देवताविशिष्टयागविधि-गौरवपरिहाराय "तान्पर्यग्निकृतानुत्सृजती"ति पृथगाख्यातयुक्तस्य वाक्यस्य तद्वाक्य-विधेयप्राजापत्यपश्वालम्भनोत्कर्षणार्थात्प्राप्त-तद्विषयव्यापारोपरमानुवादत्वकल्पनायाः संप्रतिपन्नत्वेनात्र मन्त्रविशिष्टग्रहणविधिगौरवपरिहाराय; परिसंख्यापरिहाराय च मन्त्रप्रतीकोपादानमात्रस्याऽनुवादकत्वकल्पनायामनुपपत्त्यभावात्। तस्माद्विशिष्ट-विधिगौरवस्य विशिष्टानुवादस्य च परिहाराय रशनाग्रहणविधिरेव, तस्याध्वर्युकर्तृ-कत्वनियमफलकोऽभ्युपेय इति भावः।

इति सप्तविंशश्लोकव्याख्या।

---

अष्टविंशश्लोकस्यावतरणिका

सम्भावितपक्षाणां निरसनेनाश्वमात्रोद्देश्येन मन्त्रविधिरित्यापादनम् ।

स्यादेतत्-माभून्मन्त्राश्वाभिधानीविशिष्टग्रहणविधिः; अश्वाभिधानीग्रहणोद्देशेन मन्त्रविधिः; अश्वाभिधान्युद्देशेन मन्त्रविधिर्वा । अश्वमात्रोद्देशेन मन्त्रविधिस्तु स्यात्; तत्र विशिष्टविधिगौरवस्य विशिष्टानुवादकृतवाक्यभेदस्य चाऽप्रसक्तेः । रशनाग्रहणप्रकाशकस्य मन्त्रस्य साक्षादश्वार्थत्वासम्भवात्तदीयरशनाग्रहणद्वारकत्वं पर्यवस्यतीत्यर्थः; सिद्धार्थानुवादः "परमभिधानीमादत्त" इति फलञ्चाऽस्य विधेर्गर्दभरशनातो मन्त्रपरिसंख्यैव । रशनाग्रहणप्रकाशनद्वारकमन्त्राश्वसंबन्धस्य मन्त्रलिङ्गतः प्राप्तुम् शक्यत्वेन विधिफलत्वायोगादित्याशङ्कयाह—

उद्देश्योत्राऽश्व एवेत्यपि न फलवति स्पष्टलभ्ये विधेये
भावार्थे को हि विद्वान्विधिमिह तमुपेक्ष्यान्यसंक्रान्तिमिच्छेत् ।
कर्तुर्नैयत्यमेतत्फलमपि परिसंख्यावसाय्यस्तु नाम
स्पृष्टा नैषा हि दोषैर्न च भवति विधेर्विध्यनर्होपयानम् ॥२८॥

तन्निरासः

अयमपि पक्षो न समञ्जसः । समानपदोपात्तधात्वर्थविधाने श्रुतिप्रमाणके सम्भवति सति, वाक्यप्रमाणकभिन्नपदोपात्तमन्त्रविध्यङ्गीकारस्याऽन्याय्यत्वात् । मन्त्रविधिफलात्परिसंख्यानाद्ग्रहणविधिफलस्य कर्तृनियमस्याऽभ्यर्हितत्वाच्च ।

ग्रहणविधिलभ्यकर्तृनियमः परिसंख्या पर्यवसायीति वचनम् ।

ननु च ग्रहणविधिलभ्यः कर्तृनियमोऽपि परिसंख्यापर्यवसाय्येव । तथा हि-अश्व-गर्दभरशनयोर्ग्रहणमात्रागृहीताभ्यां ताभ्यामश्वगर्दभयोर्बद्धुमशक्यत्वादर्थप्राप्तम्; न तु प्रत्यक्षश्रुतिविहितम् । अर्थप्राप्तेषु च नाध्वर्यवादिसमाख्याऽस्तीति समाख्यातः कर्तृनियमालाभादध्वर्योरुभयत्राऽपि पाक्षिकाप्राप्तिरूपा नियमप्राप्तावप्राप्तांशपरिपूरणरूपो नियमः क्व चिक्रियमाणः स्वयमेव तावत्परिसंख्यात्मना पर्यवस्येत्तदनुनिष्पादिनी पक्षप्राप्तकर्त्रन्तरनिवृत्तिरपि परिसंख्यात्मना पर्यवस्येत् । उभयत्र पक्षप्राप्तानां कर्त्रन्तराणामेकत्र निवृत्तिरूपत्वादिति चेत् ।

परिसंख्यानिषेधेनाऽस्य विधेः कर्तृनियमफलकत्वनिरूपणम्

अस्तु नामैवं, कर्तृनियमोऽपि परिसंख्या पर्यवसायी तथापि सा परिसंख्या तु दोषत्रयग्रस्तेति दर्शयिष्यते । विध्यनर्हविधिमूले तु स्पष्टमेव क्रियामनन्तर्भाव्य; मन्त्राश्वसंबन्धस्य विधातुमयोग्यत्वात् । तस्मादुदाहृतविधेः कर्तृनियमफलकत्वमेव युक्तम्; न तु मन्त्रपरिसंख्याफलकत्वमिति भावः ।

इत्यष्टाविंशश्लोकव्याख्या

---

एकोनत्रिंशश्लोकस्यावतरणिका

"नन्विमामगृभ्णन्नि"ति मन्त्रस्याध्वर्यवसमाख्यानेनैव तत्प्रकाश्यस्य ग्रहणस्याध्वर्युकर्तृकत्वनियमः सिद्ध्यति। अतस्तदर्थमर्थप्राप्तग्रहणविधेरनपेक्षितत्वाद्वाक्यस्यार्थवत्त्वाय परिसंख्याविधिरेवाऽङ्गीकरणीय इति चेत् मैवम्। अध्वर्यूच्चारितमन्त्रेणाऽन्यस्याऽप्यनुष्ठेयार्थस्मरणसम्भवेन तावता ग्रहणस्याऽध्वर्युकर्तृकत्वासिद्धेः। अत एव प्रथनमन्त्रस्याऽऽध्वर्यवत्वेऽपि प्रथनस्याध्वर्यवत्वसिद्ध्यर्थं प्रथने विधिरङ्गीकृतो मन्त्राधिकरणे। अतएव मन्त्र कल्पसूत्रादितौल्येनोपद्रष्टृवचनस्याऽनुष्ठेयार्थस्मरणोपायत्वेन पक्षप्राप्तिरपि दर्शिता।

रशनाग्रहणस्याध्वर्युकर्तृकत्वसिध्यभाववत्प्रोक्षणा-
वहननविध्योः यवपरिसंख्यार्थत्वमेवेत्युपपादनम्।

ननु माभून्मन्त्रयोः समाख्यया प्रथन-रशनाग्रहणयोरध्वर्युकर्तृकत्वसिद्धिः; प्रोक्षणावहननयोस्तु स्यादेव। प्रोक्षामि वध्यासमित्युत्तमपुरुषेण प्रतीयमानस्य मन्त्रोच्चारयितृकर्तृकत्वस्य बाधकाभावेन त्यागायोगादिति चेत्। एवं तर्हि प्रोक्षणावहननविध्योः प्रथममुपपादितं यवपरिसंख्यार्थत्वमेवाऽस्तु; माभून्नियमापूर्वविधित्वम्। न च तथा सति व्रीहिशास्त्रं व्यर्थं स्यात्। प्रोक्षणावहननविध्योर्व्रीहिपदस्याऽपूर्वीयत्वलक्षणया यवसाधारण्यापादनेनैव तस्य फलवत्त्वादिति वाच्यम्। तस्याऽश्वशफपरिमाणपुरोडाशोत्पादनासमर्थाल्पव्रीहिलाभे प्रतिनिध्यनुपादानार्थतया चारितार्थ्यसंभवेन यवसाधारण्यापादनफलकत्वस्याऽनभ्युपगन्तव्यत्वात्। अपि च व्रीहिशास्त्रेणाऽपि प्रोक्षणावहननयोर्यवसाधारण्यं कर्त्तुं न शक्यमिति तस्य तत्फलत्वाभ्युपगम एव नयुक्त इत्यभिप्रेत्याह—

'[1]यद्व्रीहिप्रोक्षणादेर्यवमपि विषयं तन्वते तच्च चिन्त्यम्
युक्ताऽपूर्वेण दध्यानयनविधिनयादर्थवत्ताविधीनाम्।
नो चेन्नैमित्तिकोऽपि प्रतिनिधिवदियात्सोमधर्मोपदेशान्
ऋच्छेत्संमीलनादीनपि च बृहदपि स्तुत्यपूर्वाविभेदात् ॥२९॥

व्रीहीन्प्रोक्षतीत्यादौ व्रीहित्वावच्छिन्नोद्देशेन प्रोक्षणविधानं
न त्वपूर्वसाधनीभूतव्रीह्युद्देश्येनेति प्रतिपादनम्।

"व्रीहीन प्रोक्षति" "व्रीहीनवहन्ती"ति अपूर्व-नियमविध्युदाहरणयोर्व्रीह्युद्देशेन विधीयमानं प्रोक्षणमवहननञ्च यवसाधारणं; व्रीहिपदस्यापूर्वीयपरत्वादिति सिद्धान्तमर्यादाऽप्यनुपपन्ना। व्रीहिपदस्य मुख्यार्थपरत्वं परित्यज्याऽपूर्वीयाकारलक्षकत्वं किमर्थं कल्पनीयम्। न तावत्तदर्थस्य द्वितीयाश्रुत्यवगतप्रोक्षणावहननसाध्यत्वनिर्वाहार्थम्; "व्रीहीन्प्रोक्षति" "व्रीहीनवहन्ती"ति लौकिकप्रोक्षणावहननविषयपौरुषेयवाक्य इव तस्य जलसंयोग-तुषविमोकरूपलौकिफलविशिष्टतया तत्साध्य-

[1] अस्य खण्डनं भाट्टदीपिकायां ३ अ० ६ पा० द्र०

त्वोपपत्तेः। नाऽपि तस्य प्रोक्षणजन्यादृष्टसंस्कारावहननियमसाध्यत्वनिर्वाहार्थम्; तत्साध्यत्वस्याश्रुतत्वात्। क्रियासाध्यत्वरूपमात्रं हि द्वितीयाश्रुत्यवगतं कर्मत्वम्। न तु क्रियाजन्यातिशयतन्नियमसाध्यत्वपर्यन्तम्।

ननु तथाऽपि प्रोक्षणजन्यसंस्कारावहननियमयोर्वैफल्यपरिहाराय तत्साध्यत्वं व्रीहिशब्दसमर्पितस्यैव वक्तव्यमिति तदर्थमपूर्वीयाकारलक्षणेति चेन्न, यदर्था व्रीहयः; तस्मिन्नपूर्व एव तयोरप्युपयोगसम्भवात्। "प्राङ्मुखोऽन्नानि भुञ्जीत" त्यत्र हि प्राङ्मुखत्वनियमो भोजनस्वरूपानुपयोगी; भोजनस्याऽपूर्वार्थत्वाभावेन तद्गतापूर्वीयत्वरूपोपयोगीत्यपि समर्थयितुमशक्यः सन्नक्लृप्तापूर्वोपयोगी कल्प्यते। इह क्लृप्ते दार्शपूर्णमासिके प्रकरणिन्यपूर्वे विपरिवर्त्तमाने तयोस्तदुपयोगित्वं कथं न कल्प्येत।

ननु च प्रोक्षणावहननयोरपूर्वीयव्रीह्यर्थत्वाभावे तद्वाक्ययोर्व्रीहिपदं लौकिकापूर्वीयसाधारण्येन व्रीहिमात्रपरं वा स्यात्, लौकिकव्रीहिपरं वा ? आद्ये विधिवैरूप्यापत्तिः-अपूर्वीयव्रीहिषु प्रोक्षणावहननयोर्विनियुक्तसंस्कारतया गुणकर्मत्वस्य लौकिकव्रीहिषु भूतभाविविनियोगरहितेष्वर्थकर्मत्वस्य च प्राप्तेः। द्वितीये द्वितीयाश्रुत्यवगतद्रव्यप्राधान्यभङ्गापत्तिः। तस्माद्विधिवैरूप्यपरिहाराय श्रुतगुण-प्रधानभावनिर्वाहाय प्रोक्षणावहननयोः सामवायिकाङ्गत्वलाभाय च व्रीहिपदस्याऽपूर्वीयव्रीहिपरत्वावश्यंभावे सति तत्र लौकिकव्रीहिव्यावर्त्तकस्याऽपूर्वीयत्वस्यावश्यं विवक्षणीयत्वाद्व्रीहित्वस्याऽपि विवक्षायां विशिष्टानुवाददोषापत्तेः; अपूर्वीयत्वस्य च यवसाधारणत्वात्प्रोक्षणावहननयोर्यवसाधारण्यमवर्जनीयमिति चेत्।

व्रीहिपदस्य व्रीहिमात्रपरत्वेऽप्यपूर्वसाधनत्वस्या-
र्थसिद्धत्वेन विशिष्टानुवाददोषनिरासः।

मैवम्। व्रीहिपदस्य व्रीहिमात्रपरत्वेऽपि तत्र लौकिकव्रीहिव्यावर्त्तकस्यापूर्वीयत्वस्याऽर्थाल्लाभसम्भवेन विशिष्टानुवाददोषाप्रसङ्गात्। तथा हि—अधिकारवाक्यस्य प्रकाराकाङ्क्षायामवहननवाक्यस्य फलाकाङ्क्षायाञ्चावहननवाक्यस्यापि समिदादिवाक्यवदधिकारवाक्येनैकवाक्यता कल्पनीया। ततश्च तस्यैवमर्थः संपद्यते अवहनेन व्रीहिद्वारेण स्वर्गार्थदर्शपूर्णमासयागापूर्वं प्रति व्याप्रियेत इति। न चाऽतत्साधनभूतव्रीहिद्वारा तत्प्रतिव्यापर्तुं शक्यते। तेनाऽर्थाद्य एव यागार्थं निरुप्ता व्रीहयस्तेषामेवावहननमिति व्यवस्था सिद्ध्यति। एतेन प्रोक्षणमपि व्याख्यातम्। एवमर्थाल्लभ्ये प्रोक्षणावहननयोरपूर्वसाधनव्रीहिविषयत्वे व्रीहिपदस्य श्रुतव्रीहित्वपरित्यागेनाऽपूर्वसाधनत्वेन लक्षणा कल्पयितुमुचिता।

अवश्यञ्च लौकिकसाधारणेनाकारेण शब्दसमर्पित एवाऽपूर्वीयपदार्थे संस्कारकर्मान्वयबोधने सति तदनन्तरं तस्याऽपूर्वीयत्वावगतावर्थात्संस्कारस्याऽपूर्वीयविषयत्वपर्यवसानमित्ययं न्यायः "तप्ते पयसि दध्यानयती"त्यत्राङ्गीकरणीयः। तत्र हि पयःसंस्कारतया दध्यानयनं विधीयते; नयतेर्द्विकर्मकत्वेन पयसः कर्मत्वावश्यम्भावात्। पयो दध्यानयनेन व्याप्यं प्रधानकर्मेति; तद्गतस्य [1]दध्याधारत्वस्य सप्तम्या

[1] नयनाधेरेति मु. पु. पा.

अनिर्देशः। तत्तु दध्यानयनसंस्कृतं पयः "सा वैश्वदेव्यामिक्षे"ति तदनन्तरवाक्ये प्रधानपरामर्शिना तच्छब्देन परामृश्य देवतासंयुक्तं क्रियते। तद्वाक्यसिद्धेन च द्रव्य-देवतासंयोगेन यागोऽनुमीयते। तत्र संस्कारवाक्यप्रवृत्तिवेलायां पयसोऽनुमास्यमानयागापूर्वार्थत्वानवगतेः। पयस्त्वेन शब्दसमर्पित एव पयसि संस्कार-दध्यानयनान्वयबोधः, तदनन्तरं संस्कृतस्य पयसो देवतासंयोजने सति द्रव्य-देवता-संयोगानुमितयागापूर्वार्थत्वेऽवगते संस्कारस्याऽर्थादपूर्वीयविषयत्वपर्यवसानम्। एवमिहाऽपि प्रोक्षणावहननवाक्यश्रवणदशायां केवलं व्रीहित्वेन शब्दसमर्पितेषु व्रीहिषु प्रोक्षणावहननान्वयबोधः। तदनन्तरं तद्वाक्ययोरधिकारवाक्यैकवाक्यतादशायां प्रोक्षणावहननयोरपूर्वार्थत्वेऽवगते तयोरर्थादपूर्वीयविषयत्वपर्यवसानमिति युज्यत एव।

पुनराधानदृष्टान्तेन वीधीयमानस्य प्रोक्षणस्यावहननस्य च विधेयसामर्थ्येन शाब्दबोधानन्तरमपूर्वसाधनीभूतव्रीहीणां विषयत्वलाभ इति प्रतिपादनम्।

अपि च तयोरप्यपूर्वार्थत्वावगत्यपेक्षायामप्यपूर्वीयव्रीहिविषयत्वमर्थाल्लभ्यते। "यस्योभावनुगतावग्नी अभिनिम्लोचेदेभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिरि"त्यत्र हविरार्त्त्यधिकरणन्यायेन श्रुतस्याऽग्न्युभयत्वस्याऽविवक्षयान्यतराग्न्यनुगमनेऽपि पुनराधानप्रसक्तौ शब्दान्वयबोधवेलायामुभयत्वग्रहाणेनऽग्न्यनुगममात्रस्य निमित्तत्वावगतावपि निमित्ते विधीयमानमाधानं सहितयोरेवाग्न्योरुत्पादनक्षमम्। न त्वेकैकस्याग्नेरिति विधेयसामर्थ्याद्यथोभयाग्न्यनुगमस्य निमित्तत्वलाभः; एवमिहाऽपि द्वितीया-श्रुतिनिर्दिष्टव्रीहिगुणतया विधीयमानं प्रोक्षणमवहननं च भूतभाव्युपयोगरहितलौकिक-व्रीहिविषयं भवितुं न योग्यमिति विधेयसामर्थ्याच्छाब्दान्वयबोधानन्तरमपूर्वीय-व्रीहीणां विषयत्वलाभः संभवतीति किमनुपपन्नम्। अवश्यञ्चाऽत्राऽप्येवमेवोपपादनीयम्। अन्यथा शाब्दान्वयबोधवेलायामपूर्वीयत्वविवक्षायां तस्य जुह्वादि-साधारण्याज्जुह्वादिष्ववहननस्य कृष्णलश्रपणवददृष्टार्थताया वक्तव्यत्वाच्च। विधि-वैरूप्यापत्तिं तण्डुलप्रणाडिकापूर्वीयत्वविवक्षायां विशिष्टानुवाददोषापत्तिं वा को वारयिता।

व्रीहिशब्दस्य व्रीहिमात्रपरत्वं विहायापूर्वीयत्वलक्षणायां क्रयादिधर्मजातस्य फल-चमसे उपदेशेन प्राप्तिरित्यनिष्टापादनम्।

अपि च यदा व्रीहिषु विहितमवहननादिकमपूर्वीयत्वलक्षणया यवेष्वपि स्यात्; तदा सोमे विहितं क्रयादिसंस्कारजातं फल-चमसेऽप्युपदेशत एव स्यात्; हविः-प्रकृतित्वेन सोमयागापूर्वसाधनत्वस्य तत्राऽपि सत्त्वात्।

नित्यानित्यसंयोगविरोधेन फल-चमसे सोमसामानविध्य इत्याशंका।

ननु नित्यस्य क्रयादिसंस्कारजातस्याऽधिकारान्वये नैमित्तिकत्वादनित्यः फल-चमसद्वारं भवितुं नार्हति; स्वयं च विशेष्यतया तेनान्वेतुं नाऽर्हति न खल्वभिषवेन नित्यं ज्योतिष्टोमस्योपकुर्यात्; अनित्यफलचमसद्वारेति युज्यते। नापि नित्याभिषव-विशिष्टेन फलचमसेन "निमित्तवान्यजेतेति" युज्यते। तस्मान्नित्यानित्यसंयोगविरोधान्न फलचमसस्य सोमसामानविध्यमिति चेत्।

पूर्वोक्तशंकाया विषयभेदन निराकरणम्।

स्यादेतदेवम्। यदि फलचमसत्वाकारेण स वाक्यार्थान्वयी स्यात् "सोमं क्रीणाती"त्यादिसंस्कारवाक्येषु सोमपदलक्षितापूर्वसाधनत्वाकारेण स वाक्यार्थान्वयी चेत्कः प्रसङ्गी नित्यानित्यसंयोगविरोधस्य सर्वत्रापि हि ज्योतिष्टोमप्रयोगे हविःप्रकृतित्वेन तदपूर्वसाधनीभूतः फलचमसः; सोमो वाऽस्त्येव। यद्येवमपि फलचमसस्यासाधारणरूपेण नित्यत्वमालोच्य नित्यानित्यसंयोगविरोधः शंक्येत; तदा व्रीहि-सोमादिप्रतिनिधिनीवार-पूतीकादीनामपि तत्तत्संस्कारोपदेशेषु सामानविध्यं न सिद्ध्येत्।

ननु व्रीहि-सोमादिमुख्यालाभे नीवारपूतीकाद्याः स्वयमेव तत्तत्स्थानेनोपादीयन्ते येन तदुपादानस्य मुख्यालाभनिमित्तकत्वेनानित्यत्वान्नित्यसंस्कारान्वये नित्यानित्यसंयोगविरोधो भवेत्; किन्तु व्रीह्यादिसदृशेषु नीवारादिषु ये व्रीह्याद्यवयवास्त एवोपादीयन्तेति च व्रीह्याद्यनुप्रविष्टतत्तदवयववद्व्रीह्यादिशास्त्रमुख्यार्था एव इति न नित्यानित्यसंयोगविरोधप्रसक्तिरिति चेत्।

एवं तर्हि मुख्य-प्रतिनिध्युभयलाभे कदा चिदिच्छया प्रतिनिध्युपादानमपि प्रसज्येत; व्रीह्यादिशास्त्रमुख्यार्थत्वाविशेषात्। ननु मुख्यप्रतिनिध्योर्व्रीह्याद्यवयवभूयस्त्वाल्पत्वाभ्यामस्ति विशेषः। तथा च व्रीह्यादिगतसमग्रावयवोपादानसम्भवे नीवारादिगतविकलावयवोपादानं न प्रसज्येत इति चेत्, तर्हि व्रीह्यादिगतसमग्रावयवालाभनिमित्तमेव नीवारादिगतविकलावयवोपादानमिति कथं नित्यानित्यसंयोगविरोधो न भवेत्।

किञ्च "सोमाभावे पूतिकानभिषुणुयादि"ति विधिना स्पष्टमेव पूतीकानां सोमाभावनिमित्तकत्वमवसीयते। नन्वत्र सोमाभावे निमित्ते पूतीका न विधीयन्ते किन्तु सोमाभावे तत्सुसदृशानामन्येषामेव बह्ववयत्रलिप्सयोपादाने प्राप्ते; तेन मन्दसदृशाः पूतीका नियम्यन्त इति तृतीय-षष्ठयो ३।६।१५।६।३।१३ रुक्तमिति चेत् किन्ततस्तेनाऽपि नैमित्तिकत्वमेवाऽऽयाति सप्तमीश्रुतिप्राप्तं सोमाभावस्य निमित्तत्वं पूतीकानाम्; तद्गतसोमावयवानां वा साधनत्वे किञ्चिदपि न भिद्यते।

तस्मात्तत्र एव नित्यानित्यसंयोगविरोधः परिहरणीयः। यद्यपि नीवारपूतीकादिगतव्रीहिसोमाद्यवयवास्तदसाधारणरूपेण मुख्यालाभनिमित्तकत्वादनित्याः; तथापि प्रोक्षणादिशास्त्रगतव्रीह्यादिपदतात्पर्यविषयेण साधारणरूपेण नित्या एव-इति। अयं परिहारो नैमित्तिके फलचमसादावपि समानः।

प्रतिनिधिस्थल इव नित्यानित्यविरोधपरिहारस्य स्थलान्तरप्रदर्शनम्।

एवमेव हि "यदाहवनीये जुहोती" त्यादिष्वपि नित्यानित्यसंयोगविरोधः परिहरणीयः। अन्यथा तत्राऽप्याहवनीयस्यैष्टिकसौमिकाद्यपूर्वार्थत्वं नित्यवदाम्नातं नारिष्टहोमादिद्वारैव स्यादिति; भेदनादिनिमित्तहोमानामाहवनीयाधारत्वं न सिद्ध्येत्।

क्व तर्हि नित्यानित्यसंयोगविरोधः। यत्राऽनित्यमेकमेव द्वारं भवति तत्रैव यथा—"भिन्ने जुहोती" ति। अत्र हि होमो भिन्नाधिकरणकस्तत्संस्कार इति पूर्व-

पक्षे भिन्न इत्यस्य संस्कार्यपरतया निमित्तपरत्वाभावेन होमो नित्यः स्यात्; तद्वारं तु भिन्नमनित्यमेवेति नित्यानित्यसंयोगविरोधः। तस्मात्प्रतिनिधीनां मुख्यसामानविध्यम्; नैमित्तिकानां नित्यसामानविध्याभावश्च व्यवस्थयाऽभ्युपगच्छद्भिर्मीमांसकैः संस्कारवाक्यगतव्रीहि-सोमादिपदानामपूर्वीयत्वलक्षणां परित्यज्य मुख्यार्थपरत्वमेवाऽभ्युपेत्य प्रतिनिधिगतमुख्यावयवानां व्रीह्यादिगततदवयवानामिव व्रीह्यादिपदमुख्यत्वान्मुख्यसामानविध्यम्, फलचमसस्य सोमपदविषयत्वाभावान्न सोमसामानविध्यमित्येव सा व्यवस्थोपपादनीया। प्रतीयते च तत्तदधिकरणपर्यालोचनया तथैवाऽभ्युपेत्य सा व्यवस्थोपपादितेति।

कथमिति चेत्। उच्यते। नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ३।६।१२ इति तार्तीयाधिकरणे "यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममि"ति वाक्यमुदाहृत्याऽत्र राज्यन्य-वैश्यनिमित्तेन सोमस्थाने विधीयमानः फलचमसः संस्कारवाक्येषु सोमेन समानविधानः स्यादुतासमानविधान इति संशय्य; अपूर्वीयत्वाविशेषात्समानविधान इति पूर्वपक्षं कृत्वा नित्यमभिषवेण ज्योतिष्टोमस्योपकुर्यान्नैमित्तिकफलचमसद्वारेत्येवमन्वये नित्यानित्यसंयोगविरोधान्न समानविधान इति सिद्धान्तितम्। अनेनाऽपूर्वीयत्वमर्थाल्लभ्यं न सोमपदविषयः इति पूर्वपक्षबीजमाभासं मत्वा फलचमसस्य फलचमसत्वाकारेण संस्कारवाक्येषु सोमपदविषयत्वं न सम्भवतीति दूषणं च स्पष्टत्वादुपेक्ष्य; तस्य तथा तद्विषयत्वसम्भवेऽपि नित्यानित्यसंयोगविरोधादुपदेशतः संस्कारान्वयो न युज्यत इति प्रतिपादितमित्यवसीयते। अन्यथाऽपूर्वीयत्वाकारेण फलचमसस्य संस्कारवाक्यानुप्रवेशमाशङ्कितवन्तं प्रति फलचमसत्वाकारेण नित्यानित्यसंयोगविरोधोद्भावनायोगात्।

तथा "प्रतिनिधिश्च तद्वत्"३।६।१४ इति तदनन्तराधिकरणे व्रीह्यादिप्रतिनिधयो नीवारादयोऽपि व्रीह्यादिभिर्न समानविधाना व्रीह्याद्यभावे निमित्ते उपादीयमानत्वेन नैमित्तिकतया फलचमसतुल्यत्वादिति पूर्वपक्षं कृत्वा मुख्याभावे नीवाराद्या न यागसाधनत्वेनोपादीयन्ते; तद्गता व्रीह्यवयवा एव तु सकलासम्भवाद्विकला उपादीयन्ते नीवारावयवोपादानं त्वनुषङ्गादवर्जनीयतया व्रीह्यवयवाश्च व्रीहिगता इव नीवारगता अपि व्रीहिशब्दविषयतया संस्कारविध्यन्विता एव। अतः समानविधाना इति "तद्वत्प्रयोजनैकत्वादि"तिसूत्रेण सिद्धान्तितम्। अनेनाऽपि संस्कारवाक्येषु व्रीह्यादिशब्दानां मुख्यार्थविवक्षा स्पष्टमेवाऽवसीयते अपूर्वीयत्वविवक्षायां नीवारादिकस्याप्यपूर्वीयत्वेन संस्कारविध्यन्वयस्य सूपपादतया तेषां साधनत्वनिराकरणास्यनुपयोगप्रसङ्गात्।

स्यादेतन्नैमित्तिक-प्रतिनिध्योर्नित्यानित्यसंयोगविरोधप्रसङ्ग-तदप्रसङ्गौ न मूलयुक्तित्वेनासामानविध्यसामानविध्यव्यवस्थापकौ किं तु द्विरुक्तिप्रसङ्ग-तदप्रसङ्गौ। तथा हि नित्यं नैमित्तिकं च न युगपद्विधेयम्; किं तु नित्यं सोमादिद्रव्यं सामान्येन विधाय सर्वत्र तस्यैव प्राप्तौ राजन्यादिनिमित्ते सति विशेषरूपेण नैमित्तिकं फलचमसादि-

विधेयम् । तद्यस्यां वेलायां स्वाभाविकनित्याङ्गविधेयं तस्यामेव संस्कारविधयस्तन्मात्रविशेषणत्वेन स्वार्थं विधाय निवृत्तव्यापारा न भूयः शक्नुवन्ति नैमित्तिकविशेषणत्वेनापि स्वार्थं विधातुमावृत्तिप्रसङ्गादित्येवं द्विरुक्तिप्रसङ्गो नैमित्तिकस्याऽसामानविध्यव्यवस्थापकः। तदप्रसङ्गः प्रतिनिधेः सामानविध्यव्यवस्थापकः। न हि सामान्यविशेषरूपेण भिन्नविधिविधेययोर्नित्य-नैमित्तिकयोरिव मुख्य-प्रतिनिध्योर्व्रीह्यादिपदविषयत्वाविशेषाद् "व्रीहिभिर्यजेते"त्याद्येकविधिविधेययोर्विधानायौगपद्यमस्ति; येन द्विरुक्तिराशङ्क्येत इति एवं द्विरुक्त्यापादकं विध्ययौगपद्यमेवातुल्यत्वादिति नैमित्तिकाधिकरणसिद्धान्तहेतुपरशब्देन विवक्षितम्। द्विरुक्तिशङ्कापनायकं विधानैक्यमेव च "प्रयोजनैकत्वादिति" प्रतिनिध्यधिकरणसिद्धान्तहेतुपरशब्देन विवक्षितम्। विधानं हि वाक्यस्य प्रयोजनमिति चेत्? उच्यते-एवमप्यपूर्वीयत्वविवक्षाविरोधो नाऽपैत्येव। यस्यां वेलायां "व्रीहिभिर्यजेते"त्यादिशास्त्रं प्रवर्त्तते तस्यामेव वेलायां व्रीह्यादिविशेषणत्वेन संस्कारवाक्यैरवहननादीनि समर्प्यमाणानि व्रीहित्वादिनैव तदन्वयं लभेरन्नापूर्वीयत्वेन। तस्य व्रीहिशास्त्रादिप्रवृत्तेः पूर्वमनवगमात्।

व्रीहिशास्त्र-यवशास्त्रयोः युगपत्प्रवृत्याऽवहननादीनां यवसाधारण्यतया नैमित्तिकशास्त्राणां नित्यशास्त्रस्य "पौर्वापर्यैण प्रवृत्य ।तत्साधरण्याभावः

इति कथनम्।

ननु तर्हि व्रीहिशास्त्रादिप्रवृत्त्यनन्तरमेवाऽवहननादीनां तदन्वयोऽस्तु। तथा च व्रीहिशास्त्राद्यगतापूर्वीयत्वाकारेण तेषां व्रीह्याद्यन्वय उपपद्यते। यवशास्त्रस्याप्यनैमित्तिकत्वेन व्रीहिशास्त्रसमकालप्रवृत्तिकतया यवानामप्यपूर्वीयत्वेन क्रोडीकाराद्यवसाधारण्यमपि तेषामुपपद्यते। नैमित्तिकशास्त्राणान्तु नित्यशास्त्रप्रवृत्त्यनन्तरभावित्वेन संस्काराणां नित्यान्वयवेलायां नैमित्तिकगतापूर्वीयत्वानवगत्या तत्साधारण्याभावश्चोपपद्यत इति सर्वं समञ्जसमिति चेत्।

दृष्टान्त-दार्ष्टान्तिकवैषम्यप्रदर्शनम्, तेन नैमित्तिकानां नित्यसामानविध्यापादनं च।

एवं ह्यनैमित्तिकत्वेन यवशास्त्रवदेव व्रीहिशास्त्रसमकालं प्रवृत्तियोग्यानामवहननादिशास्त्राणां यवसाधारण्यार्थमेव यवशास्त्रस्यापि प्रवृत्त्यनन्तरं प्रवृत्तिरभ्युपगम्यत इत्यायातम्। तथा नित्यधर्माणां नैमित्तिकसाधारण्यार्थं नैमित्तिकशास्त्रस्याऽपि प्रवृत्त्यनन्तरं संस्कारवाक्यानां प्रवृत्तिरित्यपि कुतो नाऽभ्युपगम्यते। वस्तुतस्तु "व्रीहिभिर्यजेते"त्यादिशास्त्रैर्मुख्यानां व्रीह्यादीनामिव नीवारादिगतव्रीह्याद्यवयवानां नाऽपूर्वीयत्वं सिद्ध्यति। व्रीहित्वादिजातिवाचिनां व्रीह्यादिशब्दानां तदवच्छिन्नव्रीह्यादिलक्षकत्वस्येव तदनवच्छिन्ननीवारादिगतव्रीह्यादिभावयोग्यावयवलक्षकत्वस्याऽसम्भवात्। किन्तु व्रीहिशास्त्राद्यनुसारेण मुख्येष्वेव व्रीह्यादिष्ववश्यमुपादातव्येषु नित्यम्; आरब्धकाम्यं च कदाचिद्व्रीह्याद्यलाभेऽप्यवश्यमनुष्ठेयमिति प्रधानानुसारेण यत्किञ्चिद्द्रव्याक्षेपे च प्रसक्ते व्रीहित्वादिजात्यनवच्छिन्नत्वेऽपि तदवच्छेद्य-

त्वयोग्यतया मुख्यसन्निकृष्टानां नीवारादिगतव्रीह्यादिभावयोग्यावयवानां सम्भवे विप्रकृष्टमापादिद्रव्यान्तरोपादानायोगात्त एवोपादेया इत्येवंरूपादाक्षेपात्तेषामपूर्वीयत्वं सिद्ध्यति। सोमाभावे तु भूयोऽवयवलिप्सया सुसदृशाक्षेपे प्रसक्ते पूतीकोपादानमात्रेपस्याऽप्यपवादकेन वचनान्तरेण सिद्ध्यति। ततश्च यदि मुख्यशास्त्रप्रवृत्त्यनन्तरमेव संस्कारशास्त्राणि प्रवर्त्तेरन्, तदामुख्याभावे निमित्ते सत्याक्षेपवचनान्तरावगम्यापूर्वीयभावानां प्रतिनिधीनामुपदेशतः संस्कारान्वयो न सिद्ध्येत्-इति; तत्सिद्ध्यर्थं-मुख्यशास्त्रप्रवृत्त्यनन्तरभाविनामाक्षेपवचनान्तराणामपि प्रवृत्तिमपेक्ष्यैव संस्कारशास्त्रप्रवृत्तिरेष्टव्या। तथा सति नैमित्तिकानामपि नित्यसामानविध्यमापादितं निवारयितुं न शक्यते।

व्रीहिशब्दस्यापूर्वसाधनालक्षणपरत्वे यथा
नैमित्तिकशास्त्राणां नित्यसामानविध्यदूषणं
तथा मुख्याथाविवक्षापक्षे प्रतिनिधीनां
मुख्यसामानविध्यं न स्यात् इति शङ्का।

नन्वेवं सत्यपूर्वीयत्वलक्षणापक्षे नैमित्तिकानां नित्यसामानविध्यं स्यादिति दूषणमिव मुख्यार्थविवक्षापक्षे प्रतिनिधीनां मुख्यसामानविध्यं न स्यादिति दूषणमापतेत्, व्रीहि-सोमादिविधायकशास्त्रस्थितानामिव तत्संस्कारविधायकशास्त्रस्थितानामपि व्रीहिसोमादिशब्दानां मुख्यमात्रपरत्वेन प्रतिनिधिसाधारण्याभावादिति चेत्।

उच्यते व्रीहि-सोमादिसंस्काराणां द्वितीयाश्रुत्यादिभिर्व्रीह्याद्यर्थत्वेनाऽवगम्यमानानां प्रकरणलभ्य-तत्तदधिकारापूर्वार्थत्वस्य व्रीह्यादिद्वारैव निर्वहणीयत्वादपूर्वसाधनेतरव्रीह्यादीनां च तत्र द्वारत्वायोगात्। अपूर्वसाधनव्रीह्यादिगवेषणायां "व्रीहिभिर्यजेत" "सोमेन यजेते"त्यादिशास्त्रैर्व्रीह्यादय इव न्यायेन वचनान्तरेण च नीवार-पूतीकादिगतव्रीहिसोमादिभावयोग्यावयवा अपि तत्साधनत्वेनाऽवगम्यन्ते इति तेषामपि संस्कारान्वयितया द्वारत्वनिर्वाहाय संस्कारवाक्यगतव्रीह्यादिशब्दानां व्रीहित्वादिजातिवाचिनां साक्षात्तदवच्छिन्नव्यक्तिमात्रलक्षणामपहाय साक्षात्परम्परया तदवच्छेद्यत्वयोग्यमात्रे लक्षणा कल्प्यते; नीवारादिगतव्रीहिभावादियोग्यावयवाश्च व्रीह्यादिगतावयवा इव व्रीह्यादिव्यक्तिद्वारा[1] तदवछेद्यत्वयोग्या एवेति प्रतिनिधीनां मुख्यसामानविध्ये न काचिदनुपपत्तिः।

यद्यपि प्रथमोपस्थितव्रीह्यादिव्यक्तिद्वारैव संस्काराणामधिकारापूर्वार्थत्वं निर्वहति; तथापि[2] पश्चादपि न्यायादिनाऽपूर्वसाधनत्वेनाऽवगम्यमाननां नीवारादिगतव्रीहिभावादियोग्यावयवानामवहननादिनियमे सम्भवत्यनियमस्याऽन्याय्यत्वात्, अवहननादिनियमाकाङ्क्षायां तत्साधारणलक्षणया तेषामपि संस्कारान्वयः कल्प्यते। तथा

---

[1] अवयवत्येति मु. पु. पा.

[2] पश्वादिति मु. पु. पा.

प्रथमप्रवृत्तोपदेशलब्धप्रकृत्यन्वयनिराकाङ्क्षाणां प्रयाजादीनां सौर्यचर्वाद्याकाङ्क्षानुसारात्पाश्चात्येनाऽतिदेशेन तदन्वयोऽपि कल्प्यते। नचैवं यव-फलचमसाद्याकाङ्क्षानुसारात्तत्साधारणलक्षणया व्रीहि-सोमादिसंस्काराणां तदन्वयोऽपि कल्प्यः स्यादिति वाच्यम्। व्रीहि-सोमादिशब्दानां नीवार-पूतीकादिगतव्रीहिसोमाद्यवयवेष्विव यव-फलचमसादिलक्षणाहेतोः प्रसिद्धसंबन्धस्याभावात्; यथाकथञ्चिदप्रसिद्धेन संबन्धेन लक्षणाकल्पनादनियतैर्लौकिकसिद्धावहनन-नखविदलनादिभिस्तदाकाङ्क्षापूरणस्यैव युक्तत्वात्। अत एव "तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः" इति पुरोडाशप्रतिष्ठापनमन्त्रगतव्रीहिपदस्य व्रीहिप्रतिनिधिकृतपुरोडाशेषु लक्षणाहेतोः प्रसिद्धसम्बन्धस्य सत्त्वात्तस्य मन्त्रस्य प्रवृत्तिर्न तु यवमयपुरोडाश इति तस्मिन्ननुष्ठेयार्थप्रकाशनमनियतेन लौकिकोपायेनेत्यङ्गीकृतम्।

"धान्यमसि धिनुहि देवानिति" मन्त्रेण च सतुपद्रव्यवाचिनो धान्यशब्दस्य वितुषावस्थायां प्रसिद्धसम्बन्धसत्त्वेन लक्षणया प्रवृत्तिमङ्गीकृत्य शाक्त्यानामयने तरसमयपुरोडाशेषु प्रसिद्धसंबन्धाभावाल्लक्षणा न सम्भवतीति मांसमसीत्यूह एवोक्तः। प्रयाजादीनामपि प्रसिद्धदर्शपूर्णमाससम्बन्धवत्सु सौर्यचर्वादिष्वेवान्वयः कल्प्यते न तु तद्रहितेषु दर्विहोमादिष्वपि यथाकथंचिदप्रसिद्धसादृश्यान्वेषणेन। दर्विहोमादीनामितिकर्त्तव्यताकाङ्क्षा त्वर्थलभ्यस्वरूपनिष्पादनादिनैव पूर्यते। तस्मादवहननादिवाक्यगतव्रीह्यादिशब्दानां व्रीह्यादिस्वरूपपरत्वपक्षे प्रतिनिधिनैमित्तिकयोः समानविध्यासामानविध्यव्यवस्थापनं कथं चिन्मीमांसकरीत्योपपद्यते। तेषामपूर्वीयत्वलक्षणापक्षे तु कथमपि सा नोपपद्यत इति विशेषो विद्वद्भिः परिभावनीयः।

रथन्तरादिदृष्टांतस्य वैषम्येण व्रीहिधर्माणां
व्यवस्थया विधानाभावेनाऽप्राप्तिरिति शंका।

अपि च यदि व्रीहिषु विहितप्रोक्षणावहननमपूर्वीयत्वलक्षणया यवेष्वपि स्यात्तदा पृष्ठस्तुत्यपूर्वीयसाधने रथन्तरे विहितं मीलनादिकं तदपूर्वसाधने बृहत्यपि प्रसज्येत। ननु रथन्तरे प्रस्तूयमाने संमीलयेत् बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेदिति संमीलनादिषु समुद्रध्यानादिषु रथन्तर-बृहन्निर्देशभेदान्मीलनादयो रथन्तरस्यैव धर्माः, समुद्रध्यानादयो धर्मा बृहत एवेति धर्मव्यवस्था भवति। उक्तं च नवमे सूत्रकृता "निर्देशाद्व्यवतिष्ठेरन्निति" ९।२।१५।४७। न तथेह व्रीहीणां यवानां च व्यवस्थया धर्मविधानमस्ति येन व्रीहिधर्मा यवेषु न स्युरितीति चेत्।

मैवम्। निर्देशभेदे सत्यपि तवाऽपूर्वीयत्वलक्षणावश्यंभावेन मीलन-समुद्रध्यानादिधर्मसांकर्यस्य प्रतिक्षेप्तुमशक्यात्वात्, तत्र निर्देशभेदस्वारस्यनिर्वाहार्थमपूर्वीयत्वलक्षणां विनाऽपि धर्मविधानोपपादने तथैव प्रोक्षणादिविधानस्याप्युपपादनसम्भवेन, व्रीहिपदानां मुख्यार्थत्यागायोगात्। न चापूर्वीयत्वलक्षणायां सत्यामपि निर्देशभेदनिर्वाहार्थं रथन्तरत्वादिकमपि विवक्षितुं शक्यम्। वाक्यभेदावहस्य विशिष्टानुवाददोषस्याऽवश्यपरिहरणीयत्वात्।

विशिष्टानुवाददोषस्य वाक्यभेदापादकस्याग्निसूर्य-
दृष्टान्तेन व्यवस्थापादनम्।

स्यादेतत् "यदग्नये च प्रजापतये च सायं जुहोति" यत्सूर्याय च प्रजापतये च प्रातर्जुहोती"ति निर्देशभेदादेव सायंप्रातर्होमयोरग्निसूर्यव्यवस्था दृष्टा; न हि तत्र होमयोः सायंप्रातर्विशेषणे विवक्षितुं शक्यो, विशिष्टानुवाददोषापत्तेः। न च सायंप्रातःशब्दाभ्यां लक्षितयोर्होमयोस्तत्रऽग्निसूर्यविधानं जुहोतीति तल्लक्षितहोमानुवादमात्रं नोद्देश्यसमर्पकम्। तथा च सायं-प्रातःशब्दौ स्वार्थसंबन्धिनोरेव होमयोर्लक्षकौ भवतो न तु होमान्तरयोरिति नाऽग्निसूर्ययोरव्यवस्थाप्रसङ्ग इति वाच्यम्। सायं-प्रातःकालयोरेकस्यैव होमस्याभ्यस्यमानतया होमभेदाभावेन सायं-प्रातःकालोपलक्षितस्याऽग्निहोत्रहोमस्य प्रातः-सायंकालयोरप्यनपायितया"ऽनपायो हि कालस्य लक्षणं हि पुरोडाशौ" १०।८।१९।६९ इतिन्यायादापततोऽग्निसूर्यसांकर्यस्यानिवार्यत्वात्। सायंप्रातःकालविशिष्टहोमलक्षणायामपूर्व्रीयव्रीहिलक्षणायामिव विशिष्टानुवाददोषापत्तेः। तस्मान्निर्देशभेदमात्रमेवाऽवलम्ब्य तत्र व्यवस्थोपपादनीया, एवमिहाऽपि भविष्यतीति चेत्।

मैवम्। न ह्यग्नि-सूर्यवाक्ययोरग्निसूर्यविधानम्, तत्र प्रजापतेरेव विधेयत्वात्। "अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहे"ति सायं जुहोति "सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहे"ति प्रातरिति वचनविनियुक्तमन्त्रवर्णप्राप्ताग्नि-सूर्यानुवादेन प्रजापतिमात्रविधाने सम्भवति तयोरप्यत्रैव विधानस्वीकारे गौरवात्। तथा च प्रजापतेः कालद्वयेऽपि सत्त्वेनाऽग्नि-सूर्यवत्कालव्यवस्थानपेक्षणान्निर्देशभेदेन व्यवस्थायां नेदमुदाहरणम्।

न च वाच्यं होममात्रानुवादेन प्रजापतेरेकस्यैवाऽत्र विधेयत्वे वाक्यद्वयं व्यर्थमिति। अग्निवाक्येन प्रजापतिविधाने तत्रत्याऽग्निसायंपदयोरग्नि-सायंकाल-संबन्धेन प्रजापतिस्तुत्यर्थतावत्सूर्यवाक्यस्याऽपि सूर्य-प्रातःकालसंबन्धेन तत्स्तुत्यर्थतोपपत्तेः। एवमपि सूर्यवाक्यमर्थवादरूपमनर्थकप्रायं स्यादिति चेत्। न। अग्नि-सूर्य-वाक्याभ्यां सायं-प्रातर्होमयोर्व्यवस्थयाऽग्निसूर्यविधानेऽग्निसूर्यमन्त्रौ लिङ्गादेव सायं-प्रातःकालयोर्व्यवतिष्ठेते इति तद्व्यवस्थापकवचनयोरनपेक्षणात्तयोरुभयोरपि "अर्थवादो वा" इति १।२।४।३७ मन्त्राधिकरणसूत्रोक्तरीत्यार्थवादताया वक्तव्यत्वेन तदपेक्षया-ऽग्नि-सूर्यवाक्ययोरन्यतरस्यार्थवादताभ्युपगमस्यैव युक्ततरत्वात्।

न च वाच्य "मग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहे" त्येव सायं होतव्यं "सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहे" ति प्रातरिति मिश्रलिङ्गविधिपर्युदस्तयोः शुद्धलिङ्गमन्त्रयोः प्रतिप्रसवार्थं तद्विधायकवचनद्वयमिति; अग्निवाक्येनाग्नेः सायं होमे सूर्यस्य प्रातर्होमे च व्यवस्थया विधाने सति शुद्धलिङ्गवचनद्वयमेव सांयप्रातर्होमयोर्लिङ्गाद्व्यवस्थया प्राप्नोति; न तु मिश्रलिङ्गवचनद्वयं लिङ्गाविशेषादित्यपेक्षिततद्व्यवस्थार्थत्वेन सप्रयोजनस्य मिश्रलिङ्गविधिद्वयस्याऽनपेक्षितेऽग्निहोत्रप्रकरणाम्नानावगततदङ्गभावस्य शुद्धलिङ्गमन्त्र-द्वयस्य पर्युदासे व्यापाराभावेन तत्प्रतिप्रसवानपेक्षणात्। एवं तर्हि मिश्रलिङ्गमन्त्रविधि-द्वयं शुद्धलिङ्गमन्त्रविधिद्वयं च तत्रोदाहरणं स्यादिति चेत्। मैवम्। तेषां मन्त्राणां

स्वाहाकारलिङ्गेन होमाङ्गतयाऽवगतानामाज्यभागक्रमाम्नातानां याज्यानुवाक्यानामिव केवलं कालयोरेव व्यवस्थापनस्यापेक्षितत्वेन "तस्माद्वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायामि" तिवत् मिश्रलिङ्ग-शुद्धलिङ्गमन्त्रविधीनां तत्तत्कालसंबन्धमात्रपरतया तत एव मन्त्रलिङ्गव्यवस्थासिद्धेः। तस्माद्विशिष्टानुवादानपेक्षाया व्यवस्थाया निर्देशभेदमात्रात्सिद्धौ नेदमप्युदाहरणम्।

निर्देशभेदेन केवलेन बृहद्रथन्तरादिदृष्टान्तेनापूर्वभेदेन
व्यवस्थासिद्धिरित्याशंका

ननु निर्देशभेदमात्राद्व्यवस्थासिद्ध्यसम्भवेऽपि अपूर्वभेदात् बृहत्-रथन्तरधर्माणां व्यवस्था सिध्येत्; अपूर्वभेदश्च; "बृहत्पृष्ठं भवति" "रथन्तरं पृष्ठं भवती" त्युत्पत्तिवाक्यभेदेन शूरत्व-चित्रत्वादिस्तुतिप्रकारभेदेन च बृहद्रथन्तरसाधनकपृष्ठस्तोत्रभेदसत्त्वात्, अपूर्वसाधनकर्मभेदे सत्यपूर्वभेदावश्यम्भावात्। नचैवं सत्यदृष्टार्थयोर्बृहद्रथन्तरपृष्ठयोः प्रयाजादिवत्समुच्चयापत्तिः। वचनबलाद्विकल्पोपपत्तेरिति चेत्।

तन्निरासमुखेन पृष्ठस्तोत्रभेदस्य समर्थनम्। तदुपबृंहणस्य
तात्पर्यवर्णनम्, सूत्रोक्तस्य लिङ्गविरोधप्रदर्शनं च

मैवम्। "पृष्ठैः स्तुवत" इत्येतदेव माहेन्द्रादीनां चतुर्णां स्तोत्राणामुत्पत्तिवाक्यं बृहद्रथन्तरवाक्यद्वयं तु माहेन्द्रस्तोत्रे साधनमात्रविधायकमित्युपपत्तौ विशिष्टविधिगौरवस्य माहेन्द्रस्तोत्र-तदपूर्वभेदकल्पनागौरवस्य चाऽभ्युपगन्तुमयुक्तत्वात्।

सूत्रभाष्यविरोधेन पृष्ठैः स्तुवत इति वाक्यस्योत्पत्तिविधित्वासम्भवेन
बृहद्रथन्तरवाक्ययोरेवोत्पत्तिविधित्वम्, पृष्ठैः स्तुवत
इत्यस्य छत्रिन्यायेनानुवाद इत्याशंका

ननु "पृष्ठैः स्तुवत" इत्येतदुत्पत्तिवाक्यमङ्गीकृत्य माहेन्द्रादीनां चतुर्णां स्तोत्राणां पृष्ठशब्दवाच्यत्वमुच्यत इति चेत्प्रकृतौ पृष्ठबहुत्वं नास्तीति साप्तमिकसूत्रभाष्यविरोधः प्रसज्येत। अतो बृहद्रथन्तरवाक्यद्वयमेवोत्पत्तिवाक्यं तदुत्पन्नं वचनवशाद्विकल्पितं स्तोत्रद्वयमेव पृष्ठशब्दवाच्यमित्यङ्गीकर्त्तव्यम्। "पृष्ठैः स्तुवत" इति मैत्रावरुणस्तोत्रादिसाधारण्येन प्रयोगश्छत्रिवदजहल्लक्षणयानुवादरूप इति चोपपादनीयमिति चेत्। मैवम्। यथा ख"ल्वाज्यैः स्तुवते, पञ्चदशान्याज्यानि, पञ्चदश होतुराज्यं, सप्तदशं मैत्रावरुणस्यैकविंशं ब्राह्मणाच्छंसिनः, पञ्चदशमच्छावाकस्ये-त्यादिप्रयोगाद्बहिः पवमानान्तरभावीनि चत्वार्यपि स्तोत्राण्याज्यशब्दवाच्यानि; एवं "पृष्ठैः स्तुवते" "सप्तदशानि पृष्ठानि" "एकविंशं होतुः पृष्ठ, त्रिणवं मैत्रावरुणस्य" "सप्तदशं ब्राह्मणाच्छंसिनः" पञ्चदशमच्छावाकस्येत्यादिप्रयोगान्माध्यंदिनपवमानानन्तरभावीनि चत्वार्यपि स्तोत्राणि पृष्ठशब्दवाच्यानि। "क्व चित्क्वचित्कण्वरथन्तरं पृष्ठं" "सदोविंशीयं ब्रह्मसामे"त्यादौ होतुः पृष्ठे विशिष्यपृष्ठशब्दप्रयोगस्तु धने द्रव्य-

शब्दप्रयोगवत्; अर्जुने पार्थशब्दप्रयोगवत्; आपो वा ऋत्वियमार्च्छंन्तासां वायुः पृष्ठे व्यवर्त्तते" त्यादिश्रुतौ पृष्ठशब्दस्य प्रवृत्तिनिमित्तत्वेन विवक्षितामपां पृष्ठादुत्पत्तिम् अव्यवहितां वामदेवो वामदेव्यादुत्पन्नत्वेन व्यवहितां रथन्तरादिषु प्रदर्श्याऽपि तद-नन्तरं "पिता वै वामदेव्यं पुत्राः पृष्ठानी" ति रथन्तरादिष्वेव पृष्ठशब्दप्रयोगवच्च निरूढिवशादितिकल्पनौचित्येन "पृष्ठैः स्तुवत" इति श्रुतेरनुवादत्वलाक्षणिकत्वकल्प-नस्य; बृहद्रथन्तरवाक्ययोर्विशिष्टविध्यादिकल्पनस्य चाऽयुक्तत्वात्। प्रकृतौ पृष्ठबहुत्वं नास्तीति साम्प्रमिकव्यवहारस्य विश्वजिति विधानयोग्यं चोदकाप्राप्तं पृष्ठबहुत्वं नास्ती-त्येवमर्थतोपपत्तेः, अत एव तत्र ज्यौतिष्टोमिकपृष्ठचतुष्टयस्य चोदकप्राप्तस्याऽनुवादे वैयर्थ्यमपि ग्रन्थकारैर्दर्शितम्; वैयर्थ्यमप्यविगणयन्तं प्रति "रथन्तरं पवमाने कुर्यात्" "आर्भवे बृहत्" "मध्यत इतराणि" "वैरूपं होतुः पृष्ठे वैराजं ब्रह्मसाम शाक्वरं मैत्रावरुणसाम रैवतमच्छावाकसामे" ति षाडहिकपृष्ठविधित्वज्ञापकलिङ्गविरोधोऽपि सूत्रकारेण दर्शितः।

### पृष्ठस्तोत्रभेदाभावे विकल्पवचनवैयर्थ्याशंका।

ननु पृष्ठस्तोत्रभेदाभावे विकल्पवचनवैयर्थ्यं स्यात्। बृहद्रथन्तरवाक्ययोरे-कस्मिन्पृष्ठे बृहद्रथन्तरमात्रविधायकतायां तयोरक्षराभिव्यक्तिरूपदृष्टप्रयोजननिर्वर्त्तने परस्परनिरपेक्षयोर्न्यायत एव विकल्पप्राप्तेः, विकल्पवचनं च बृहद्रथन्तरं वा पृष्ठं कार्यमित्येवरूपमस्ति इति ग्रन्थकारा व्यवहरन्ति। अतस्तत्सार्थकत्वाय बृहद्रथन्तर-वाक्यद्वयविधेयं पृष्ठद्वयमङ्गीकर्त्तव्यमिति तदपूर्वभेदोऽवश्यम्भावीति चेत्।

### विकल्पवचनस्य नियमार्थत्वेनार्थवत्तया पूर्वोक्तशंकानिरासः।

मैवम्। पृष्ठैः स्तुवत इति विहितेषु स्तोत्रेषु रथन्तर-बृहत्-वामदेव्य नौधस-काले-यानां पञ्चानां साम्नामुपदेशात्पृष्ठैः स्तुवत" इत्यत्र पञ्चस्तोत्राणि विहितानीति शङ्का-वारणार्थमेकस्मिन्नेव प्राथमिके पृष्ठस्तोत्रे बृहद्रथन्तरयोर्विकल्प इति वचनस्याऽपेक्षित-त्वात्। "द्वादश स्तोत्राणि द्वादश शस्त्राणि तस्य नवतिशतं स्तोत्रीया" इत्यादि-लिङ्गादधिकस्तोत्रसद्भावशङ्कानिराकरणसम्भवेऽप्यधिकसामाम्नानादवश्यं यत्र क्वचि-त्कल्पनीयस्य विकल्पस्य बृहद्रथन्तरयोरेव नियमार्थतया वचनस्याऽर्थवत्त्वोपपत्तेः। अन्यथा बृहद्रथन्तरवाक्यविधेयपृष्ठद्वयाभ्युपगमेऽपि उक्तलिङ्गादेव तत्समुच्चयनिराकरण-सम्भवेन विकल्पवचनवैयर्थ्यापत्तेरपरिहार्यत्वात्। तस्मादप्रमाणको बृहद्रथन्तरसाध्य-पृष्ठस्तोत्रापूर्वभेदः।

### स्तोभापूर्वभेदेन धर्माणां व्यवस्थेइति शङ्का-निरासौ

ननु तथाऽपि बृहद्रथन्तरगतस्तोभापूर्वभेदोऽस्त्येव। स्तोभा ऋगक्षराभिव्यक्ति-रूपदृष्टफलाभावाददृष्टार्थाः। ततश्च स्तोभापूर्वभेदादेव धर्माणां व्यवस्था सिध्येदिति चेन्मैवम्। धर्माणां बृहद्रथन्तरशब्दवाच्यऋगक्षराभिव्यञ्जकगीत्यर्थत्वेन तेषामुक्त-रूपगीत्यङ्गस्तोभानां च "गुणानां च परार्थत्वादसबन्धः समत्वात्स्यात्" ३।१।१८ इति न्यायेनाङ्गाङ्गिभावाभावात्। तेषां साक्षाद्बृहद्रथन्तरान्वयसम्भवेनाऽरुणैकहायनी-

न्यायलभ्यपार्ष्णिकस्तोभान्वयकल्पनस्याऽप्यनपेक्षणात्। न च स्तोभानामपूर्वार्थकल्पनमपि युक्तम्; तेषां गीतिकालपरिच्छेदरूपदृष्टप्रयोजनसम्भवात्।

अपूर्वभेदेन धर्मव्यवस्थाया असम्भवेऽपि चित्रत्व-शूरत्वादिप्रकारभेदेन व्यवस्थेति शङ्का।

ननु माभूदपूर्वभेदाद्धर्माणां व्यवस्था; स्तुतिप्रकारभेदात्तु भविष्यति। चित्रत्वादिप्रकारिका हि बृहत्साध्या स्तुतिः, रथन्तरसाध्या तु शूरत्वादिप्रकारिका। "सत्त्वं नश्चित्रवज्रहस्तधृष्णुया" "अभित्वा शूर नोनुम" इत्याद्यृगनुरोधादिति चेत्।

तन्निरासः विशिष्टानुवाददोषापत्तेः।

मैवम्। स्तुतिप्रकारभेदसत्त्वेऽपि धर्मविधिषु बृहद्रथन्तरपदयोरपूर्वसाधनत्वलक्षणाभ्युपगमे बृहत्साध्यं पृष्ठस्तोत्रापूर्वं प्रति साधनत्वस्य रथन्तरे, रथन्तरसाध्यन्तदेवप्रति साधनत्वस्य बृहति चाऽविशिष्टत्वेन धर्मसांकर्यस्यानिवार्यत्वात्। तत्तद्धर्मविधौ चित्रत्व-शूरत्वादिप्रकारकस्तुतिजन्यापूर्वसाधनत्वविवक्षायां विशिष्टानुवाददोषापत्तेः। चित्रत्व-शूरत्वादिप्रकारकस्तुत्योः "पुनानः सोम धारये"त्यादिऋगन्तरारूढकण्वरथन्तरादिष्वभावेन तेषु बृहद्रथन्तरधर्मातिदेशाभावरूपदोषप्रसङ्गाच्च। न चेष्टापत्तिः। "अप्राकृते तद्विकारात् विरोधाद्व्यवतिष्ठेरन्० ९।२।१६।४८। इति नावमिकाधिकरणे भाष्यकृता कण्वरथन्तरे समुच्चितबृहद्रथन्तरधर्मप्राप्तेः वार्त्तिककृता च विकल्पिततद्धर्मप्राप्तेर्व्यवस्थापितत्वात्।

भाष्यमते समुच्चय इति सिद्धान्तः, वार्त्तिकमते विकल्पः, तत्र वार्त्तिकमतावष्टम्भेन शङ्का-परिहारौ।

ननु तत्र नावमिके कण्वरथन्तराधिकरणे भाष्यकारसिद्धान्तितां समुच्चितधर्मप्राप्तिमुच्चैर्गेयमिति बृहद्धर्मस्य, नोच्चैर्गेयमिति रन्तरधर्मस्य च विरोधात्समुच्चयो न सम्भवतीति हि प्रतिक्षिप्य वार्त्तिककारो विकल्पितधर्मप्राप्तिं सिद्धान्तयामास, तथैव प्रकृतावपि बृहद्रथन्तरधर्माणां व्यवस्था भविष्यति, प्रकृतावपि उच्चैस्त्व-तदभावयोर्मेलनासम्भवस्य तुल्यत्वादिति चेत्। न। अपूर्वीयत्वलक्षणया धर्माणां साधारण्ये सत्यतिरात्रषोडशिग्रह-तदभावयोरिवाधाने सामगानतदभावयोरिव च बृहति रथन्तरे चोच्चैस्त्वतदभावयोर्वैकल्पिकत्वाङ्गीकारेण समाधातुमुचितत्वात्।

कण्वरथन्तराधिकरणवार्त्तिकस्य स्वेन व्याख्यातेऽर्थे योजनम्।

कण्वरथन्तराधिकरणे तु वार्न्तिककृता विरोधो मूलयुक्तित्वेन नोक्तः किन्तु तद्विकारादिति हेतुरेव। तस्य चायमर्थः-ज्योतिष्टोमविकारो हि वैश्यस्तोमः। तत्र प्रकृतिवदेव बृहद्रथन्तरसामद्वयस्य विकल्पेन प्राप्तौ तदुभयकार्ये विधीयमानतया तदुभयस्थानापन्नं कण्वरथन्तरं एकस्मिन्नेव प्रयोगे तदुभयस्थानापन्नं न भवति। तस्य प्रयोगभेदेनैव प्राप्तेः, किन्त्वेकस्मिन्प्रयोगे बृहत्स्थानापन्नम्, प्रयोगान्तरे रथन्तरस्थाना-

पन्नं च भवति; अतः प्रयोगभेदेनैव तस्य तदुभयधर्मग्राहित्वम्—इति। विरोधस्त्व-भ्युच्चयत्वेन सूत्र-वार्त्तिकयोरुक्तः।

अपूर्व-नियमविध्युदाहरणयोरपूर्वसाधनत्वलक्षणां विहाय शक्यार्थस्वीकार-
मुखेन व्यवसाधारण्याभ्युपगम निरासस्य उपसंहारः।

तस्माद् बृहद्रथन्तरपृष्ठस्तोत्रापूर्वभेदाभ्युपगमस्य गौरवपराहतत्वात्स्तोभापूर्वाणामपूर्वीयत्वलक्षणायामप्रवेशात्स्तुतिप्रकारभेदस्योच्चैर्गेयत्वादिधर्मविरोधस्य चाऽपूर्वीयत्वलक्षणापतितमीलनसमुद्रध्यानादिसङ्करनिवारणाक्षमत्वाच्चाऽपूर्वीयत्वलक्षणां परित्यज्यैव धर्मव्यवस्थोपपादनीया। तद्वदिहाऽप्यपूर्वीयत्वलक्षणा परित्यक्तव्येति भावः।

इति एकोनत्रिंशश्लोकस्य व्याख्या

त्रिंशश्लोकस्यावतारिका।

परिसंख्योदाहरणे त्रैदोष्याभावसमर्थनम्,

पूर्ववत् कर्तृविशेषनियमप्रतिपादनं वार्त्तिकावष्टम्भेन।

एवमपूर्वनियमविध्युदाहरणयोरपूर्वीयत्वलक्षणया यवसाधारण्याभ्युपगमः प्रतिक्षिप्तः, इदानीं परिसंख्योदाहरणे त्रैदोष्याभावसमर्थनमाक्षिपति—

मन्त्रेणाऽश्वस्य रज्ज्वोर्ग्रहणविधिफलं मन्त्रबाधोऽन्यरज्जौ
त्रैदोष्यं प्राप्तबाधे प्रसरणमयते न त्विहेत्यप्ययुक्तम्।
आग्नेयीन्यायतस्तामपि पुनरुपयत्केन मन्त्रो निवार्यः
त्रैदोष्यं चाऽऽज्यकार्यान्तरमुखपरिसंख्यासु केनोपपाद्यम्॥३०॥

स्वार्थत्यागः परार्थग्रहणं प्राप्तबाध इति परिसंख्यासु प्रसिद्धं दोषत्रयमप्राप्तपरिसंख्यासु न भवति, किन्तु प्राप्तपरिसंख्यास्विति मीमांसकप्रवादः। "यथेमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त" इति तावदप्राप्तपरिसंख्या; अनया प्रत्यक्षया श्रुत्या मन्त्रस्याऽश्वरशनायां झटिति विनियोगे कृते सति तावता मन्त्राम्नानस्य चरितार्थतया अश्व-गर्दभरशनासाधारणविनियोजकश्रुतिकल्पकस्य लिङ्गस्याप्रवृत्त्या फलतो मन्त्रस्य गर्दभरशनातो व्यावृत्तिलाभात्। ततश्चाऽनेन विधिना मन्त्रस्याश्वरशनायां विनियोगरूपः स्वार्थो न त्यक्तव्यः, तद्विधानात्प्रागप्रवृत्तेः। तस्य गर्दभरशनातो व्यावृत्तिरूपः परार्थश्च न ग्राह्यः, अर्थाल्लभ्ये तत्र शब्दव्यापारानपेक्षणात्। प्राप्तं च किं चिन्न बाधितव्यं प्रत्यक्षश्रुतेः प्राग्गर्दभरशनासाधारणविनियोजकलिङ्गाप्रवृत्तेः। एतादृशेषूदाहरणेषु निर्दोषा परिसंख्या प्रवर्त्तते। प्रपञ्चितं चैतद्वार्त्तिककारैः—

अप्राप्तपरिसंख्याया अर्थात् परिसंख्याफलमिति निरूपणपरस्य
ग्रहैकत्वाधिकरणगतवार्त्तिकस्याऽवतारणम्।

"सामान्यप्रापणाशङ्का वाक्याद्यत्राऽऽनुमानिकात्।
श्रुत्या प्राप्तिर्विशेषे च परिसंख्या तदाश्रया॥

निर्दोषत्वं हि तत्राऽस्या विधाने सति लभ्यते।
रूपप्रकरणद्वारा श्रुतिर्यावत्तु कल्प्यते॥
तावत्प्रत्यक्षया श्रुत्या विधिः शीघ्रं समाप्यते।
अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः॥
परिसंख्या फलेनोक्ता न विशेषपुनःश्रुतेः।
अश्वश्रुत्यैव शीघ्रत्वान्मन्त्रे प्राग्विहिते सति॥
निराकाङ्क्षीकृताम्नाये तथा प्रकरणिन्यपि।
लिङ्गप्रकरणद्वारा श्रुतिर्नैवानुमीयते॥
तस्यामप्रापितायाञ्च मन्त्रप्राप्तिर्न गर्दभे।
सोऽयमाभाणको लोके यदश्वेन हृतं पुरा॥
तत्पश्चात् गर्दभः प्राप्तुं केनोपायेन शक्नुयात्।
प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे॥
न गर्दभाभिधानीतः फलमन्यन्निवर्त्तनात्।
यद्यश्वरशनाप्राप्तिं केवलामानुमानिकी॥
प्रत्यक्षश्रुतिवत्कुर्यात्ततः सा स्यादनर्थिका।
लिङ्गानुमितया श्रुत्या प्राप्नुयाद्रशनाद्वये॥
स मा प्रापत्तयेत्येवं प्रत्यक्षा त्वरते श्रुतिः" । इति ।

प्राप्तपरिसंख्यायामेव त्रैदोष्यनियमस्यास्मिन्नेवोदाहरणे व्यतिरेकमुखेन वार्त्तिकस्याऽवतारणम्।

प्राप्तपरिसंख्यायां त्रिदोषत्वनियमश्च वार्त्तिककारैरत्रैवोदाहरणे स्थित्वा व्यति रेकमुखेन प्रदर्शितः—

यद्यस्य विनियुक्तस्य प्रत्यक्षा स्यात्पुनः श्रुतिः।
ततश्च परिसंख्यानात्प्रसज्येत त्रिदोषता॥
यदि तु प्रतिबद्धत्वात्सामान्यविनियोगकृत्।
नैवाऽस्ति श्रुतिरत्रेति न प्राप्नोति त्रिदोषता॥ इति॥

प्राप्तपरिसंख्याया उदाहरणं वृत्तिकारमतेन।

षोडश्युत्तर इत्येतत् प्राप्तपरिसंख्योदाहरणम्। अत्र हि स्वार्थबोधनं नापेक्षितम्, अङ्गिरसां द्विरात्रस्योत्तरेऽहनि षोडशिग्रहनियमरूपस्य तदर्थं "स्योत्तरेऽहन् द्विरात्रस्य गृह्यत" इति द्विरात्रमात्रस्योत्तरेऽहनि तन्नियमं बोधयता प्रत्यक्षशास्त्रेण प्राप्तत्वात्, तस्य द्विरात्रान्तरेभ्यो निवृत्तेर्बोधनं त्वपेक्षितम्। सामान्यशास्त्रेण द्विरात्रमात्रे प्राप्तस्य तस्य निवर्त्तकशास्त्रं विना विशिष्य क चिद् द्विरात्रे संबन्धबोधनमात्रेण द्विरात्रान्तरेभ्यो निवृत्त्यलाभात्। अतः षोडश्युत्तर इत्यनेनाङ्गिरसां द्विरात्रे षोडशिग्रहनियमरूपः स्वार्थः परित्यक्तव्यः, द्विरात्रान्तरेभ्यस्तन्निवृत्तिरूपः परार्थश्च परिगृहीतव्यः। द्विरात्रान्तरेषु सामान्यशास्त्रेण प्राप्तश्च षोडशिग्रहनियमो बाधितव्य इति दोषत्रयमनिवार्यम्। अत एव परिसंख्यासूत्रे रशनादानमन्त्रपरिसंख्यामङ्गीकृतवताऽपि भाष्यकारेण षोडश्युत्तर इत्यत्र वृत्तिकाराभिमता परिसंख्या दोषत्रयापत्त्या दशमे प्रतिक्षिप्ता।

प्राप्तपरिसंख्यायाः त्रैदोष्यम्, अप्राप्तपरिसंख्यायाः तदभाव इति व्यवस्था नोपपद्यत इत्याक्षेपप्रदर्शनमुखेनाप्राप्तपरिसंख्योदाहरणे त्रैदोष्याभावव्यवस्थाऽनुपपन्नेत्याक्षेपवर्णनम्।

इत्थं सिद्धान्तसंप्रतिपन्ना प्राप्ताप्राप्तपरिसंख्ययोस्त्रैदोष्यतदभावव्यवस्थेहाऽऽक्षिप्यते। अप्राप्तपरिसंख्योदाहरणे त्रैदोष्यं न प्रसज्यत इति तावदनुपपन्नम्, अश्वरशनायां विनियोगेन मन्त्रस्य निराकाङ्क्षत्वेऽपि गर्दभरशनाया मन्त्राकाङ्क्षया तत्राऽपि मंत्रसंबंधस्य निवर्त्तकं शास्त्रं विना वारयितुमसक्यत्वात्। दृष्टं हि "अग्न आयाहि वीतय" इत्यादीनां ज्योतिष्टोमप्रकरणाम्नातानामाग्नेयीनामृचां स्तोत्रादिषु विनियोगेन निराकाङ्क्षत्वेऽपि "आग्नेय्याग्नीध्रमुपतिष्ठत" इति विहितत्याग्नीध्रोपस्थानस्याग्नेय्याकाङ्क्षाया तत्संबन्धः। न च गर्दभरशनाग्रहणानुष्ठानं ध्यानोपद्रष्टृवचनादिनाऽपि सम्भवन्न मन्त्राकाङ्क्षमिति वाच्यम्। आग्नीध्रोपस्थानमप्यप्रकरणाम्नातयत्किञ्चिदाग्नेयीसंबन्धेन सम्भवन्न प्रकृताग्नेय्याकाङ्क्षमिति वक्तुं शक्यवात्।

अथोच्ये"ताग्नेय्याग्नीध्रमि"त्यत्राग्नेयीशब्दस्याऽप्रकृताग्नेयीपरत्वे तस्याः क्रत्वपूर्वसंबन्धे तद्द्वारभूताग्नीध्रोपस्थानसंबन्धे च विधिव्यापारः कल्पनीय इति गौरवम्। प्रकृताग्नेयीपरत्वे तु तस्याः क्रत्वपूर्वसंबन्धस्य क्लृप्तत्वादाग्नीध्रोपस्थानसंबन्धभावे विधिव्यापारः कल्पनीय इति लाघवमस्ति। अतो लाघवानुसारादाग्नेयीशब्दो निराकाङ्क्षामपि [1]प्रकृतामेवाग्नेयीं गृह्णातीति कल्प्यत इति।

एवं तर्हि गर्दभरशनाग्रहणे तत्तत्पुरुषबुध्याक्षिप्तध्यानाद्यनियतानेकोपायग्रहणे गौरवाल्लाघवानुसारेण निराकाङ्क्षमपि मन्त्ररूपमेकमेवोपायं लिङ्गसमर्पितं गर्दभरशनापि गृह्णातीति तुल्यम्। अत एव वैकृतः सौर्यादिविधिः प्रकृतिद्रव्य-तदवघातादिजन्योपकाराकाङ्क्षः सन्ननियतयत्किञ्चित्प्रकृतिद्रव्य-यत्किञ्चित्तुषविमोकादिसाधनजन्यौपकारग्रहणेन निराकाङ्क्षी कर्त्तुं शक्योऽपि नियमे सम्भवत्यनियमगौरवमयुक्तमिति दार्शपौर्णमासिकामितिकर्त्तव्यताकलापं दर्शपूर्णमासापूर्वसंबन्धेन निराकाङ्क्षमपि स्वप्रकरणानाम्नानेनेक्लृप्तस्वापूर्वसंबन्धमपि गृह्णातीत्यङ्गीक्रियते। तस्मादश्वाभिधान्यादानवाक्यं स्वार्थपरत्वे तस्याऽन्यतः प्राप्तिसम्भवम्, गर्दभरशनातो मन्त्रनिवृत्तिमेव स्वप्रवृत्तिफलं चाऽऽलोच्य, स्वार्थविधानपरत्वे तत्फलं लम्भयितुं न शक्यत एवेत्येतेदप्यालोच्य विलम्बितप्रवृत्तिकेनाऽपि लिङ्गेन कर्त्तव्यं सामान्यविनियोगं परीक्ष्य, ततो विधिरूपमर्थं परित्यज्य प्राप्तनिषेधरूपमर्थं गृह्णातीत्येव वक्तव्यम्। अतः कथमिहापि त्रैदोष्यं नापद्यते।

यद्युच्येत-अन्यतः सम्भवत्प्राप्तिकस्याऽश्वरशनायां मन्त्रविनियोगस्य विधिरनर्थकः सन् गर्दभरशनातस्तस्य निवृत्तिं ज्ञापयति-इति। एवं तर्हि षोडश्युत्तर इत्यत्राऽपि तथैव द्विरात्रान्तरेभ्यः षोडशिग्रहनियमनिवृत्तिज्ञापनं भविष्यतीति तत्राऽपि त्रैदोष्यं नापद्यत इति स्यात्। तस्माद्वाक्यस्य स्वार्थपरतायामानर्थक्ये सति तन्मात्रेणाऽभिम-

---

१. प्राकृतामेति मु० पु० पा०।

तार्थान्तरालाभात्तत्र वाक्यस्यैव स्वार्थं विहायाऽभिमतेऽर्थान्तरे प्रवृत्तिरेष्टव्येति नियममाहत्यैव षोडश्युत्तर इत्यत्र त्रैदोष्यमापादनीयम्, तथा सति तथैवात्राऽपि तदापत्तिनिवारयितुं न शक्यते। नचैवं सत्यन्यलभ्यप्राप्तिनियमपरिसंख्याद्वारा तत्तदर्थप्राप्तिनियमपरिसंख्यानां लाभं प्रागदर्शितान्युदाहरणानि प्रत्युद्धृतानि स्युः। तदुदाहरणेष्वप्यन्यलभ्यं स्वार्थं विहाय'अभिमतार्थान्तरेषु शब्दवृत्तिप्रसङ्गादिति वाच्यम्। येषु वाक्येष्वन्यलभ्यस्याऽपि स्वार्थस्य प्रतिपादन एवाभिमतार्थप्राप्त्यादिकं लभ्यते, न त्वन्यथा तथाभूतवाक्यानामेव तदुदाहरणत्वात्। तथाभूतानामेव सांग्रहण्यादिवाक्यानां प्रागुदाहृतत्वात्। तस्मादप्राप्तपरिसंख्योदाहरणे त्रैदोष्यं नापद्यत इति तावदनुपपन्नम्। तदुदाहरणे अप्राप्तपरिसंख्यात्वस्यैवाऽनुचितत्वात्।

प्राप्तपरिसंख्यायां त्रैदोष्यं नियतमिति व्यवस्थाऽनुपपन्नेति कथनम्।

तथा प्राप्तपरिसंख्यायां त्रैदोष्यं नियतमित्येतदप्यनुपपन्नम्। "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तद्यदुपभृति प्रयाजानुयाजेभ्यस्तदि"त्यविशेषप्रवृत्तेन प्रत्यक्षशास्त्रेण सर्वेषां प्रयाजानां जौहवौपभृताज्यकार्यत्वप्राप्तावतिहायेड इत्याद्यौपभृताज्यसमानयनकालविध्यधीनायां जौहवौपभृताज्याभ्यामुपरितनप्रयाजद्वयप्राचीनप्रयाजत्रयपरिसंख्यायां प्रायणीयातिथ्ययोश्चोदकादविशेषेणैष्टिकाङ्गकलापप्राप्तौशंय्वन्ता प्रायणीया सन्तिष्ठते, "इडान्तातिथ्या सन्तिष्ठते" इति शंय्विडान्तोपरमविध्यधीनायां शंय्विडोपरितनाङ्गपरिसंख्यायाम् अन्यस्यामप्येवंविधायाम्, अन्यविध्यर्थलभ्यप्राप्तपरिसंख्यायां त्रैदोष्यासंस्पर्शात्। एवं सर्वविधीनां लक्षणान्युदाहरणानि वाऽसमञ्जसानीव प्रतिभान्ति।

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमद्विश्वजिद्याजिश्रीरंगराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ विधिरसायने सुखोपयोजिन्यामपूर्वनियम-परिसंख्याविध्युदाहरणाक्षेपपूर्वपक्षः।

इति त्रिंशश्लोकस्य व्याख्या।

---

अथैकत्रिंशश्लोकस्यावतारिका

एवमपूर्वविध्यादिलक्षणोदाहरणगणमाक्षिप्य प्रदर्शितेष्वपि केचिदाक्षेपाः शास्त्रमर्यादामात्रमाश्रित्य प्रदर्शिताः; न तु न्यायमाश्रित्यन्यायान्वेषणे तु तेऽपि शिथिला इत्याक्षेपाक्षेपव्याजेन तत्तदाक्षेपोपजीव्यशास्त्रमर्यादाक्षेपं कृत्स्नस्याऽपि शास्त्रस्य परस्परविरुद्धार्थत्वशङ्कावहं स्थालीपुलाकन्यायेन प्रदर्शयिष्यामीति प्रतिजानीते—

अत्राप्याक्षेपवर्गे कतिचन शिथिलाः शास्त्रमर्यादया ते
दोषाः स्युर्लक्षणोदाहरणगण इति प्रत्यपाद्यन्तपूर्वम्।
तत्र स्थालीपुलाकप्रथितनयदिशा केषु चिद्दर्शयामः
शैथिल्यं तद्विरुद्धं सकलमिव भवेद्येन दर्शयेत तन्त्रम्॥३१॥

अपूर्व-नियम-परिसंख्योदाहरणाक्षेपसमाधानम्।

तत्र तावदपूर्वविधिलक्षणस्य वैकृताग्निविध्यव्याप्तिरूपं

प्रथमाक्षेपमाक्षिपति—

पश्वाद्यर्थो हि नैव प्रकृतिषु विकृतिष्वध्वरेष्वग्निरङ्गम्
का तत्रामूलभग्नात्कथय विकृतिषु प्राप्तिवार्तातिदेशात्।
अग्निष्टोमादिवाक्यानि तु फलजननापाश्रयार्थानि लिङ्गात्
तत्प्राप्तिर्न प्रकृत्यां न च विकृतिषु सा तद्विधौ तत्र वृत्तेः ॥३२॥

अपूर्वविधिलक्षणाक्षेपावसरेऽग्निविधावुद्भावितमव्याप्तिदूषणनिरासः।

प्रकृतावङ्गस्याऽग्नेर्विकृतिष्वतिदेशतः प्राप्तिसम्भवात्तास्वग्निविधयो न तत्प्राप्त्यर्थाः। किन्तु तदाश्रितश्येनाकृत्यादिफलार्थगुणप्राप्त्यर्था इति दशमाध्याये "ऽग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः, ग्रहणे समान- विधानं स्यात्" १०।८।११। २३।२७ इति पूर्वोत्तरपक्षसूत्राभ्यां व्यवस्थापितमर्थमुपजीव्य, तेष्वपूर्वविधिलक्षणस्याव्याप्तिरिति यत्तावदुक्तम् तदयुक्तम्, फलार्थगुणप्राप्त्यर्थानां वैकृताग्निविधीनामेव शशशृङ्गायमाणत्वात्। तथा हि-"पशुकामश्चिन्वीते" त्यादिवाक्यैरग्निः फलार्थ इत्यर्थवादाधिकरणे अभागिप्रतिषेधसूत्रे वार्त्तिकन्यायसुधयोरुक्तम्, तथा च फलार्थस्याऽग्नेः प्रकृतिरूपेषु, विकृतिरूपेषु च क्रतुष्वङ्गत्वमेव नास्तीति, अतिदेशमूलाङ्गत्वाभावेनातिदेशानुन्मेषादतिदेशतो[1] विकृतिष्वग्निप्राप्तिसम्भव[2] एवाऽसिद्धः। तस्मादतिदेशतः सम्भवत्प्राप्तिकाग्निविधयः फलार्थगुणप्राप्त्यर्था इति दशमाध्याये व्यवस्थापितमयुक्तम्।

अग्नेः सदृष्टान्तं क्रत्वर्थत्वप्रतिपादनम्

ननु "य एवं विद्वानग्निं चिनुत"इतिवाक्योत्पन्नस्याग्नेः पशुकामादिवाक्यैः फलार्थत्वेऽप्यग्निष्टोमादिवाक्यैः क्रत्वर्थत्वमपि स्यात्। "ऐन्द्रवायवं गृह्णाति "मैत्रावरुणं गह्णाती"त्यादिवाक्योत्पन्नानामैन्द्रवायवादिग्रहाणामैन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्नि"तिवाक्येन फलार्थत्वेऽपि "वाग्वा एषा यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते" वाचमेवानुप्रयन्तीतिवाक्येन क्रत्वर्थत्वमिवेति चेत्। न।

तन्निरासः

सिद्धरूपस्याऽनारभ्याधीतस्याग्नेः स्वतः फलार्थत्वासम्भवेनाऽग्निष्टोमादिवाक्यानां तदपेक्षिताश्रयक्रियासमर्पकतयाऽनपेक्षितक्रत्वङ्गतापरत्वायोगात्। ऐन्द्रवायवादिग्रहाणां तु ज्योतिष्टोमादिप्रकरणादेवाऽऽश्रयो लभ्यत इति युक्तं वाग्वा एषेत्यस्य क्रत्वङ्गतापरत्वम्।

---

१. मु० पु० अतिदेशमुन्मेषादिति पा०। २. सिद्ध इति मु० पु० पा०।

प्रतिप्रसवविध्याशङ्कानिरासौ

स्यादेतदग्नेः प्रकरणाभावेऽपि दीक्षणीयादिसोमप्रयोगसङ्कीर्णसावित्रहोमोखासम्भरणदीक्षणीयावैशेषिकगुणरुक्मप्रतिमोचनादिकाङ्कलापरूपाल्लिङ्गादाश्रयो लभ्यत इति अत्राऽग्निष्टोमादिवाक्यानामपि क्रत्वङ्गतापरत्वं युक्तमिति चेत् न युक्तमिति ब्रूमः। कथं ? लिङ्गात्प्राप्नुवन्ननारभ्याधीताग्निः साप्तदश्यन्यायेन विकृतिष्वेव प्राप्नुयान्न प्रकृतौ, उत्तरवेद्यवरोधात्। अतोऽत्राग्निष्टोमोक्थ्यातिरात्रवाक्यानि तावदग्नेः प्रकृत्याश्रयत्वप्राप्त्यर्थान्येव भवन्ति, अग्निष्टोमादिशब्दानां प्रकृतिविकृतिसाधारणत्वेऽपि विधेरप्राप्तपक्षपातित्वेनाऽत्र प्रकृतिपरत्वौचित्यात्। एवञ्च शीघ्रप्रवृत्तवचनसमर्पितप्रकृतिरूपाश्रयेण तदाकाङ्क्षाशान्तेर्दौक्षणीयासंबन्धलिङ्गाद्विकृत्याश्रयत्वकल्पना न प्रवर्त्तत इति द्विरात्रादिवाक्यान्यपि तत्तदाश्रयत्वप्राप्त्यर्थान्येव पर्यवस्यन्ति। आश्रयप्रापकविधिप्रायपाठादिति कुतोऽत्र क्रत्वर्थतापरत्वकल्पनाशङ्कावकाश इति भावः।

यद्यप्यग्निष्टोमादिवाक्यानां फलार्थाग्न्याश्रयसमर्पणार्थत्वे सति द्विरात्रादिवाक्यानां तदीयक्रत्वर्थतापरत्वेऽपि प्रकृतावग्नेरङ्गत्वाभावेन तेषामतिदेशतः सम्भवत्प्राप्तिकाग्निविधित्वाभावादन्याप्त्याक्षेपो भवेदेव, तथाऽपि प्रायपाठानुरोधेनौचित्यमनुसृत्य तेषामाश्रयविधिपरत्वमुक्तमिति द्रष्टव्यम् ॥३२॥

इति द्वात्रिंशश्लोकस्य व्याख्या।

---

त्रयस्त्रिंशश्लोकस्याऽवतारिका।

स्यादेतल्लिङ्गादेवाऽग्नेः प्रकृत्याश्रयत्वमपि प्राप्नोति,

"पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकमि" तिन्यायेन फलार्थतया बलवतस्तस्योत्तरवेदिबाधकत्वात्, पुरुषार्थप्रयुक्ता हि सर्वस्य प्रवृत्तिरतः काम्योऽग्निः फलस्य प्रत्यासन्नः शीघ्रम् प्रयुज्यते, उत्तरवेदिस्तु क्रत्वर्थेऽविलम्बेन। अतश्चोत्कटप्रवृत्तिविषयः स तस्या बाधकः।

सामान्य-विशेषन्यायेन काम्यबलवत्त्वस्य शङ्कासमाधानाभ्यां प्रतिपादनम्।

न च चमस-गोदोहनवदेकप्रकरणगतयोरेव नित्यकाम्ययोः काम्यबलवत्त्वन्यायः प्रकरणाम्नातानारभ्याधीतयोस्तु तयोर्नित्यमपि प्रकरणम्नातमेव बलवत्, अनारभ्याधीतस्य विकृतिष्वपि सावकाशत्वेन दुर्बलत्वादिति वाच्यम्। सामान्यत इष्टयधिकृतमात्रविषये चमसः विशिष्य पशुकामविषये गोदोहनमिति सामान्यविशेषन्यायेन पशुकामातिरिक्तिविषये चमसः सावकाशः, गोदोहनं निरवकाशमिति सावकाशनिरवकाशन्यायेन च बलवतो गोदोहनस्यासङ्कीर्णकाम्यबलवत्त्वन्यायानुदाहरणतया सामान्यविशेषभावादिन्यायाविषयस्याऽग्न्यादेरेव सकलमीमांसकप्रसिद्धकाम्यबलवत्त्वन्यायोदाहरणतौचित्यात्।

अपि च काम्येनाऽग्निनोत्तरवेद्यावाधेऽपि नाऽत्यन्तबाधः, उत्तरवेद्यां "ह्यग्निः श्रीयत" इतिश्रुतिबलादुत्तरवेद्यैष्टिकस्थण्डिलयोरग्निनिधाने "वेद्यां हवींष्यासादयति" "बर्हिषि हवींष्यासादयती" तिश्रुतयोर्वेदि-बर्हिषोर्हविरासादन इव समुच्चयावगमात्। तस्मात्फलार्थस्याऽग्नेराश्रयाकाङ्क्षायां लिङ्गादेव विकृतिवत्प्रकृतावपि प्राप्तिसम्भवादग्निष्टोमादिवाक्यानि सर्वाण्यपि क्रत्वङ्गत्वपराण्येव वाच्यानि इति। तेषु वैकृताग्निविधीनामतिदेशतः सम्भवत्प्राप्तिकविषयाणां श्येनाकृत्यादिफलार्थगुणप्रापणार्थत्वस्याऽवश्यवाच्यतया युक्तैव प्रागुद्भाविताव्याप्तिः।

अग्निष्टोमादिवाक्यानां परिसंख्यार्थत्वमिति शंका।

ननु तथाप्येतान्यग्निष्टोमादिवाक्यानि परिसंख्यार्थानीति। युक्तमनारभ्याधीतेषु काम्यगुणेषु पर्णतादिष्विव "प्रकृतौ वा द्विरुक्तत्वात्" इति न्यायानवतारेणाऽग्नेः समुच्चित्य प्रकृति-विकृतिरूपेषु सर्वेषु सोमेषु प्राप्तिसत्त्वादिति चेत्। मैवम्।

पूर्वोक्तशंकानिरासेन काम्यवाक्येन क्रत्वर्थापवादापवादेन
प्रतिप्रसवार्थान्यग्निष्टोमवाक्यानीति व्यवस्थापनम्।

तेषां प्राप्तापोदितक्रत्वङ्गत्वप्रतिप्रसवार्थत्वस्यैव लाघवेन युक्तत्वात्। तथा हि "य एवं विद्वानग्निं चिनुत" इत्यनारभ्याधीतवाक्येनाग्नेश्चयनसंस्कार्यत्वं श्रुतम्। तच्च चयनप्रकरणोक्तचयननिर्वर्त्यस्थण्डिलोपरिदेशस्थापनद्वारकं पर्यवस्यति; स्थण्डिलनिर्वर्त्तकेन चयनेन साक्षादग्नेः संस्कार्यत्वायोगात्। तेन संस्कार्यत्वं चाऽऽयतनविशेषनिहितेषु सम्भारेषु निधानरूपेणाऽऽधानेन संस्कार्यत्ववदग्नेराहवनीयात्मनोत्पाद्यत्वरूपं न भवति, [1]आधान-पवमानेष्टिभ्यामेव तदुत्पत्तेः। अन्यथा चयननिर्वर्त्तिते स्थण्डिलेऽग्निस्थापनात्प्राचीनेषु अग्निहोत्र-दर्शपूर्णमासादिष्वग्निमतिक्रतौ स्थण्डिलनिर्वृत्तेः प्राचीनेषु दीक्षणीयादिषु चाऽऽहवनीयाभावप्रसङ्गात्। एवञ्चाऽऽहवनीयस्य सतश्चयनसंस्कारस्य कैमर्थ्याकाङ्क्षायामाहवनीयः सामान्येन क्रत्वर्थतया यदाहवनीये जुहोतीतिवाक्येन सिद्धो विशिष्य यस्य क्रत्वपूर्वस्योपयोगी स्थण्डिले निधीयते तादर्थ्यमेव तद्द्वारा पर्यवस्यति।

किञ्च सोमप्रयोगसंकीर्णप्रयोगस्य चयनस्य सोमप्रयोगाद्बहिरनुष्ठातुमशक्यतया तन्मध्यत एवाऽनुष्ठातव्यत्वे पाशुकधर्मजातस्याग्नीषोमीयपश्वङ्गत्वमिवाऽनुष्ठानसादेश्यरूपेण स्थानप्रमाणेनाऽपि क्रत्वर्थत्वं प्राप्नोति। एवं प्राप्नुवतश्च क्रत्वर्थस्य पशुकामादिवाक्यैश्चयनसंस्कृतस्याऽग्नेः फलसंयोजनं कुर्वद्भिरपवादः प्राप्नोति, वाचनिकफलेन फलाकाङ्क्षाशान्त्या क्रतूपकारस्य फलस्याऽकल्पनीयत्वात्। एवं क्रत्वर्थत्वापवादे प्राप्ते तत्प्रतिप्रसवार्थान्यग्निष्टोमादिवाक्यानीति युक्तम्, प्रतिप्रसवेऽपि विधिलाघवस्य प्रागुपपादितत्वात्। तस्माद्यथा "य एवं विद्वान् षोडशिनं गृह्णाती" ति ज्योतिष्टोमप्रकरणाम्नातवःक्योत्पन्नस्य "षोडशिना वीर्यकामः स्तुवीते" ति फलविनियोगवचना-

[1] अधानेति सप्तम्यन्तः मु० पु० पा०।

पादितप्रकरणलभ्यज्योतिष्टोमाङ्गभावस्य षोडशियागाभ्यासस्य" अप्यग्नीष्टोमे राजन्यस्य गृह्णीयात्; अप्युक्थ्ये ग्राह्योऽतिरात्रेण ब्राह्मणस्य" "उत्तरेऽहन् द्विरात्रस्य गृह्यते" मध्यमेऽहं त्रिरात्रस्य" "चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत, इतिवाक्यैः क्रत्वर्थतासिद्धिः, एवमग्नेरप्यग्निष्टोमादिवाक्यैः क्रत्वर्थतासिद्धिः स्यादेवेत्याशङ्कयाह—

नित्यात्काम्यस्य शैघ्रयात्प्रकृतिमपि समापद्यतां लिङ्गतोऽग्निः
सोऽङ्गं संथादिवाक्यैः प्रकृतिविकृतिषु स्याद् द्विरात्रादिगोऽपि ।
तद्वाक्यान्न्याय्यवाक्यैस्त्रिभिरपि निखिलाहर्गणान्प्रापितेऽग्नौ
किं वा [1]कुर्वन्त्वगत्या [2]प्रकृतमिह विधिव्रातमग्नेः स्तुवन्तु ॥३३॥

एवमग्निष्टोमादिवाक्यानां क्रत्वर्थत्वविधिरूपतामुपपादयता कस्मिन्विधावव्याप्तिरिष्यते । न ताव"दग्निष्टोमेनाऽनुयजन्ती"ति विधौ, तस्य प्रकृत्यग्निष्टोमेऽग्निप्राप्त्यर्थत्वात् । न च वाच्यमग्निष्टोमशब्दो विकृत्यग्निष्टोमस्याऽपि साधारणः । अतस्तत्राऽतिदेशतोऽग्निप्राप्तिः सम्भवतीति, तदीयाग्निविध्यंशेऽव्याप्तिः-इति । प्रकृतिविकृत्यग्निष्टोमयोर्विधेरेकत्वे तद्विध्यप्रवृत्तावग्नेः प्रकृत्यग्निष्टोमाङ्गत्वासिद्धयाऽन्यत्र [3]तदतिदेशस्याऽसम्भवात् । नापि "तमुक्थ्येन", "तमतिरात्रेणे"ति विध्योरव्याप्तिः तयोरप्यग्निष्टोमवाक्यवत्प्रकृतिविकृतिसाधारणत्वात् ।

उक्थ्यातिरात्रसंस्थावतोः क्रत्वोरग्निष्टोमविकारत्वमङ्गीकृत्याऽव्याप्तिशंका ।

ननु प्रकृतिभूतयोरप्युक्थ्यातिरात्रसंस्थावतोः क्रत्वोः अग्निष्टोमविकारत्वात्तत्रश्चोदकात्सम्भवत्प्राप्तिकस्याऽग्नेः तयोः पुनर्विधानं गुणकामप्राप्त्यर्थमिति तद्विध्योरव्याप्तिस्स्यादेवेति चेत् ।

अग्निविधिष्वव्याप्तिवारणोपसंहारः ।

उच्यते-न तावदग्निष्टोमविकारे, तयोरप्यग्निष्टोमवत्प्रकृतिभूतज्योतिष्टोमात्मकत्वात् । ज्योतिष्टोमस्यैव खल्वग्निष्टोमोक्थ्यषोडश्यतिरात्रसंज्ञकाश्चतस्रः संस्थाः । तत्राऽग्निष्टोमसंस्था चमसवत्क्रत्वर्था "उक्थ्यादिसंस्थास्तु पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्यकामः स्तुवीत" "अतिरात्रेण प्रजाकामं याजयेदि"ति ज्योतिष्टोममाश्रित्य फलार्थतया विहिता गोदोहनवत्पुरुषार्था इति [4]विशेषः । अग्निष्टोमादिसंस्था इति चाऽग्निष्टोमादिसंज्ञकैः स्तोत्रैः क्रतोः समाप्तय उच्यन्ते, संपूर्वस्य तिष्ठतेर्धातोः समाप्तिवाचित्वात् । ततश्च यथा फलाय गोदोहनग्रहणेऽपि तदाश्रयौ दर्शपूर्णमासौ प्रकृतिभूतौ, एवं फलार्थमुक्थ्यादिसंस्थानुष्ठानेऽपि तदाश्रयो ज्योतिष्टोमः प्रकृतिभूत एव भवति । प्रकृतौ च तत्र नाऽतिदेशादग्नेः प्राप्तिः, नाप्यग्निष्टोमवाक्यरूपादुपदेशात् । तेनाग्निष्टोमसंस्थावत्येव हि तस्मिन्नग्निः प्राप्यते, न तु संस्थान्तरवत्यपि ।

---

१. कुर्वन्त्ववगत्येति मु० पु० पा० ।
२. प्रकृतिमिति मु० पु० पा० ।
३. देशे असम्भवादिति मु० पु० पा० ।
४. शेष इति ख० पु० पा० ।

यथा "अग्रवतीं बृहत्पृष्ठस्ये"ति वाक्येनाग्रवती बृहत्साम्न्येव तस्मिन्प्राप्यते, न तु रथन्तरसाम्न्यपि ततश्चोक्थ्यसंस्थस्य, अतिरात्रसंस्थस्य च ज्योतिष्टोमस्याऽङ्गत्वेनाप्राप्तोऽग्निरुक्थ्यातिरात्रवाक्याभ्यां विधीयते। उक्थ्यातिरात्रशब्दयोरुक्थ्यातिरात्रसंस्थविकृतिसाधारण्येऽप्यग्निष्टोमवाक्योक्तन्यायेन विकृतिष्वप्यग्नेरप्राप्तस्य विधी भवत इति न तयोरव्याप्तिशङ्कावकाशः।

## द्विरात्रादिवाक्येष्वव्याप्तिवारणम्।

नाऽपि द्विरात्रादिवाक्येष्वव्याप्तिः, द्विरात्रादिष्वग्निष्टोमोक्थ्यातिरात्रसंस्थानामह्नां सत्त्वेन तेषु प्रकृति-विकृतिसाधारणाग्निष्टोमादिवाक्यैरेवाऽग्नेरौपदेशिकत्वस्य, तदधीनगुणकामप्राप्तेश्च सम्पन्नतया तेषां गुणकामप्राप्त्यर्थाग्निविधिरूपत्वस्य वक्तुमशक्यत्वात्। न च तेषु षोडशिसंस्थस्याऽप्यह्नः सम्भवेन तस्मिन्नहनि षोडशिसंस्थे प्रकृतिभूतज्योतिष्टोम इवाऽग्नेरौपदेशिकत्वं तेभ्यो न लभ्यत इति तदर्थं द्विरात्रादिवाक्यं स्यादिति वाच्यम्। तेष्वग्निष्टोमादिसंस्थानामप्यह्नां सत्त्वेनाऽग्निस्तेषामप्यगङ्गं स्यादिति, तदङ्गभूताग्न्याश्रितगुणकामप्रवृत्त्युपपत्त्या षोडशिसंस्थे ह्यग्नेरौपदेशिकत्वसंपादनस्य निष्फलत्वात्। औपदेशिकाङ्गानुष्ठानमेव हि तदाश्रितगुणकामप्रवृत्तिप्रयोजकम्, न तु यत्र तस्याऽङ्गस्योपदेशेन न प्रवृत्तिः, तदुपकारकत्वाभावोऽपि, गौरवात्।

## 'अग्निष्टोमादिवाक्यानां परिसंख्यार्थत्वोपपादनम् आम्नातं परिसंख्यार्थम्' इति सूत्रावलम्बनेन।

किन्तर्हि द्विरात्रादिवाक्यानि कुर्वन्तु। अग्निष्टोमादिवाक्यैः सर्वेष्वहर्गणेषु प्राप्तस्याऽग्नेर्द्विरात्राद्यतिरिक्तेभ्यः प्रतिक्षेपरूपां परिसंख्यां कुर्वन्तु। षोडशिग्रहविषयद्विरात्रादिवाक्यानीवाऽहरन्तरेभ्यः प्रतिक्षेपरूपां परिसंख्याम्। अत एव षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानादि १०।५।९।३४ त्यधिकरणे षोडशिग्रहस्याग्निष्टोमादिष्वङ्गत्वेन विधानादतिदेशतः सम्भवत्प्राप्तिकस्य द्विरात्रादीनां तत्र तत्राऽहनि पुनर्विधानं परिसंख्यार्थमित्युक्तम् "आम्नातं परिसंख्यार्थमि" १०।९।३४ ति सूत्रेण।

## दृष्टान्तावलम्बनेन प्राप्तपरिसंख्यायां त्रैदोष्यशंका।

ननु षोडशिग्रहणवाक्येष्वग्निष्टोमादिशब्दानां प्रकृतिमात्रपरत्वात् द्विरात्रादिष्वतिदेशतः प्राप्तिः तर्कणमात्रमिति भवत्वप्राप्तपरिसंख्या। इह त्वग्निवाक्येषु तेषां प्रकृति-विकृतिपरत्वाभ्युपगमादुपदेशत एव द्विरात्रादिष्वहरन्तरेष्वपि प्राप्तिरस्तीति प्राप्तपरिसंख्यायां त्रैदोष्यं स्यादिति चेत्।

## पूर्वोक्तशंकानिरासेन स्तावकत्वोपपादनम्।

तर्ह्येव द्विरात्रादिवाक्यानि समनन्तरविधीनां स्तुतिः कुर्वन्तु एवमेतेऽग्निष्टोमादिष्वग्निविधयः प्रशस्ता यत्तेष्वग्निविधानमात्रेण द्विरात्राद्यहर्गणेष्वप्यग्निर्लभ्यते इति। इत्थमेव ह्याङ्गिरसां द्विरात्रे षोडश्युत्तर इति वचनमुत्तरेऽहन् द्विरात्रस्य गृह्यत इति द्विरात्रसामान्यवचनप्राप्तस्य षोडशिनो द्विरात्रान्तरेभ्यः परिसंख्यार्थमिति वृत्ति-

कारमते प्राप्तपरिसंख्यार्थत्वेन त्रैदोष्यं स्यादित्यपरितुष्यता भाष्यकृता तस्य वैखानसं पूर्वेऽहन् साम भवतीति समनन्तरविधिस्तावकत्वमुक्तम्—पूर्वस्याह्नो वैखानसाख्यवैशेषिकगुणविधिर्युक्तः यदुत्तरस्याप्यह्नः षोडश्याख्यो वैशेषिको गुणो वर्त्तत इत्यौचित्येन स्तौति-इति। तस्मात् द्विरात्रादिवाक्येष्वपि नाऽव्याप्तिशङ्कावकाश इति भावः।

इति त्रयस्त्रिंशश्लोकस्यव्याख्या

---

अथ चतुस्त्रिंशश्लोकस्यावतारिका।
द्विरात्रादिवाक्येषु प्रकारान्तरेणाव्याप्त्याशङ्का।

नन्वत्राग्निष्टोमादयः षोडशिग्रहाग्निष्टोमादिवाक्येष्विव प्रकृतय एव गृह्यन्ताम् न विकृतयोऽपि, ततश्च द्विरात्रादिगतेष्वग्निष्टोमोक्थ्यातिरात्रसंस्थेष्वहःसु प्रकृतिभूतेभ्योऽग्निष्टोमादिभ्यश्चोदकात्सम्भवत्प्राप्तिकस्याऽग्नेर्विधानं गुणकामप्राप्त्यर्थमेव भवेत् न तु स्तुत्यर्थम् परिसंख्यार्थं वा, स्तुतेर्व्यर्थप्रायत्वात्। आतिदेशिकपरिसंख्यायाश्चाऽप्राप्तविषयत्वेन त्रैदोष्याभावेऽप्यग्निप्रकरणसंनिहितगुणकामप्राप्त्यर्थत्वसंभवे असंनिहितद्विरात्रादि तदतिरिक्तानेकाहर्गणप्रकरणगततत्तच्चोदकवाक्यानुसन्धानलभ्याग्निव्यावर्त्तकत्वकल्पनस्याऽयुक्तत्वात्। तर्हि षोडशिग्रहविषयद्विरात्रादिवाक्यान्यपि पूर्ववाक्यसंनिहितराजन्यादिनिमित्तव्यावृत्यर्थान्येव स्युः, न तु द्विरात्राद्यहरन्तरचोदकपर्यालोचनालभ्यषोडशिग्रहपरिसंख्यार्थानीति चेत्तथैव सन्तु। अत एव शास्त्रदीपिकायां षोडशिग्रहविषये द्विरात्रादिवचनमनैमित्तिकत्वार्थमित्युक्तम्। तस्मायुक्तमिह द्विरात्रादिवाक्येष्वव्याप्तिकथनमित्याशंक्याह—

अग्निष्टोमादयश्चेत्प्रकृतय इह न स्यात्समानं विधानम्
सङ्कोचश्च श्रुतीनां क्व चन नयविदां निर्निमित्तो न युक्तः।
तस्मादव्याप्तिरग्नेर्विधिषु न घटते वर्णिता वैकृतेष्वि-
त्याक्षेपेऽस्मिन् प्रवक्तुं नयसरणिचणैः शक्यमेतावदेव ॥३४॥

यद्यत्राऽग्निष्टोमादिब्दाः प्रकृतिमात्रपराः स्युः तदा "ग्रहणे समानविधानं स्यादि"ति सूत्रोक्तं प्रकृतिविकृतिष्वग्नेः सामानविध्यं न सिध्येत्। एकविधिविधेयत्वं हि सामानविध्यम्।

शंका

नन्वत्रोपदेशरूपतयैकरूपैर्विधिभिः विधेयत्वमात्रं तद्विवक्षितम्, तावतैव विकृतिषु गुणकामप्राप्तिफलस्य लाभात्। न त्वेकविधिविधेयत्वपर्यन्तं विवक्षितम्, तावत्पर्यन्तविवक्षायां फलाभावात्। अपि चाऽहर्गणेष्वग्निवत्समानविधानं स्यादि १०।५।२३ "ति" दशमाध्यायसूत्रेण तथैव तत्तात्पर्यस्य स्पष्टीकरणाच्च। तत्र हि द्वादशाहे त्र्यनीकायां रथन्तरबृहत्साम्नोराद्ययोरङ्गचोदकादैन्द्रवायवशुक्राग्रत्वप्राप्तिसम्भवे किमर्थं तयोः पुनर्विधानमित्याशङ्कायां सामानविध्यार्थमिति तत्फलमुक्त्वा-

ऽग्निवदिति दृष्टान्त उपन्यस्तः। तत्र दार्ष्टान्तिके प्रकृति-विकृत्योर्न विध्यैक्यमस्ति प्रकृतौ यदि रथन्तरसामा सोम इत्यादिविधिः, विकृतावैन्द्रवायवाग्रं प्रथममहः इत्यादिविधिरिति तद्भेदात्। किन्तूपदेशरूपतया प्राकृतवैकृतविध्योरैकरूप्यमात्रम्, वथैव तद्दृष्टान्तेऽग्नावपि सामानविध्यं भवितुमर्हतीति चेत्।

तन्निरासः

भवत्वेवमग्न्यतिग्राह्याधिकरणसूत्रसङ्गतिः, तदीयतन्त्ररत्नसङ्गतिस्तु न स्यात्। तत्र हि वैकृताग्निविधीनां परिसंख्यात्वमाशङ्क्य सामानविध्येन निराकृतम्। तदस्माभिः प्रथमश्लोकव्याख्याने स्पष्टीकृतम्। तत्तु तदा सङ्गच्छते, यदि प्रकृतिविकृतिष्वग्नेरेकविधिविधेयत्वं स्यात्। भिन्नविधिविधेयत्वे हि प्राकृतविधिना क्लृप्तोपकारस्याग्नेर्विकृतिविशेषेषु पुनर्विधानं गृहमेधीयाज्यभागविधानवत्परिसंख्यार्थमस्त्वित्या[1]शङ्का सामानविध्येन निराकर्तुमशक्यैव स्यात्। अत एवाऽस्माभिः पूर्वश्लोके प्राकृताग्निविधिभ्यो भिन्नानां द्विरात्रादिष्वग्निविधीनां परिसंख्यात्वपक्षोऽपि दर्शितः।

नन्वस्तु वैकृताग्निविधीनां परिसंख्यात्वनिराकरणे हेतुविशेषनिर्देशकतन्त्ररत्नमात्रस्याऽसङ्गतिः, तथाऽपि सूत्रादिसामञ्जस्यावैकल्यादग्निष्टोमादिशब्दानां प्रकृतिमात्रपरत्वाभ्युपगमे को दोष इति चेत्तेषामविशेषप्रवृत्तश्रुतिरूपाणां निर्निमित्तः प्रकृतिषु सङ्कोच एव दोषः, तं हि न्यायविदो नानुमन्यन्ते। न हि षोडशिग्रहवाक्यगताग्निष्टोमादिशब्दानां ज्योतिष्टोममहाप्रकरणमिवाऽभिक्रामं जुहोतीत्यत्र जुहोतेरितिकर्तव्यताकाङ्क्षप्रयाजावान्तरप्रकरणमिव चेहानारभ्याधीताग्निष्टोमादिशब्दानां किंचित्सङ्कोचकमस्ति सङ्कोचकाभावे च "यदाहवनीये जुह्वतीत्यनारभ्यवादगतजुहोतेः प्राकृत-वैकृतसकलहोमपरत्वमिवेहाग्निष्टोमादिशब्दानां प्रकृतिविकृतिरूपसकलाग्निष्टोमादिपरत्वमेव न्याय्यम्। तस्मात्प्रकृति-विकृतिसाधारणैरग्निष्टोमादिवाक्यैरेव द्विरात्रादिष्वग्निप्राप्त्या प्रकृतिवत्तेष्वपि तदाश्रितगुणकामलाभाद् द्विरात्रादिवाक्यानां पूर्वश्लोकोक्तरीत्या परिसंख्यार्थत्वं स्तुत्यर्थत्वं वाऽनन्यगतया स्वीकरणीयमिति तेष्वपि नाऽस्त्यव्याप्तिः। अतो विषयसप्तमीपक्षे वैकृताग्निविधिष्वव्याप्तिरित्युक्तिर्निरालम्बनेति स्थितम्, एवमाक्षेपे मीमांसान्यायविद्भिरेतावदेवोत्तरं वक्तुं शक्यम्।

इति चतुस्त्रिंशश्लोकस्य व्याख्या।

---

अथ पञ्चत्रिंशश्लोकस्यावतारिका।

किन्तदिति चेत्तत्राह—

अग्निष्टोमादिशब्दाः प्रकृतिविकृतिसंस्पर्शिनस्सन्तु नाम
प्राप्यत्वाम्नातसंस्थान्प्रथममथ न ते यान्त्यनाम्नातसंस्थान्।
तत्तत्यक्तं द्विरात्रप्रभृतिषु विधयश्चोदकप्राप्तमग्निं
श्येनाकृत्यादिलब्ध्यै विदधत इति तेष्वप्यक्षताऽव्याप्ततेति ॥३५॥

---

[1] मु० पु० स्त्विति शङ्का।

पूर्वश्लोकोक्तरीत्या सङ्कोचे कारणाभावादिमेऽग्निष्टोमादिशब्दाः प्रकृति-विकृति-गामिनः सन्तु नाम। अत एव प्रकृतिसामानविध्यात्परिसंख्यात्वमनुपपन्नमिति तन्त्ररत्नवचनमप्यग्निष्टोमादिवाक्यत्रयाभिप्रायेण युज्यते, तथापि विकृतिरूपान् सर्वानग्निष्टोमादीन्न स्पृशन्ति, किं त्वग्निष्टोमादिसंस्थावतः क्रतुविशेषानन्विच्छन्तो येषु क्रतुषु प्रत्यक्षश्रुत्याम्नातास्तत्तत्संस्थाः सन्ति, तेषु शीघ्रबुद्ध्युपारूढेषु प्रथममवतरन्ति, तावता नैराकाङ्क्ष्यात्, शब्दानां विरम्य व्यापाराभावाच्च। तदनन्तरं विलम्बितोपस्थितिकेषु चोदकप्राप्यसंस्थेषु क्रतुषु नाऽवतरन्ति पर्णमयादिवाक्यस्थितजुह्वादिशब्द इव चोदकप्राप्तासु वैकृतजुह्वादिषु "उपांशु पौर्णमास्यां यजन्नि" ति वाक्याभावे दर्शपूर्णमासाधिकारवाक्यस्थपूर्णमासपदमिवाऽन्तरालविधिसामर्थ्यलभ्यपौर्णमासीकाले उपांशुयाजे। आहवनीयवाक्यगतजुहोतेरप्यग्नयश्च स्वकालत्वादि ३।७।२०।३९ त्यधिकरणे सर्वविकृतिहोमविधिसाधारण्यं नाऽङ्गीकृतम्[1], किन्तु ये विकृतिष्वामनहोमादय उपदिष्टाः, न त्वतिदिष्टाः तत्साधारण्यमेवाऽङ्गीकृतम्, तन्मात्रसाधारण्ये ह्यतिदिष्टसाधारण्य इव न विरम्य व्यापारप्रसक्तिरस्ति। अत एवाऽतिदेशप्राप्येषु होमेष्वाहवनीयस्याऽप्यतिदेशेनैव प्राप्तिस्तदधिकरणवार्त्तिके दर्शिता। ततश्चाऽऽहवनीयेन सहैवाऽस्याऽतिदेशनात्। प्रकृतौ वा द्विरुक्तत्वादि ३।६।२ त्ययं निश्चयो भवेदिति। एवञ्च प्रकृतानामग्निष्टोमादिशब्दानां प्रत्यक्षाम्नाततत्तत्संस्थावन्मात्रविषयतया तेष्वेवाऽग्नेरुपदेशतः प्रवृत्तिः, येषु तु द्विरात्रादिषु प्रत्यक्षाम्नातसंस्थाविशेषरहितेषु चोदकात् द्वादशाहिकमध्यमदशरात्रगततत्तत्संस्थाविशेषलाभः। तेष्वग्निष्टोमादिवाक्यरूपोपदेशपरित्यक्तेष्वतिदेशादेवाग्नेः प्राप्तिरिति, तेषु गुणकामा न प्राप्नुयुः अतस्तेषु सामानविध्येन गुणकामप्राप्त्यर्थमग्निविधिपराणि द्विरात्रादिवाक्यानीति, तेष्वव्याप्तिकथनं युक्तमित्येतावदिह वक्तुं शक्यम्।

इति पञ्चत्रिंशश्लोकस्य व्याख्या

---

अथ षट्त्रिंशश्लोकस्यावतारिका।

नन्वेवमेव समाधानमुच्यतां को दोष इति चेत्तत्राऽऽह—

तत्रैतद्दूषणं स्यान्न गुणफलविधिष्वत्र वाऽन्यत्र वाऽग्निः[2]
प्राक्किञ्चित्क्रत्वपूर्वान्वयमुपगतवानाश्रयोऽत्राऽनुवाद्यः ।
किन्त्वग्निष्टोममुख्यक्रतुसमधिगमात्प्रागनारभ्यवादे
शुद्धोऽग्निस्तस्य नैव क्वचिदपि विकृतावाश्रयत्वेऽस्ति भेदः ॥३६॥

स्यादिदमुत्तरम्—यद्यग्न्याश्रितगुण[3]फलविधिषु[4] अत्रैवाऽग्निप्रकरणेऽन्येषु वा क्रतुप्रकरणेषु किंचित्क्रत्वपूर्वान्वयित्वेन सिद्धोऽग्निराश्रयत्वेनाऽनुवाद्यो न स्यात्। तथा हि—यदि प्रागेवाऽग्न्याश्रितगुणफलविधिप्रवृत्तेः केषु चित् क्रतुप्रकरणेषूपदेशेन च तत्तत्क्रत्वपूर्वान्वयोऽग्नेः सिद्धः स्यात् तद्व्यतिरेकेण चाऽत्र गुणफलविधिष्वाश्रयानुवा-

---

[1] विकृतीति मु. पु. नास्ति।
[2] व्यप्तिः इति मु. पा.
[3] गुणेति मु. पु. पा.
[4] अन्यतै मु. पु. पा.

दार्थं शुद्धाग्निसमर्पकपुरोवादो[1] न स्यात्, तदानीमौपदेशिकजुहून्यायेन प्रथमबुद्धिमवतरत्यौपदेशिकेऽग्नावाश्रयत्वेनाऽन्विते, चरममातिदेशिकस्याऽग्नेरन्वयो न भवेदिति तस्याऽपि तदाश्रयत्वेनान्वयार्थमुपदेशः सफलः स्यात्। यदि वा तत्रैव प्रकरणे किंचित्क्रत्वपूर्वान्वयित्वेन सिद्ध एवाऽग्निरप्प्रणयनवद्गुणफलविध्यन्वयी स्यात्, तदा गोदोहनवदग्न्याश्रितगुणफलविधिस्तत्रैव क्रतौ व्यवतिष्ठेतेति क्रत्वन्तरगताग्नेरपि तदाश्रयत्वसिद्ध्यर्थं यत्नान्तरं कर्त्तव्यं स्यात्।[2]

द्विरात्रादिवाक्यानां गुणकामप्राप्त्यर्थं नापेक्षेति निरूपणम्।

नन्वेवमनारभ्यवादरूपेऽग्निप्रकरणेऽग्निष्टोमादिवाक्यैः क्रत्वन्वयकरणात् प्रागेव "य एवं विद्वानग्निं चिनुत इत्युत्पन्नः शुद्धोऽग्निः श्येनाकृत्यादिगुणफलविधिष्वाश्रयत्वेनाऽन्वेति, सोमप्रयोगाद्बहिः केवलस्याऽग्नेरनुष्ठातुमशक्यत्वादग्निष्टोमादिवाक्यैः तस्य क्रतुषु संयोजनाच्च। यत्राऽग्निस्तत्रैव तदाश्रिता गुणफलविधय इत्यर्थादेव तेषामपूर्वीयाग्निसंबन्धः सिध्यति, अर्थात्सिध्यच्चापूर्वीयस्याऽऽश्रयत्वं येष्वग्नेरौपदेशिकमपूर्वीयत्वम्, येषु चाऽतिदेशाधीनं तेषु सर्वेष्वप्यविशेषेण सिध्यति। न ह्यत्रातिदिष्टस्याऽग्नेराश्रयत्वे दार्शपौर्णमासिकाप्प्रणयनाश्रितत्वेनाऽवगतस्य गोदोहनस्येष्ट्यन्तरातिदिष्टप्रण[3]यनाश्रयवैगुण्यवदिह किंचिद्वैगुण्यमस्ति, एतादृग्विषयाभिप्रायेणैवाऽतिदिष्टाश्रयणेनाऽपि गुणकामप्रवृत्तिरङ्गीकृता। अवैगुण्ये तु भवतु कामस्याऽपि प्रवृत्तिरिति। तदभिप्रायेणैव भाष्यकारोऽप्याह "गोदोहने प्रवर्त्तमाने तदाश्रितः कामोऽपि प्रवर्त्तते आश्रये प्रवर्तमाने तदाश्रितमपि प्रवर्तते ८।१।१४। इति। तस्मादतिदिष्टाग्न्याश्रयणेनाऽपि गुणकामप्राप्तिसम्भवान्न तदर्थं द्विरात्रादिवाक्यापेक्षेति भावः॥३६॥[4]

इति षट्त्रिंशश्लोकव्याख्या

---

अथ सप्तत्रिंशश्लोकव्याख्या।

का तर्हि द्विरात्रादिवाक्यानां गतिः? स्तावकतैवेत्युक्तमिति चेन्न। अग्निष्टोमोक्थ्यातिरात्रवाक्यसरूपतया तद्विधायकतया प्रतीयमानानां व्यर्थप्रायस्तुतिपरत्वकल्पनायोगात्। तस्मात्तद्विधित्वनिर्वाहान्यथानुपपत्त्यैवाऽतिदिष्टाश्रयणेन गुणकामा न प्रवर्त्तन्त इति कल्पयिष्यामः। तथा सति हि गुणप्राप्त्यर्थता तेषां भवेदित्यनुशयानं प्रत्याह—

वाचस्त्वग्नेर्द्विरात्रप्रभृतिषु परिसंचक्षतामन्यतोऽग्निम्
तेष्वन्याङ्गानि यद्वा नियमनमथ वा तेषु कुर्वन्तु तस्य[5]।
येष्वेताः क्लिष्टगत्या गुणफलभवनप्रापणार्था भवेयुः
षोडश्यर्थेष्विव स्यात्तदपि विधिफलं तेष्ववश्यं तथाऽपि॥३७॥

---

[1] पुरोनुवाद इति. मु. पु. पा.
[2] नन्वेवमिति मु. पु. पा.
[3] नाश्रयणे इति. मु. पु. पा.
[4] तस्मिन्नि मु. पु. पा.
[5] तस्याः इति मु. पु. पा.

द्विरात्रादिवाक्यानां व्यर्थप्रायं स्तावकत्वमिति मन्वानं प्रति परिसंख्येति कथनम्।

यदि द्विरात्रादिवाक्यानां केन चित्प्रकारेण विधायकत्वं वाच्यमिति निर्बन्धः तदा तान्यहर्गणान्तरेभ्योऽग्नेः परिसंख्यां कुर्वन्तु। यदि प्राप्तपरिसंख्या त्रिदोषा, तदपेक्षया व्यर्थप्राया स्तुतिरेव वरमितित्युक्तमिति तत्राऽपरितोषस्तर्हि द्विरात्रादिष्वेव गृहमेधीयाज्यभागविधिन्यायेन चोदकप्राप्ताङ्गान्तरपरिसंख्यां कुर्वन्तु। यदि च द्विरात्रादिष्वतिदेशप्राप्ताङ्गसद्भावेपि[1] लिङ्गानि सन्तीति तद्विरोधात्तत्राप्यपरितोषस्तर्हि द्विरात्रादिषूत्तरवेद्याः पक्षप्राप्तावग्नेर्नियमनं कुर्वन्तु, द्विरात्रादिचोदकपर्यालोचनालभ्योत्तरवेदिप्राप्त्यपेक्षाग्निनियमापेक्षयाऽग्निप्रकरणाम्नाततदाश्रितगुणकामप्राप्तिर्बुद्धिसंनिहितेति, तादर्थ्यमेव द्विरात्रादिवाक्यानां कल्पयितुमुचितमिति प्रथमश्लोकव्याख्याने प्रतिपादितमिति चेदिदमपि तत्र षोडशिद्विरात्रादिवचनमुदाहृत्य प्रतिपादितमेव-सन्निहितफलालाभे प्रकरणान्तरस्थचोदकाधीनप्राप्तिसापेक्षो नियमोऽपि फलं भवितुमर्हतीति। इह [2]चाऽन्यतः सम्भवन्ती गुणकामप्राप्तिः फलं न भवतीत्युक्तमेव। यद्यपि क्लिष्टगत्या द्विरात्रादिवाक्यानां गुणकामप्राप्त्यर्थत्वं समर्थ्येत, तथाप्यग्नेर्नियमनमपि फलं सम्भवन्न निवारयितुं शक्यम्। न ह्येकस्य वाक्यस्य प्राप्ति-नियम-परिसंख्यास्वेकमेव फलमिति नियमः, अनेकफलसङ्करस्य तत्र-तत्र वाक्ये बहुशः प्रागुदाहृतत्वात्।

अनेकफलसांकर्यस्य सिद्धान्तसम्मतत्वे शास्त्रदीपिका-तन्त्ररत्न-
सूत्रमूलकत्वेनोदाहरणान्तरप्रदर्शनम्

किञ्च द्विरात्रादिवाक्येष्वेव षोडशिग्रहविषयेष्वनेकफलसङ्करः सिद्धान्ताभिमतो दृश्यते। तथा हि-"उत्तरेऽहन्द्विरात्रस्य गृह्यते" इत्यादिवाक्यानि तत्प्राचीनवाक्यसङ्कीर्त्तितं ब्राह्मणत्वराजन्यत्वरूपनिमित्ताभावेऽपि षोडशिनः प्रापणार्थानीति तावत् शास्त्रदीपिकाकृतोक्तम्। तेनैव "उत्तरेऽहन्निितिवाक्यम्" प्रकृत्यतिरात्रे विकल्पितस्य षोडशिनः तथैव द्विरात्रस्योत्तरेऽहनि प्राप्तौ तन्नियमार्थमिति तन्त्ररत्ने प्रतिपादितम्। सूत्रकृता तु षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात्। ५।१।३४ इत्यधिकरणे उत्तरेऽहन्नित्यादिवाक्यानि परिसंख्यार्थानीति प्रतिपादितम्, तत्र हि षोडशी प्रकृतौ ज्योतिष्टोमे न ग्राह्यस्तस्य "मध्यमेऽहन्नि"त्यादिवाक्यैः कात्स्न्र्येन विकृतिसम्बन्धित्वावगमात्तदनुसारेणाऽग्निष्टोमोक्थ्यातिरात्रशब्दानां विकृत्यग्निष्टोमादिपरत्वौचित्यात्। अन्यथा प्रकृत्यग्निष्टोमादिषु सततस्तस्याऽतिदेशाद्विकृतिषु प्राप्तिसम्भवेन मध्यमादिवाक्यवैयर्थ्यप्रसङ्गादिति पूर्वपक्षं प्रापय्य, ज्योतिष्टोमप्रकरणगतानां षोडशिविषयाग्निष्टोमादिवाक्यानां द्वादशोपसत्तादिवाक्यवत्तदनन्वयिपदरहितानां प्रकरणादुत्कर्षायोगात्। प्रकृतावपि षोडशी ग्राह्य इति सिद्धान्तिते, किमर्थानि तर्हि मध्यमादिवाक्यानीत्याकांक्षायां "आम्नातं परिसंख्यार्थ"मिति सूत्रेणाऽतिरात्रोक्थ्याग्निष्टोमसंस्थेष्वहर्गणानामहरन्तरेष्वपि ब्राह्मणराजन्ययोः षोडशिनः प्राप्तौ तत्परिसंख्यार्थानीत्युक्तं फलं प्रत्याख्यातव्यम्। तस्मात् षोडशिविषयद्विरात्रादिवाक्येष्विवाऽग्निविषयद्विरात्रादिवाक्येष्व-

[1] सद्भावेति मु. पु. पा., सद्भावेनेनेति ख. पु. पा.

[2] अतिरिष्टाश्रयणेन इत्यर्थः।

प्यनिवार्यः फलान्तरेण संकरः। अतः फलान्तरेण तेषां विधित्वनिर्वाहादतिदिष्टाश्रयणेन गुणकामा न प्रवर्तन्त इति परिभाषा नाश्रयणीया इति कथमपि द्विरात्रादिवाक्येष्व-व्याप्तिरवकाशं न लभत इति भावः।

इति सप्तत्रिंशश्लोकव्याख्या

———

गुणफलसम्बन्धविधयाऽव्याप्तिपरिहारवर्णनम्।

अथाष्टत्रिंशश्लोकस्य व्याख्या।

एवं द्विरात्रादिवाक्येष्वव्याप्तेरनवकाशत्वं सप्रपञ्चमुपपादितम्। "पशुकाम उक्थ्यं गृह्णीयात्" "षोडशिना वीर्यकामः स्तुवीत" "अतिरात्रेण प्रजाकामं याजयेदि"-ति वाक्यानि पश्वादिफलार्थं ज्योतिष्टोमाश्रितोक्थ्यादिसंस्थारूपगुणविधायकानीति मत-माश्रित्यऽउक्थ्योतिरात्रवाक्ययोरप्यव्याप्तेरनवकाशत्वं प्रागुपपादितम्[1]।

केषाञ्चिन्मतेनाव्याप्त्युपपादनम्।

ये तु मन्यन्ते-पशुकामादिवाक्यानि पश्वाद्यर्थमुक्थ्याद्यधिकावृत्तियुक्तप्रकृतसोम-यागविधायकानि न तु तदाश्रितोक्थ्यादिसंस्थामात्रविधायकानि। यत्र हि लोकतः क्रतोर्गुणान्वयो लभ्यते, तत्रैव फलाय गुणमात्रस्य विधिर्युज्यते। यथा—गोदोहनादेः। यत्र तु शास्त्रादृते न तत्सिद्धिः तत्र न स युज्यते, गुणाश्रयसंबन्धे, गुणफलसंबन्धे च शास्त्र-व्यापारायोगात्, किन्तु तत्र गुणविशिष्टक्रतोरेव फलाय विधानं वाच्यम्। अत एव दाक्षायणयज्ञेन स्वर्गकामो यजेत" तैं. सं. २-५-५ त्यादिष्वप्यावृत्तिगुणविशिष्टस्य क्रतोरेव फलाय विधानमभ्युपगम्यते। एवं च फलकामनानिमित्तकतदधिकावृत्तियु-क्तोक्थ्यादिसंस्थः सोमयागो नित्यवदाम्नातः-तदावृत्तियुक्तस्याऽग्निष्टोमसंस्थस्य "वसन्ते-वसन्ते ज्योतिषा यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत" आप श्री. सू. ति विधिद्वयप्राप्तनित्यकाम्योभयावस्थस्य सोमयागस्य विकार इति तत्र दीक्षणीयादेरङ्गक-लापस्याऽतिदेशेनैव प्राप्तिर्न तूपदेशेन नित्यवदाम्नातदीक्षणीयाद्युपदेशस्य शीघ्रोपस्थि-तिकनित्यवदाम्नाताग्निष्टोम-संस्थनित्यकाम्यक्रतुप्रयोगान्वयेन चरितार्थस्य विलम्बितो-पस्थितकनैमित्तिकोक्थ्यादिग्रहाऽऽक्षेप्याधिकावृत्तियुक्तप्रयोगान्तरान्वयकल्पने द्विरुक्ति-प्रसङ्गात्-इति, तन्मताश्रयणेनोक्थ्यातिरात्राग्निवाक्ययोरतिदेशतः सम्भवत्प्राप्तिका-ग्निविधिरूपयोरव्याप्तिर्वक्तुं शक्यत इत्यत आह—

उक्थ्यादिस्पृक्फलानां क्रतुसमधिगतिं[2] मन्वते ये[3]ऽपि तेषाम्
तेनाग्निष्टोमसंस्थक्रतुविकृतितयोक्थ्यादिसंस्था न सिध्येत्।
किन्तु स्यात्सार्वकाम्योक्त्युदितफलभिदा साधिकायां प्रकृत्याम्
उक्थ्यादीनां व्यवस्था प्रकरणपठनात्सर्वतस्तत्प्रसक्तौ ॥३८॥

---

[1] ३३ श्लोक इति शेषः। [2] मन्वतामिति मु. पु. पा.
[3] के. मु. पु. पा.

"पशुकाम उक्थं गृह्णीयात्" इत्यादिवाक्येषूक्थ्यादिशब्दवाच्यामुक्थ्यादिस्तोत्रैः क्रतुसमाप्तिरूपोक्थ्यादिसंस्थामतिलङ्घ्योक्थ्यादिपदलक्ष्यस्योक्थ्यादिसंस्थाविशिष्टस्य क्रतोः पश्वादिफलसङ्गतिरङ्गीक्रियते चेत्, पशुकामादिवाक्यानि क्रतुफलविधयो न भवेयुः "सर्वेभ्यः कामेभ्यः" इतिवाक्यान्तरेणैव क्रतोः पश्वादिसकलफलान्वयसिद्धेः। ततश्चोक्थ्यादिसंस्थे क्रतौ फलार्थस्य विध्यन्तरस्याऽभावात्तद्विधिविधेय उक्थ्याद्यधिकावृत्तियुक्तः क्रतुरग्निष्टोमसंस्थस्य क्रतोर्विकृतिरित्येवं न सिध्येदेव। किन्तर्हि पशुकामादिवाक्यैः सिध्येदिति चेत्[१], उच्यते-वसन्तादिवाक्येन जीवदधिकारतया सर्वकामवाक्येन तत्तत्फलकामाधिकारतया चाऽवगते प्रकृतिभूते ज्योतिष्टोमे तत्प्रकरणोत्पन्नानामुक्थ्यादीनामविशेषेण संबन्धे प्राप्ते पशुकामादिवाक्यैरुक्थ्यस्य पशुफलार्थे तस्मिन्संबन्धः षोडशिनो वीर्यफलार्थ इत्यादिरूपा व्यवस्था परं तैर्वाक्यैः सिध्यति। यथा वृष्ट्यादिफलत्रयार्थविहितसौभरपठितानां त्रयाणामपि हीषीत्येवमादीनां निधनानामविशेषेण तत्संबन्धे प्राप्ते "हीषिति वृष्टिकामाय निधनं कुर्यात् "ऊर्गित्यन्नाद्यकामाय" ऊइति स्वर्गकामाय"इत्यादिवाक्यैर्वृष्ट्यर्थे हीषिति निधनमित्यादिव्यवस्था सिध्यति, एवं दाक्षायणयज्ञ-साकंप्रस्थायीयादावपि दार्शपौर्णमासिकसार्वकाम्यवाक्यलब्धस्वर्ग-पश्वादिफलविशेषे क्रतावावृत्ति-सहप्रस्थानादिगुणव्यवस्थैव सिध्येन्न तु गुणविशिष्टस्य क्रतोः सार्वकाम्यवाक्योदितफलात्फलान्तरेणान्वयः। तस्मादुक्थ्यादिवाक्योदितफलानां क्रतुसङ्गतिस्वीकारेऽप्युक्थ्यादीनामग्निष्टोमविकारत्वासिद्धेस्तन्मताश्रयणेऽप्युक्थ्यातिरात्राग्निवाक्ययोरव्याप्तेर्नावकाश इति भावः ॥३८॥

इत्यष्टत्रिंशश्लोकस्य व्याख्या।

---

अथोनचत्वारिंशश्लोकस्य व्याख्या।

वस्तुतस्तु तेषां क्रतुसङ्गतिस्वीकार एवाऽयुक्तः, संस्थाविशेषविशिष्टेषु क्रतुषूक्थ्यादिशब्दप्रयोगस्य "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषण" इतिन्यायेन लाक्षणिकत्वात्, उक्थ्यादिफलवाक्येषु च लक्षणाकल्पने प्रमाणाभावात्। न च तेषां गुणाश्रयसंबन्धे गुणफलसंबन्धे च व्यापारायोगाल्लक्षणाकल्पनम्, प्रकरणादेव गुणानामाश्रयसंबन्धलाभात्। तस्मादुक्थ्यादिफलवाक्येषु स्तोत्रविशेषैः क्रतुसमाप्तय एवोक्थ्यादिशब्दवाच्याः फलाय विधीयन्ते। "गृह्णीयात्" स्तुवीत याजयेदिति तु सौर्यादिषु निर्वपत्यादिवदनुवादमात्रम्। तदेतत्सर्वं शास्त्रदीपिकादिष्वेव स्पष्टम्। एवमत्राऽस्वरसो "मन्वते येऽपी"त्युक्त्या सूचितः।

पूर्वोत्तरभाष्ययोस्तात्पर्यम्।

संस्थास्तु समानविधानाः प्रकरणाविशेषात्" ३।६।१६।४१ इति संस्थाधिकरणे किं सर्वसंस्थं ज्योतिष्टोमं प्रकृत्य दीक्षणीयादयो धर्मा उक्ताः, उताग्निष्टोमसंस्थामभिप्रेत्ये" शा. भा. पृ. १०६० त्यादिभाष्यवचनन्तु ज्योतिष्टोमस्यैवाऽग्निष्टोमसंस्थस्योक्थ्यादि-

संस्थस्य च सामानविध्यासामानविध्यविचारपरं न ग्राह्यम्, किन्तु ज्योतिष्टोमेन तदाश्रितानामुक्थ्यादिसंस्थानां पृथक् फलवत्त्वेनेतिकर्त्तव्यतापेक्षिणीनां सामानविध्यासामानविध्यविचारपरं नेतव्यम्। अत एव यत्र-यत्र गुणकामो भवति तत्र-तत्र क्रियायां साध्यमानायाम् नान्यथा सा तत्रेतिकर्त्तव्यताया अन्तिकमुपनिपतति सा साधनस्य वा साध्यस्य वेति सन्दिह्यमाना साध्यस्य भवितुमर्हति, नाऽसौ साध्यस्याऽभवन्ती साधनेन संबध्यत" शा० भा० १०६९-७० इति सिद्धान्तभाष्यवचनं सङ्गच्छते।

पूर्वोक्तभाष्यस्य तात्पर्यवर्णनमुखेन वैकृताग्निविधिष्वपूर्वविधिलक्षणस्याव्याप्तिपरिहारोपन्यासः।

इदं हि क्रतोः क्रत्वाश्रितगुणकामानाञ्च फलार्थत्वेनेतिकर्तव्यताकाङ्क्षालक्षणप्रकरणाविशेषाद्दीक्षणीयादिषु सामानविध्यमितिपूर्वपक्षे प्राप्ते सिद्धान्तयुक्तिप्रदर्शनपरम्। अस्य चेदं तात्पर्यं गुणः फलाय चोद्यमानः पूर्वप्राप्तां परप्रयुक्तक्रियामाश्रित्य पश्चाच्चोद्यते ऽयंशयुक्ता च क्रिया प्रयुज्यते। ततश्च प्राक्तनस्वतःकर्त्तव्यरूपक्रियाविधिसमय एवाऽङ्गविधीनां व्यापारः, न पश्चात् गुणफलविधानेऽपि विरस्य व्यापारायोगादिति। तस्मादयुक्तं वैकृताग्निविधिष्वपूर्वविधिलक्षणस्याऽव्याप्तिकथनमित्येवं प्रथमाक्षेपः प्रपञ्चेनाक्षिप्तः ॥३८॥

इत्यष्टत्रिंशश्लोकस्य व्याख्या।

---

अथैकोनचत्वारिंशश्लोकस्यावतारिका।

अथाक्षेपान्तराण्यपि यथा सम्भवमाक्षिप्यन्ते। 'यदुक्तम्-साप्तदश्यवाक्यवदभ्युदयार्थत्वाङ्गीकारेण स्वर्गकामादिवाक्येष्वपूर्वविधिलक्षणाव्याप्त्युद्धारे, तस्य नियमपरिसंख्याविध्योरतिव्याप्तिः स्यात् इति, तत्र साप्तदश्यवाक्यदृष्टान्तकथनमयुक्तमित्याक्षिपति---

तासु स्यत्साप्तदश्यं प्रकरणरहितं यासु न श्रूयते तत्
तास्वस्य स्याद्विकल्पो विकृतिषु कथिते चोदकात्पाञ्चदश्ये।
सत्येवं मित्रविन्दादिषु नियमविधिस्तस्य भूयो विधिः स्यात्
सार्थक्ये सम्भवत्यभ्युदयफलकता केवलं नैव कल्प्या ॥३९॥

अनारभ्याधीतस्य साप्तदशस्यातिदेशकेन पाञ्चदश्यविकल्पः, मित्रविन्दादिषु पुनः साप्तदश्यविधानं विकल्पापवादरूपं साप्तदश्यनियमार्थमिति स्वमतस्योपपादनम्।

अनारभ्याधीतसाप्तदश्यवाक्यस्याऽपि प्राकरणिकसाप्तदश्यवाक्यवन्मित्रविन्दादिमात्रशरणत्वे स्यादेवमगत्याभ्युदयार्थत्वकल्पनम् तदेवाऽसिद्धम्, तस्य[२] प्रवृत्तिविशेषकरत्वपर्यवसायि गत्यन्तरसम्भवात्। तथा हि यासु सौर्यादिविकृतिषु साप्तदश्यं न

---

[१] श्लोक व्याख्यायामितिशेषः। [२] सिद्धान्तुरक्ष्यति मु. पु. पा.
[३] केवलादप्यर्थेति मु. पु. पा.

श्रूयते, तास्वनारभ्यवादप्राप्तसाप्तदश्यस्याऽतिदेशप्राप्तेन पाञ्चदश्येन विकल्पः प्राप्नोतु मित्रविन्दादिषु पुनः साप्तदश्यविधानं विकल्पापवादरूपं साप्तदश्यनियमार्थमस्तु। एवं सर्वस्याऽपि साप्तदश्यवाक्यस्य प्रवृत्तिविशेषकरत्वसम्भवे किमित्यन्यतः सिद्धथत्यर्थे केवलाभ्युदयार्थविधित्वमभ्युपगम्यते।

अनारभ्याधीतसाप्तदश्यस्य नवौ पशौ करोतीति दृष्टान्तेन विकल्पद्वारा केवलादृष्टार्थत्वं साप्तदशोदाहरणस्य विघटनोपसंहारः।

नन्वनारभ्याधीतसाप्तदश्यस्य सौर्यादिगामित्वे सौर्यादिष्वतिदेशात्पाञ्चदश्यं न प्राप्नुयात्, उपदेशेनाऽतिदेशबाधात् इति चेत् सत्यमन्यत्र तथैव। इह तु सौर्यादिषु साप्तदश्यं पाञ्चदश्यातिदेशबाधनेन स्वयं नियतत्वं प्राप्नोति चेत्मित्रविन्दादिषु पुनः साप्तदश्यविधानं व्यर्थं स्यात् तथैव मित्रविन्दादिष्वपि साप्तदश्यनियमलाभोपपत्तेः। अतोऽनारभ्याधीतं साप्तदश्यवाक्यं स्वस्य मित्रविन्दादिगतौ स्ववैयर्थ्यम्, सौर्यादिगतौ पाञ्चदश्यातिदेशबाधेन प्राकरणिकसप्तदश्यवाक्यवैयर्थ्यंचालोच्य, सौर्यादिकं गत्वा तत्र पाञ्चदश्यातिदेशञ्च सोढ्वा, तेन सह विकल्पमनुमन्यते, यथा "न तौ पशौ करोतीति पशावाज्यभागप्रतिषेधस्तत्र चोदकादाज्यभागयोरप्राप्तावप्रसक्तप्रतिषेधतया स्ववैयर्थ्यं चोदकात्तयोः प्राप्तौ सर्वथा तयोः प्रतिषेधे च तत्प्रापकस्य चोदकस्याप्रामाण्यापत्तिं चालोच्याज्यभागातिदेशं सोढ्वा तदनुष्ठानेन सह विकल्पमङ्गीकरोति। एवं हि तत्र चोदक-निषेधशास्त्रयोरिवात्राऽपि प्राकरणिकाप्राकरणिकसाप्तदश्यवाक्ययोः प्रवृत्तिविशेषकरतया साफल्यं भवति। तस्मात् केवलादृष्टार्थत्वे साप्तदश्यवाक्योदाहरणमयुक्तमिति भावः ॥३९॥

इति एकोनचत्वारिंशश्लोकस्य व्याख्या।

---

अथ चत्वारिंश्लोकस्य व्याख्या।

यदुक्तमपूर्वविधिलक्षणे सर्वोद्देश्यानुवृत्तिरप्राप्तेरात्यन्तिकत्वमिति पक्षे "त्रेधा तण्डुलान्विभजेदि"तिविधावव्याप्तिः, तत्र दार्शिकहविषां पूर्वदेवताभ्योऽपनयस्य, यक्ष्यमाणदेवताभ्यो विभागस्य वा विधौ तेषां मध्ये तण्डुल-दधि-शृतेषु देवतापनय-विभागयोरर्थसिद्धत्वेनोपांशुयाजाज्यमात्रे विधेश्चारितार्थ्यस्य वक्तव्यत्वादिति। तदाक्षिपति—

नाऽस्त्येवोपांशुयाजो दधिशृतसहितः पौर्णमास्यां विधानात्
तद्वश्यं दर्शतन्त्रे पठितमपि ऋगाम्नातयाज्यानुवाक्यम्।
कृत्वा चिन्तैव तस्य क्वचिदधिकरणे दार्शिकेष्वस्तितोक्तिः
तत्त्रेधा तण्डुलानित्यनुवदनमतस्तत्र नाऽव्याप्तिरस्ति ॥४०॥

दधि-शृतवत्याममावास्यायामुपांशुयाजो नास्त्येव "उपांशु पौर्णमास्यां यजन्निति पौर्णमास्यां तद्विधानात्। न च वाच्यं बह्वृचब्राह्मणे अमावास्याप्रकरणे उपांशु-

याजयाज्यानुवाक्यायुगलपाठात्तस्यामपि सोऽस्तीति, प्रधानस्योपांशुयाजस्य पौर्णमासीकालत्वे तदङ्गतया तत्परतन्त्रस्य मन्त्रस्याऽन्यत्र पठितस्याऽपि तद्गामित्वात्। अयञ्चार्थः सूत्रकृतैव दशमाध्यायेऽमावास्यायामुपांशुयाजः स्यादुपांशुयाजमन्तरा यजतीत्यविशेषश्रवणादिति पूर्वपक्षं कृत्वा "अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगान्मन्त्रो यथा प्रधानं स्यात्" १०।८।१७।५४ इति सिद्धान्तसूत्रेण स्पष्टीकृतः। प्रपञ्चितं चैतच्चतुर्थश्लोकव्याख्याने[1]। नाप्येतच्छङ्कनीयममावास्यायामुपांशुयाजमङ्गीकृत्याऽपि उपांशुयाजो वचनाद्यथाप्रकृतीत्याद्यधिकरणप्रवृत्तिर्दृश्यते-इति, तस्य न्यायव्युत्पादनार्थं कृत्वा चिन्तारूपतया नेतव्यत्वात्—अन्यथा पौर्णमास्यां यजन्नित्याहृत्य, पौर्णमासीकालत्वविधायकश्रुतिव्याकोपप्रसङ्गात्। उदाहृतश्रुत्यवलम्बनाऽनुपदोदाहृतदाशमिकाधिकरणविरोधप्रसङ्गाच्च। तस्मात् "त्रेधा तण्डुलान्विभजेदि"त्ययं वक्ष्यमाणस्य तण्डुलानां मध्यमादिभावेन विभागस्याऽनुवाद इत्येव युक्तम्। आकरग्रन्थेपूक्तरीत्याऽनुवादत्वपरिहाराय दार्शिकहविःसामान्ये लक्षणामङ्गीकृत्य पूर्वदेवतापनयस्य वक्ष्यमाणदेवताभ्यो विभागस्य वा विधेयत्वाभ्युपगमेऽपि तस्य तण्डुल-दधि-शृतेष्वर्थसिद्धत्वेनो[2]पांशुयाजाज्यस्याऽभावेन च विधेयालाभेनाऽनुवादत्वापरिहाराच्च। तस्मात् त्रेधा तण्डुलानितिविधौ सर्वोद्देश्यानुवृत्तप्राप्त्यभावेनाऽव्याप्तिवर्णनमयुक्तमिति भावः ॥४०॥

इति चत्वारिंशश्लोकस्य व्याख्या।

---

अथैकचत्वारिंशश्लोकस्यावतारिका।

एवमभ्युदयेष्टिवाक्ये दार्शिकहविषां पूर्वदेवताभ्योऽपनयस्याऽपेक्षामङ्गीकृत्य, तस्याऽर्थसिद्धत्वाद्विधिवैयर्थ्यमुक्तम्। इदानीन्तदपेक्षैव नाऽस्तीति नितरां तस्य वैयर्थ्यमाह—

प्रत्येकं द्रव्ययुग्मे न पटु घटयितुं देवतां वाक्यमेकम्
सारूप्यस्याऽपि भङ्गः पशुफलवचसा केवलं तद्विधाने।
तस्मात्तावद्विशिष्टान्वयिनि सति विधावार्त्तिवाक्योक्तरीत्या
वक्तव्यो देवतानामपनयनविधिः कल्पनं [3]क्वोपयुक्तम् ॥४१॥

भवेदिह दार्शिकहविषां पूर्वदेवतापनयापेक्षा, यदि तेषां देवतान्तरसंयोजनपराणि मध्यमादिवाक्यानि स्युः, तदेवासिद्धम्। तथात्वे[4] वाक्यभेदः प्रसज्येत। तथा हि—मध्यमादिवाक्यानां देवतान्तरसंयोजनपरत्वे द्रव्येष्वग्न्यादिदेवताविधानम्, देवतासु दातृत्वादिगुणविधानञ्चेति त्रिष्वपि वाक्येषु तावदेको वाक्यभेदः, दधि-शृतवाक्ययोः स्थविष्ठानां शृतं चाधिकरणं विधेयमित्यपरो वाक्यभेदः, तथा स्थविष्ठानामणिष्ठानां चरुभावोऽपि विधेयमित्यन्यो वाक्यभेदः।

---

[1] अस्माभिरिति शेषः।
[2] नापि नियेति मु. पु. पा.
[3] मु. पु. क्वापीति पा.
[4] हि. इत्यधिको मु. पु.

वाक्यभेदपरिहारः ।

स्यादेतत्—नैते वाक्यभेदाः प्रसरन्ति । तथा हि दातृप्रदातृशिपिविष्टशब्दानां श्रुत्यैवाऽग्न्यादिपदसामानाधिकरण्यात् पदद्वयप्रतिपादितं विशिष्टदेवताकारकमेकमेव विधेयम् । न तु देवतास्तद्गुणाश्च प्रत्येकं विधेयाः । अभ्युदयेष्टिप्रकरणे "सह श्रपयती" तिवचनमस्ति । तदेतद्देवतैक्याद्दधि-स्थविष्ठयोः शृताणिष्ठयोश्च सहपाकविषयम् ततश्च स्थविष्ठानामणिष्ठानाञ्च तण्डुलानामल्पत्वाद्दधिशृतयोर्भूयस्त्वाच्च तण्डुलानां चरुत्वं दधिशृतयोरधिकरणत्वं चाऽर्थात्प्राप्नोति । अर्थप्राप्तञ्च तत्सर्वमनूद्यते, तत्तद्गुणविशिष्टमेकदेवताकारकं विधीयते, मध्यमानां तण्डुलानामग्निर्दाता देवता, स्थविष्ठानां दध्नश्चेन्द्रः प्रदाता अणिष्ठानां शृतस्य च विष्णुः शिपिविष्ट इति । अतो नैवं वाक्यभेदावकाश इति चेत् ।

एकं सन्धित्सतोऽपरं प्रच्यवत इति न्यायेन पूर्वोक्तरीत्या वाक्यभेदपरिहारेऽपि

प्रकारान्तरेण वाक्यभेदकथनम् ।

सत्यमित्थं सह श्रपणे वाक्यान्तरमङ्गीकृत्य कल्पने उक्तप्रकारेण वाक्यभेदो नाऽस्तीति, तथाऽपि प्रकारान्तरेण वाक्यभेदः स्यादेव । दधिवाक्ये दध्नि स्थविष्ठेषु शृतवाक्ये शृते क्षोदिष्ठेषु च प्रत्येकं देवतासंयोजनात् । इयांस्तु भेदः-सप्तम्यर्थविवक्षयाऽधिकरणत्वविधिपक्षे[2] स्थविष्ठे देवता, प्रणीताकार्ये च दधिविधेयमिति, क्षोदिष्ठेषु देवता प्रणीताकार्ये शृतं च विधेयमिति च विधेयभेदाद्वाक्यभेदः । द्वितीयपक्षे[3] स्थविष्ठेषु दध्नि च, क्षोदिष्ठेषु शृते च देवताविधेयेत्युद्देश्यभेदाद्वाक्यभेद इत्युभयत्राऽप्यविशिष्टो विध्यावृत्तिलक्षणो वाक्यभेदः ।

देवतान्तरसंयोजनपक्षे पशुकामेष्टिगतमध्यमादिवाक्यसारूप्यभंगवर्णनम् ।

अपि चाऽत्र मध्यमादिवाक्येषु दार्शिकहविषां देवतान्तरसंयोजनविधिरिति पक्षे पशुकामार्थमध्यमादिवाक्यसारूप्यभङ्गः प्रसज्येत । एवं हि काम्येष्टिकाण्डे श्रूयते— "यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये मध्यमास्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्, ये स्थाविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमि"ति । तत्र पशुकामेष्टिविधौ मध्यमादिवाक्येषु द्रव्यदेवताविशिष्टकर्मविधिरङ्गीकृतो ९।४।११ नवमे, तथात्रापि तथाभूतकर्मविध्यङ्गीकारे । तस्मादिहाऽप्यवाक्यभेदाय, पशुकामेष्टिवाक्यसारूप्यसामञ्जस्याय च तत्तद्द्रव्यविशेषविशिष्टकर्मविधिरेवाऽङ्गीकर्त्तुं युक्तः ।

ननु तत्र प्रकृतकर्मप्रत्यभिज्ञानाभावादगत्या विशिष्टविधिरङ्गीकृतः, इह प्रकृते दर्शे[1] कर्मणि प्रत्यभिज्ञायमाने नैमित्तिकदेवतान्तरमात्रविधानेन लाघवे सम्भवति विशिष्टविधिगौरवमङ्गीकर्तुं न युक्तमिति चेन्न, आर्तिवाक्यन्यायेन प्रकृतकर्मप्रत्यभिज्ञानमनादृत्याऽप्यवाक्यभेदाय, विशिष्टकर्मान्तरविधेरेवाङ्गीकर्तुमुचितत्वात् ।

---

[1] दर्श इति. मु. पु. पा. [2] पूर्वस्मिन् पक्षे,

[3] सहश्रपणस्यार्ऽथिकत्वेनानुवादपक्षे

हविरार्तिवाक्ये पूर्वोत्तरपक्षाभ्यां कर्मान्तरप्रतिपादनम् ।

तथा हि—दर्शप्रकरण एव श्रूयते "यस्योभयं हविरार्त्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि" ति वाक्ये आर्तदोहप्रतिनिधित्वेन पञ्चशरावद्रव्यमात्रं कर्मणः साधनं विधीयते, न द्रव्यदेवताविशिष्टकर्मान्तरम्, गौरवादिति षष्ठे "पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यादि" ति ६।४।९।२७ सूत्रेण पूर्वपक्षं कृत्वा सिद्धान्तितम्–प्राप्ते कर्मणि पञ्चशरावद्रव्यम्, इन्द्रो देवतेति द्वयं विधातुं न शक्यते, वाक्यभेदप्रसङ्गात् । न च सान्नाय्यदेवताया इन्द्रस्य स्थानापत्त्या प्राप्तिसम्भवादिन्द्रशब्दोऽनुवाद इति वाच्यम् । सान्नाय्ये महेन्द्रस्याऽपि कदा चित्सम्भवेनेन्द्रस्य नित्यप्राप्त्यभावात् तस्मान्नित्यतयेन्द्रस्याऽपि विधेयत्वाद्वाक्यभेदाय द्रव्यदेवताविशिष्टदोहार्त्तिनिमित्तककर्मान्तरविधिरेवाङ्गीकर्त्तव्यः—इति ।

एवञ्च द्रव्यार्त्त्यां प्रकृतस्य सान्नाय्ययागस्य द्रव्यापेक्षायां स्फुटायां "यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्सोममपभज्य विश्वजिता यजेते"तिवाक्ये संकल्पमध्ये सत्रन्त्यक्त्वोत्तिष्ठासोः सोमक्रयात्पूर्वं पश्चाच्चाऽविशेषेण प्रायश्चित्तविधायकमिति "साम्युत्थाने विश्वजित्क्रीते विभागसंयोगादि ६।७।७।२५त्यधिकरणे निर्णीते सोमविभागवचनस्य सोमक्रयानन्तरकालोत्तिष्ठासुयजमानकर्त्तृकस्वकीयसोमांशविभागानुवादकत्ववदैन्द्रयाजियजमानोद्देष्टव्यदेवतानुवादकत्वमिति पक्षप्राप्तानुवादत्वाभ्युगमेन कथं चिद्वाक्यभेदस्य परिहर्तुं शक्यत्वेऽपि ऐन्द्रपदस्य विधेयसमर्पकत्वे सम्भवति; निरर्थकपाक्षिकानुवादत्वं न कल्पनीयमिति न्यायमात्रमवलम्ब्यावाक्यभेदाय कर्मान्तरविधावङ्गीकृते किमु वक्तव्यमभ्युदयेष्टिवाक्ये कर्मान्तरविधिरङ्गीकर्त्तव्यः—इति । न हि तत्रेन्द्रसंबन्धस्येवात्र यत्किञ्चिद्द्रव्यदेवतासंबन्धस्य पक्षे प्राप्तिरस्ति । येन दधिवाक्ये श्रृतवाक्ये च प्रत्येकं देवतासंबन्धकृतो वाक्यभेदः कथञ्चिदपि परिह्रियेत, न वा तत्र द्रव्यमात्रविधिपक्षोत्थापकप्रकृतकर्मगतद्रव्याकाङ्क्षानिमित्तद्रव्यापचारानुकीर्त्तनवदिह देवतामात्रविधिपक्षोत्थापकदेवताकाङ्क्षानिमित्तदेवतापचारानुकीर्त्तनमस्ति ।

न च त्रेधा तण्डुलानितिवाक्यस्य देवतापनयविधिपरत्वं स्पष्टम्, येन तद्विधिबलादपनीतपूर्वदेवतानां हविषां देवताकाङ्क्षास्तीति समर्थ्येत, किन्तु तण्डुलशब्दस्य दार्शिकहविःसामान्यलक्षकत्वकल्पनया तद्विभागप्रतियोगिनीनां शब्दानुपात्तानां देवतानां कथंचिद्बुद्धिस्थिरीकरणेन चाऽतिक्लिष्टं कल्पनीयम्, न चैवं कल्पनायां किंचित्कल्पकमस्ति, मध्यमादिवाक्येषु प्रकृतहविषां देवतान्तरविधिरेव तदाकाङ्क्षासिद्ध्यर्थं पूर्वदेवतापनयमपेक्षमाणस्त्रेधा वाक्यस्याऽपि तद्विधायकत्वकल्पक इति चेत् । न । वाक्यभेदप्रसङ्गेन तेषां प्रकृतहविःसंबन्धिदेवतान्तरविधिपरत्वासिद्धेः । देवतापनयविधिबलादेव तेषां देवतान्तराकाङ्क्षया सोढ्वाऽपि वाक्यभेदम्, मध्यमादिवाक्येषु देवतान्तरविधिरभ्युपगम्यत इत्युच्यते चेत्, परस्पराश्रयो नातिवर्तितुं शक्यते ।

ननु मध्यमादिवाक्यानां प्रकृतकर्मसंबन्धिगुणमात्रविधायकत्वे सम्भवति प्रकृतहानम्, अप्रकृतकल्पनम्, विशिष्टविधिगौरवम्, अपूर्वकर्मान्तरकल्पनागौरवञ्चावश्यं

[1] दधिवाक्यभेद इति मु. पु. पा.

परिहरणीयम्। सम्भवति चाऽत्र प्रकृतहविःसंबन्धिदेवतामात्रविधानं यदि, तदा दधिशृतवाक्ययोः प्रतिद्रव्यं एको दोषः, न ह्येकस्माद्दोषाद्बिभ्यता बहवो दोषाः स्वीकरणीयाः। यदि वाक्यभेदोऽवश्यं परिहरणीयस्तदा मध्यमादिवाक्यानां द्रव्य-देवताविशिष्टैकप्रयोगविधायकत्वमस्तु, तत्र चाऽनेकगुणविशिष्टैककर्मविधाविव वाक्यभेदो न प्रसरति, प्रकृतहानमप्रकृतकल्पनमपूर्वकर्मान्तरकल्पनञ्च भवति, प्रकृतस्यैव दर्शकर्मणो द्रव्यदेवताविकारविशिष्टप्रयोगविधानादिति चेत्, तर्ह्यार्त्तिवाक्येऽप्येवमेव कर्मान्तरविधिर्न स्यात्। वस्तुतस्तु तत्रैवाऽऽर्जवेन द्रव्यमात्रविधिः द्रव्यदेवताविशिष्टैकप्रयोगविधिरिति वा कल्पनेन प्रकृतहानादयः परिहर्तुं शक्यन्ते। तत्र द्रव्यमात्रविधिपक्षेऽप्यैन्द्रपदस्य पक्षप्राप्तानुवादकत्वेन वाक्यभेदपरिहारसम्भवात्। इह देवतामात्रविधिपक्षे तत्परिहारासम्भवात्। तत्रैकस्यैव लिङः श्रवणेन विशिष्टैकप्रयोगविधिपक्षस्योपपन्नत्वात्[1]। इह मध्यमादिवाक्यत्रये लिङ्त्रयश्रवणेन तावद्विकारविशिष्टैकप्रयोगविधायकत्वसम्भवात्, अत्र तु विधायकानां लिङामनेकत्वाद्विकाराणाञ्चानेकवाक्यगतत्वेन तावद्विकारविशिष्टैकप्रयोगविधायकत्वकल्पनानवकाशात्। न च मध्यमादिवाक्येष्वेकैकवाक्योदितविकारविशिष्टं प्रयोगत्रयं विधीयत इति युक्तम्, न वा सिद्धान्ताभिमतम्, एकस्मिन्नेव प्रक्रान्ते दर्शप्रयोगे अकालोपक्रमनिमित्तदेवताविकारमात्राभ्युपगमात्। परमार्थतस्तु उभयत्राऽपि प्रयोगविधिपक्षस्तुच्छः, प्रक्रान्तस्य दर्शप्रयोगस्य यावज्जीववाक्येन, कामवाक्येन वा विहितस्य विध्यन्तरानपेक्षित[2]त्वात्, प्रयोगान्तरविधेश्चाऽनभिमतत्वात्। अभ्युदयेष्ट्यधिकरणे प्रक्रान्त एव प्रयोगे देवताविकारोपपादनात्। दधिशृतविशिष्टप्रयोगस्याऽसन्नयतानुष्ठातुमशक्यत्वेन सान्नाय्यसंयोगात्सन्नयतः स्यादि" ६।५।६।२१ त्यधिकरणेऽसन्नयतोऽप्यभ्युदयेष्टिं व्यवस्थापितवता सिद्धान्तिना मध्यमादिवाक्येषु तत्तद्देवतान्वितदधिशतविशिष्टप्रयोगविधेरङ्गीकर्तुमशक्यत्वाच्च। दधिशृतयोर्देवतान्तरविधानार्थमनुवाद्यत्वे हि पक्षप्राप्तयोर्यथाप्राप्तिपाक्षिकानुवाद इत्यसन्नयतोऽपि सा स्यात् न तु विधेयत्वे[3], न च वाच्यं विधेयतत्तद्देवतान्विताभ्यां यथाप्राप्त्यनुवादाभ्यां दधिश्रृताभ्यां विशिष्टः प्रयोगो विधेयः स्यादिति। विधिविषयविशिष्टान्तर्गतस्य विधेयसंदष्टस्य दध्नः शृतस्य सोमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणामि"त्यत्र व्रीहिविशेषणस्येवाऽनुवाद्यत्वायोगात्। तस्मान्मध्यमादिवाक्येषु प्रक्रान्ते दर्शकर्मणि गुणविधिरेष्टव्यः।

### गुणविधिस्वीकारेण कर्मान्तरविधिनिरासे तुल्यन्यायतयाऽऽर्त्तिवाक्येऽपि गुणविधिशङ्का —

ननु तर्हि गुणविधिरेवास्तु यस्य हविर्निरुप्तमित्याद्यधिकारिविशेषणादकालोपक्रान्तप्रकृतकर्मप्रत्यभिज्ञाने जाग्रति तत्र गुणमात्रविधानमतिलङ्घ्य, गुणविशिष्टकर्मान्तरविधिकल्पनायोगात्। ज्ञाते चैवं प्रत्यभिज्ञाबलाद्गुणविधितात्पर्ये तदनुरोधेनाऽऽपतन्ननेकद्रव्योद्देशेन देवतागुणविधानप्रयुक्तो वाक्यभेदो न दोष इति चेत्, एवं

[1] उपनन्तरत्वादिति मु. पु. पा. [2] अनपेक्षितत्वादिति, मु. पा.

[3] नेत्यधिकः पा.

तद्वार्त्तिवाक्येप्येवमेव गुणमात्रविधिः स्यात्, तत्रापि "यस्योभयं हविरि"त्यधिकारि-विशेषणतः सान्नाय्यहविष्कप्रकृतकर्मप्रत्यभिज्ञानात्। यत्तु-हविर्नाशे कर्मण एव नाशा-त्तत्र प्रकृतकर्मप्रत्यभिज्ञा नाऽस्तीति। तत्तुच्छम्-उपात्तहविर्नाशे हविरन्तरोत्पादनेन कर्मानुष्ठानस्य "शेषादवदाननाशे स्यात्तदर्थत्वादि"६।४।१।१ त्यधिकरणे व्यवस्थापित-त्वेन "यस्य सर्वाणि हवींषि नश्येयुः दुष्येयुः, अपहरेयुर्वा आज्येन ता देवताः परिसंख्याय यजेते"आप. श्रौ. सू. तिश्रवणेन च कर्मलोपाप्रसक्तेरकालकृतमिति प्रसिद्धेरत्राप्यकालो-पक्रान्तकर्माभावेन प्रत्यभिज्ञानाभावस्य वक्तुं शक्यत्वात्। तस्मादार्तिवाक्येष्वपि कर्मान्तरविधिरेव वक्तव्य इति नास्ति तत्र दार्शिकहविषां पूर्वदेवतापनयस्योपयोगः, कर्मान्तरविधौ तण्डुलादीनामुपादेयत्वेन प्रकृतग्रहणे कारणाभावात्। ये मध्यमा इति यच्छब्दस्य सतोऽपि द्रव्यदेवताविशिष्टकर्मविधौ तण्डुलानामुद्देश्यत्वापादनासमर्थतया पशुकामेष्टिगतमध्यमादिवाक्यश्रुतयच्छब्दस्येवाऽविवक्षितार्थताया एव प्राप्तेः। अत एवातञ्चनाभ्यासलिङ्गसमर्थने कर्मान्तरविधिपक्षे प्रकृतद्रव्यग्रहणाभावोऽभ्युदयेष्ट्य-धिकरण एव वर्णितः।

आतञ्चनाभ्यासलिङ्गेन कर्मान्तरविधिपक्षे प्रकृतद्रव्यग्रहणाभावनिरूपणेना-धिकरणार्थनिरूपणम्।

एवं हि तत्–यदि बिभीयादभिमोदेष्यतीति, महारात्र एव हवींषि निर्वपेत्, फली-कृतैस्तण्डुलैरुपासीत, अर्धं दधि हविरातञ्चनार्थं निदध्यात्, अर्द्धं नु यद्यभ्युदियात्तेना-तञ्च्य प्रचरेत्, यदि न,अन्येद्युस्तेन[1] ब्राह्मणं भोजयेदि"ति। अस्याऽर्थः-यः प्रवृत्तदर्श-तन्त्रो यजमानः किमद्य चतुर्दश्यामेवाऽमावास्याभ्रान्त्या दर्शः प्रारब्धः किं चन्द्रमा अभ्यु-देष्यतीति शङ्कया भयं प्राप्नुयात्स महत्यामेव रात्रौ व्रीहीन्निरुप्याऽवहत्य, फलीकृत्योदीक्ष-माण आसीत, सायन्दोहसंपादितञ्च दधि द्वेधा विभज्य तदर्धं मुख्यकाले करिष्यमाणस्य दर्शस्याऽर्थे तत्पूर्वदिनसायंदोहं सम्पाद्य दध्यातञ्चनाय निदध्यात्, अर्धान्तरं तदर्थं न निदध्यात्। एवं कृते यद्यभ्युदयः स्यात्तदा मुख्यकाले दर्शप्रारम्भानन्तरमातञ्चनार्थं निहितेनार्धेन दध्ना सायं दुग्धे-पयस्यातञ्चनं कृत्वा दध्युत्पाद्यान्येद्युर्दधियागं निर्वर्त्त-येत्। यदि नाभ्युदयस्तदानीमातञ्चनार्थं[2]निहितादर्धादन्येनार्धेन तदर्थनिर्वृत्तेस्तदर्थं दध्युत्पादनानपेक्षणेनाऽतञ्चनार्थं निहितमर्धं ब्राह्मणभोजनेन प्रतिपादयेत्-इति। तदे-तदातञ्चनाभ्यासदर्शनं सिद्धान्तलिङ्गत्वेन वर्णितम्। यदि कर्मान्तरमभ्युदयेष्टिः स्यात् तदा पशुकामेष्टाविव दधिशृतयोरधिकरणत्वेन प्रणीताकार्यविधानादुपादेयत्वेन च प्रकृतग्रहणे प्रमाणाभावात्, लौकिक एव दध्नि पयसि च श्रपणं कृत्वा, सायंदोहे-नाकालकृतेनाऽपि प्रायश्चित्तनिर्हृतकालापराधदोषेण मुख्यकाले दर्शः कर्त्तव्य न दध्य-न्तरमुत्पादनीयम्। यदि त्वकाले प्रक्रान्तमेव दर्शकर्म देवताविकारयुक्तं सदभ्युदयेष्टिः स्यात् तदा तदर्थं कृतेन दध्ना तस्यैवाऽनुष्ठितत्वान्मुख्यकालकर्त्तव्यदर्शार्थमवश्यं दध्यन्त-रमुत्पाद्यमिति, अर्थवदातञ्चनम्। तत्राऽमुख्यकालकृतसायन्दोहार्धेनैवाऽतञ्चनं कार्यमित्येतावान्विशेषो विधीयत इति।

[1] प्रानरेतेन इति. क्वा. पा.।

[2] दर्शनिर्वृत्तेः

### शंङ्का-समाधानाभ्यां कर्मान्तरपक्षस्य समर्थनम् ।

नन्वेवं सति शान्तिकर्मणि वेतालोदयः कर्मान्तरविधिपक्षे प्रकृतग्रहणप्रमाणाभावप्रदर्शनार्थमातञ्चनाभ्यासलिङ्गमुपवर्णयता त्वयैव कर्मान्तरविधौ लिङ्गानुपपत्तिरुद्घाटिता। अतः कर्मान्तरविध्युपगमो न युक्त इति चेत्। उच्यते-आतञ्चनाभ्यासलिङ्गं समर्थयमानेन सिद्धान्तिना कर्मान्तरविधिपक्षे प्रकृतग्रहणाभावः समर्थित इत्येतावदस्माभिरिहोपन्यस्तो न त्वातञ्चनाभ्यासस्य सिद्धान्तलिङ्गत्वमनुमोदितम्। अकालकृतदध्नः कर्मानर्हतयाप्यातञ्चनाभ्यासोपपत्तेः। प्रायश्चित्तेनाकालकृताग्निप्रणयन-देवतापरिग्रहादिप्राप्तापचारनिर्हरणवदकालकृतदध्नः कर्माङ्गत्वमपि तेन कृतमित्यत्र प्रमाणाभावात्। न हि स्तेयप्रायश्चित्तेन स्तेयदोषनिर्हरणवत्स्तेयलब्धद्रव्यस्य कर्मार्हत्वमपि क्रियते। एवं कर्मान्तरविधिपक्षे प्रकृतद्रव्यग्रहणं नाऽस्तीति सिद्धान्त्यभिमानमनुसृत्य देवतापनयविधेरनुपयोग उक्तः।

वस्तुतस्तस्मिन्नपि पक्षे प्रकृतद्रव्यग्रहणनियमोऽस्त्येव यतस्तल्लिङ्गमेव "यदि बिभीयादि"त्यादिवाक्ये मध्यमादिवाक्ये च जागर्त्ति। तथाहि-"फलीकृतैस्तण्डुलैरुपासीते"ति फलीकरणपर्यन्तमेव कृत्वा तण्डुलभावविनाशकं पेषणमकृत्वाभ्युदयसदसद्भावनिर्णयपर्यन्तं प्रतीक्षणविधानादिदं ज्ञायते मध्यमादितण्डुलविभागापेक्षायामभ्युदयेष्टयामेत एव तण्डुला इति। अन्यथा पेषणात्प्रागेव प्रयोगमवस्थाप्य, प्रतीक्षणमदृष्टाथ स्यात्। तथाऽऽतञ्चनार्थस्य दध्यर्धस्याऽभ्युदयाभावपक्ष इव तदन्यस्य दध्यर्द्धस्याभ्युदयपक्षे प्रतिपत्त्यभिधानादिदं ज्ञायते अभ्युदयेष्ट्यां तदेवान्यदर्धं दधि इति। अन्यथाऽभ्युदयाभावपक्षे दध्यन्तरोत्पादनस्याऽनपेक्षितत्वादातञ्चनार्थं दध्यर्धस्य प्रतिपत्त्यपेक्षावदभ्युदयपक्षे तदितरार्द्धस्य लौकिकदधिसाध्यायामभ्युदयेष्टयां दध्यन्तरोत्पादननिर्वर्त्यमुख्यकालदर्शे चाऽनुपयोगात्प्रतिपत्त्यपेक्षाऽस्तीति तत्प्रतिपत्तिरप्युपवर्ण्येत।

तथा"विष्णवे शिपिविष्टाय शृते चरुमि"ति शृतपदप्रयोगात् ज्ञायतेऽभ्युदयेष्ट्यां वैदिकप्रसिद्धया रूढ्या शृतशब्दवाच्यः प्रातर्दोह एव पयः, न तु लौकिकं पय इति। अन्यथा "आदित्यः प्रायणीयः पयसि चरुरि"त्यत्रेव पयःशब्द एव प्रयुज्येत।

### पशुकामेष्टौ लौकिके पयसि शृतपदप्रयोगदर्शनात्<br>श्रृतशब्दस्य वैदिक रूढिर्न सम्भवतीति शङ्का निरासौ।

ननु पशुकामेष्टौ लौकिकपयःसाध्यायामपि श्रृतपदं श्रूयते। सत्यम् तत्र शृतशब्दः श्रपणवतो लौकिकपयसो लक्षणार्थं इति सूत्रकृतैवोक्तं पशुकामेष्ट्यधिकरणे "लक्षणार्था शृतश्रुतिरि"९४।१२।४४ति। न चेह लक्षणायां प्रमाणमस्ति प्रकृतस्य शृतशब्दमुख्यार्थस्य सम्भवात्। ननु कर्मान्तरार्थद्रव्याणां कर्मान्तरार्थत्वमयुक्तमिति चेत्। किमेकस्मिन्नपि वा कर्मणि देवतान्तरार्थद्रव्याणां देवतान्तरार्थत्वं युक्तम्। वचनबलाद्युक्तमिति तूभयत्राऽपि तुल्यम्। एवं च कर्मान्तरपक्षेऽप्यातञ्चनाभ्यास उपपन्नः; प्रकृतस्य दध्नः कर्मान्तरे विनियुक्तत्वेन मुख्यकालकर्त्तव्यदर्शे दध्यन्तरापेक्षासत्त्वात्।

---

[१] विहितादिति. मु. पु.

एवं तर्हि देवतापनयविधेरनुपयोगः प्रत्युद्धृतः स्यात्, दार्शिकद्रव्याणां कर्मान्तरेऽभ्युदयेष्टौ विनियोगार्थं दार्शिकदेवतापनयविधेरपेक्षितत्वात्। अर्थसिद्धविधेर्नास्त्युपयोग इति चेत्। एवं पूर्वश्लोकप्रदर्शितार्थसिद्धत्वहेतुनैवात्राऽप्यनुपयोगवर्णनायामत्र श्लोके समर्थितस्य कर्मान्तरत्वस्याहेतुतया तद्वैयर्थ्यप्रसङ्ग इति चेत्। उच्यते—पूर्वश्लोके तण्डुलादिष्विवोपांशुयाजाज्ये देवतापनयस्यार्थसिद्धत्वाभावात् तत्र तद्विधेरर्थवत्त्वमित्याशङ्काऽमावास्यायामुपांशुयाजाभावसमर्थनेन निराकृता। अत्र तु तस्यामभ्युपगम्याप्युपांशुयाजमभ्युदयेष्टेस्ततः कर्मान्तरत्वसमर्थनेन सा निराक्रियते। कर्मान्तरत्वे हि तत्रोपांशुयाजाभावेन तद्विषयतया देवतापनयविधेरर्थवत्ता न भवतीति भावः।

इत्येकचत्वारिंशश्लोकस्य व्याख्या

———

अथ द्विचत्वारिंशश्लोकस्यावतारिका

एवं तर्ह्यभ्युदयेष्टेः कर्मान्तरत्वेऽपि तद्देवताभ्यः प्रकृतहविषा विभजनविधिः स्यादेव, उपांशुयाजाज्ये तस्याऽर्थवत्त्वात्। कर्मान्तराभ्युदयेष्टावुपांशुयाजाभावेऽपि प्रकृतहविरन्तर्गतोपांशुयाजाज्यस्याऽभ्युदयेष्टिदेवताभ्यो विभजनोपपत्तेरित्याशङ्कामुद्भाव्य निराकरोति—

तर्हि स्याद्देवताभ्यः प्रविभजनविधिस्तत्र तद्गामिनीभ्यो
न स्यादेवं हि सर्वास्वपि दधिशृतयोर्देवतास्वन्वयः स्यात्।
तस्मिन्वाक्ये विधेयं विभजनमिह चेद्वक्ष्यमाणप्रकारम्
न स्यादौपांशुयाजे हविषि तदिति तत्सर्वथा व्यर्थमेव ॥४२॥

यदि प्रकृतहविषामविशेषेणाऽभ्युदयेष्टिदेवताभ्यो विभजनमभिमतम्, तदा दधि-शृतयोरपि सर्वदेवतान्वयः स्यात्। उत्तरत्र तयोर्विशिष्य सङ्कीर्त्तनं स्थविष्ठैरणिष्ठैश्च तण्डुलैः सह श्रपणनियमार्थं स्यात्। अथ वक्ष्यमाणप्रकारेण विभजनविधिः- "त्रेधा तण्डुलान्विभजेदि"ति वाक्येऽङ्गीक्रियते। तथा च दधिशृतयोर्वक्ष्यमाणदेवताविशेषव्यवस्था न भज्यत इति मतम्, तदोपांशुयाजाज्ये वक्ष्यमाणो देवतान्वयप्रकारो नाऽस्तीति विभजनवाक्यं तद्विषयत्वेनाऽर्थवन्न भवेत्। तण्डुल-दधि-शृतेषु तु तद्वाक्यैरेव तथा विभजनं सिद्धमिति सर्वथा व्यर्थमेव त्रेधा तण्डुलानितिवाक्यम्। अतस्तण्डुलशब्दलक्षणाक्लेशेऽपि तद्वैयर्थ्यानपायात्तस्य तथाश्रुतानुवादकत्वमेव युक्तमिति, तत्र विध्यभावात्तद्विध्यव्याप्तिवर्णनमप्यसमञ्जसमिति भावः ॥४२॥

इति द्विचत्वारिंशश्लोकस्य व्याख्या

———

अथ त्रयश्चत्वारिंशश्लोकस्यावतारिका ।

एवमाक्षिप्तेष्वपूर्वविध्यादीनां लक्षणेषु, उदाहरणेषु च लक्षणानि व्यवस्थापयितुं नियमपरिसंख्यालक्षणसंग्राह्यसन्देहपदानि निर्द्धारयन्नेवलक्षणव्यवस्थापनं प्रतिजानीते-

नियम-परिसंख्ययोः लक्षणव्यवस्थापनम् ।

एवं प्राप्ते भणामस्त्रिविधविधिजुषां लक्षणानां विभागम्
दृष्टार्थो यः स सर्वो भवति नियम इत्यभ्युपेत्य व्यवस्थाम् ।
अर्थाद्वा शब्दतो वा स्वविषयगलितादेवकारान्नञो वा
यःस्यात्कस्याऽपि बाधः स भवति परिसंख्येति रीतिश्च कृत्वा ॥४३॥

प्रागग्रताग्न्यादिविधीनां दृष्टार्थानामप्राप्तविषयत्वादपूर्वविधित्वमङ्गीकृत्य, तेषु लक्षणाव्याप्तिरुक्ता । पूतीकाघारमन्त्रनियमविध्यतिव्याप्त्युद्भावनेन तत्समानन्यायतया सर्वेषामपि[1] दृष्टार्थानां-नियमविधीनां नियमविधित्वमपि सूचितम् । तथा निषेधरूपविधिष्वपूर्वविधिलक्षणाऽव्याप्त्युद्भावनेन "दीक्षितो न जुहोती"त्यादीनामपूर्वविधित्वं सूचितम् । तथा निषेधमात्रस्य परिसंख्यात्वाभ्युपगमोऽप्यसूचि । तेनाऽत्र नियम-परिसंख्यालक्षणसंग्राह्यासंग्राह्यसन्देहप्राप्ताविदमुच्यते ।

नियमविधिलक्षणस्य प्राप्तविषयत्वाप्राप्तविषयत्वाभ्यां द्वैविध्यनिरूपणम् ।

अप्राप्तविषयः, प्राप्तविषयो वा यो विधिर्दृष्टार्थः, स सर्वोऽपि नियमविधिरित्यभ्युपगच्छामः[2] । अप्राप्तविषयेऽपि तस्मिन्नियमादृष्टाभ्युपगमावश्यंभावात् । तथा हि-दृष्टार्थप्राप्तविधिविषयो द्विविधः-विधिं विना स्वतः प्रसिद्धदृष्टप्रयोजनजनकसामर्थ्यः, विधिबलप्रसादनियततज्जननसामर्थ्यश्च, त"त्रौदुम्बरो यूपो भवती"त्याद्यः । प्रकृतौ यूपे पक्षप्राप्तोऽप्युदुम्बरः खदिरादिनियमविधिना निवर्त्तित इति, विकृतावपि चोदकात् खदिरादेरेव प्राप्त्या प्रतिप्रसवविधिविषयन्यायेन सोमापौष्णपशावप्राप्तैवोदुम्बरजातिरष्टाश्रित्वादिविशिष्टयूपाकृतिजनने स्वत एव प्रसिद्धसामर्थ्या च । उत्तराघार-शाखाछेदन-मन्त्रोत्करपरिध्यादिर्द्वितीयः । विधिबलादेव हि हिरण्यगर्भे मन्त्रस्य गौणवृत्तिकल्पनया इन्द्रप्रकाशने "इषेत्वे"ति मन्त्रस्य छिनद्मीत्यध्याहारेण शाखाछेदनप्रकाशने, उत्करस्य पृथ्वग्रताकरणेन वाजिनपात्रधारणे, परिधेः स्थविष्ठग्रहणेन पशुनियोजने च सामर्थ्यं प्रसाधनीयम् । ततश्च तद्द्वैविध्यात्तद्विषयो विधिरपि द्विविधः । एवं द्विविधेऽप्यप्राप्तफलके दृष्टार्थविधौ नियमादृष्टाभ्युपगम आवश्यकः, चोदकप्राप्तखदिरादिनाऽपि सम्भवति यूपादिस्वरूपमात्रे, उदुम्बरादिनियमविधानस्यानर्थक्यात् । अत एवाहुः—"दृष्टार्थेष्वपि सर्वेषु नियमादृष्टमिष्यत" इति । न्या० र० अं०

---

१ दृष्टार्थविधीनामिति मु. पु. पा.

२ शङ्करभट्टप्रभृतिभिः, नारायणशास्त्रिपर्यन्तैः दृष्टार्थकं नियमविधिलक्षणमिति दीक्षितेन्द्रैरुक्तस्य लक्षणस्य निरासे महानभिनिवेशो दृश्यते । तदस्य समग्रस्य सन्दर्भस्यापर्यालोचननिबन्धनम् । अधिकन्तु भूमिकायां द्रष्टव्यम् ।

अन्यथाऽवहननादिनियमविधावपि नियमादृष्टकल्पनं न स्यात्। नानोपायसाध्ये दृष्टप्रयोजने विशिष्टस्य कस्य चिन्नियमोऽनर्थकः, तस्य क्रत्वपूर्वोपयोगित्वमपि तज्जन्यं द्वारं विनाऽनुपपन्नम्, क्रत्वपूर्वस्य प्रधानानुष्ठानानन्तरभावित्वादिति'एतदेव हि तेषु नियमादृष्टकल्पनायां बीजम्, तदिहापि तुल्यम्। नियमादृष्टाभ्युपगमे च नियमविधित्वमेव प्राप्नोति, अत एव पूतीकविधेः पक्षप्राप्तविषयत्वाभावेऽपि नियमविधित्वम्। "सर्वे द्रव्यविधयो नियमविधय" इत्याकारेण सकलमीमांसकप्रवादश्च।

अस्मिन्नर्थे भाष्यतन्त्ररत्नादीनामानुकूल्यमिति प्रतिपादनम्।

अपि च नावमिके पत्नीसंयाजाधिकरणे "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इत्यस्य भाष्यादिषु यन्नियमविधित्वमुक्तम्, तदप्यप्राप्तस्यैव पत्नीसंयाजान्तत्वस्य दृष्टार्थतामात्रेण, न तु तस्य पाक्षिकप्राप्त्या, तदसम्भवात्। तथा हि-यद्यपि द्वादशानामह्नां सहप्रयोगवचनात्पूर्वपूर्वमहः कस्मिंश्चित्पदार्थेऽवस्थाप्य, परं परमुपक्रमितव्यम्। तथाऽपि पत्नीसंयाजेष्ववस्थापनं पक्षेऽपि न प्राप्नोति, उपांश्वादि-हारियोजनपर्यन्तः सोमयागो ह्यहःशब्देनोच्यते। यथोक्तं तंत्ररत्ने"ज्योतिष्टोमेऽहःशब्देनोपांश्वादि-हारियोजनपर्यन्तः सोमयागः परिच्छिन्नः। इहापि द्वादशाहे एवं द्रष्टव्य" इति। तथा च सहत्वसिद्ध्यर्थं हारियोजनानन्तरमेवाऽवस्थापनं प्राप्नोति, यदि तु "वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रमन्यकालत्वादवभृथादीन्युत्तराणि दीक्षाविसर्गार्थत्वादि"ति सूत्रोक्तरीत्या द्वादशाहे वसतीवरीपर्यन्तानां पूर्वेषाम्, अवभृथादीनामुत्तरेषाञ्चाङ्गानां तन्त्रत्वे अपि "भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दादि"११।२।१।१०ति सूत्रोक्तन्यायेन प्रधानैरपृथक्कालान्यङ्गानि तत्तत्प्रधानकाले भेदेनानुष्ठेयानीति तत्तत्तुल्याकालीनानामैष्टिक-पाशुककर्मणां साङ्गानां तत्र तत्राहनि भेदेनानुष्ठानं प्राप्नुयात्। तथा कार्त्स्न्येन पाशुकैष्टिकप्रयोगसमाप्त्यनन्तरमेवाऽवस्थानं प्राप्नोति। सर्वथापि पत्नीसंयाजानन्तरमवस्थानस्य न पाक्षिकी प्राप्तिरस्ति। तथा च पत्नीसंयाजान्तोऽग्नीषोमीयः सन्तिष्ठत इतिवदप्राप्तविधिरेवायम्। तथाऽपि सहत्वनिर्वाहकतया, दृष्टार्थतासत्त्वात्तावन्मात्रेण नियमविधित्वं भाष्यादिषूक्तमिति समर्थनीयम्। "तत्र अनियमे प्राप्ते पत्नीसंयाजान्ते संस्थातव्यमिति नियम्यत" इति भाष्यं च हारियोजनान्तत्वादेरेव प्राप्त्या पत्नीसंयाजान्तनियमस्याऽभावे प्राप्त इत्येवं योजनीयम्। "यस्मिन्कस्मिंश्चिदनियमेनावस्थाने प्राप्ते पत्नीसंयाजान्तता नियम्यत" इति तन्त्ररत्नमपि हारियोजनप्रचारे, पश्वादिसमापनकर्मणि वा यस्मिन्कस्मिंश्चित्पत्नीसंयाजान्तनियमं विनाऽवस्थाने प्राप्त इति योजनीयम्, न तु यथाश्रुतं ग्राह्यम्, पत्नीसंयाजान्तताया अनियमतः प्राप्त्यसम्भवस्योक्तत्वात्। परिसंख्यालक्षणाक्षेपे तु यथाश्रुतभाष्याद्यनुरोधादनियमोऽस्माभिरुपन्यस्तः, तस्माद्दृष्टार्थः सर्वो विधिर्नियमविधिरिति युक्तमेव। न चैवं पुत्रेष्टि-कारीर्यादिविधेर्नियमविधित्वप्रसङ्गः। अदृष्टाद्वारकत्वस्यापि विवक्षितत्वात्।

## परिसंख्याविधिलक्षणम्

तथाऽऽर्थाद्वा स्वविषयप्रच्युता[1]ल्लाक्षणिकशब्दाद्वा, एवकाराद्वा, नञ्पदाद्वा लभ्यो यस्य कस्यापि भावस्याऽभावस्य वा यो बाधः, स सर्वोऽपि परिसंख्येति मर्यादां कुर्महे। "तत्राऽतिहायेडो बर्हिःप्रति समानयते जुह्वामौपभृतमि"त्यत्रार्थादुपरितनप्रयाजद्वये जौहवाज्यस्य, प्राचीनप्रयाजत्रये औपभृताज्यस्य च बाधः "द्वे आहवनीय" इत्यत्र "यदाहवनीये जुहोतीति सामान्यशास्त्रप्राप्तेर्विधिस्वरूपविषयप्रच्युतादप्राप्तनिषेधरूपार्थान्तरलक्षकात्तस्मादेव शब्दादग्निहोत्राहुत्यन्तराभ्यासेष्वाहवनीयबाधः। 'अत्र ह्येवावपन्ती' त्यत्रैवकारेण पवमानातिरिक्तस्तोत्रेष्वावापबाधः। "न तौ पशौ करोती"-त्यत्र नञ्पदेन पशावाज्यभागबाधः।

## निषेधेऽप्यपूर्वविध्यादिरूपेण त्रैविध्याशङ्का

स्यादेतत्। न नञ्पदलभ्यः सर्वोऽपि निषेधः परिसंख्येत्यङ्गीकर्तुं युक्तम्, विधाविव निषेधेऽप्यपूर्वविध्यादिरूपेण त्रैविध्यसम्भवात्। शक्यते हि 'दीक्षितो न जुहोती"त्यादिरपूर्वविधिः, न हिंस्यादित्यादिर्नियमविधिः "नाऽनुयाजानि"त्यादिः परिसंख्येति वक्तुमिति चेत्।

## तन्निरासः

मैवम्। परिसंख्याशब्दार्थवर्जनबुद्धिजनकस्य नञोऽपि परिसंख्यात्वस्याऽप्रत्याख्येयतया तद्योगे न जुहोति न हिंस्यादि"त्यादेरपि परिसंख्यात्वस्याऽनिवार्यत्वात्। "तत्र चाऽन्यत्र च प्राप्ते" इति लक्षणानुसारेणाऽपि तस्य परिसंख्यात्वप्राप्तिः। तद्व्यावर्त्तनाय तत्र विशेषणान्तरविवक्षायाश्च परिसंख्यालक्षणाक्षेपे दूषितत्वात्। "अत्र ह्येवावपन्ती"ति परिसंख्यायां "तत्र चान्यत्र च प्राप्ते" इति यथाश्रुतलक्षणस्याऽव्याप्त्यभावाच्च।[2] तस्मादार्थः, लक्ष्यः, एवकारप्रतिपाद्यः, नञर्थभूतश्च सर्वोऽपि निषेधः परिसंख्येति युक्तम्। उक्तञ्च न्यायसुधायां "परिसंख्या-वर्जनबुद्धिस्तदर्थो नञादिः परिसंख्याशब्दः, तद्योगाद्ब्राह्मणो न हन्तव्यो "नेक्षेतोद्यन्तमादित्यमि"त्यादीनामेव श्रुत्या परिसंख्यात्वं निषेध-पर्युदासविशेषव्यपदेशात्तु व्यवहारसिद्धेर्न परिसंख्याव्यपदेशः। "सत्यमेव वदितव्यमि"त्यादीनामेव श्रुत्या नियमत्वम्। अन्यत्र तु फलेनैव नियमपरिसंख्याव्यपदेशः" इति। एवं दृष्टार्थः सर्वोऽपि विधिर्नियमविधिरिति, सर्वोऽपि-निषेधः परिसंख्येति चाङ्गीकृत्यापूर्वविध्यादीनां लक्षणानि विभज्य दर्शयिष्यन्ते इत्यर्थः ॥४३॥

इति त्रिचत्वारिंशश्लोकस्य व्याख्या

---

[1] लाक्षणिकेति मु. पा.

[2] तस्मादर्थो लक्ष्य इति मु. पु. पा.

अथ चतुश्चत्वारिंशश्लोकस्यावतरणम् ।

तान्येवाऽऽह—

नित्यौदास्यान्यकिंचिद्विगलितनियतं यस्य तत्प्राप्तिमात्रम्
तत्कालं यस्य बोधः समुदयति निवृत्त्यात्मनाऽवश्यमेव ।
प्राप्तिं भिन्नस्य ताभ्यां कथमपि विदधत्स्यादपूर्वो विधिर्नः
कुर्वन्प्राप्तिं तयोः स्यात्स नियमपरिसंख्याभिधानः क्रमेण ॥४४॥

नियम-परिसंख्यालक्षणनिर्देशमुखेन तद्भिन्नत्वेनाऽपूर्वविधिलक्षणनिर्देशः ।

नित्यं यदौदासीन्यं विपक्षप्राप्तिसाध्यरहिततया नित्यप्राप्तं यदौदासीन्यम्, तदन्यस्य कस्य चिद्विगलितेन निवृत्त्या नियतं यत्प्राप्तित्वावच्छिन्नं तन्नियमविधिषु नियम्यम्। कामं तदेकमपूर्वविधिलक्षणे व्यावर्त्यम्, तथा यस्य तद्विधिकाले निवृत्त्यात्मतया धीर्नियता, सा तस्मिन् विधौ परिसंख्या नाम, तदपरं तत्र व्यावर्त्यम्, ताभ्यामुभाभ्यां भिन्नस्य कथमपि प्राप्तिं विदधद्विधिः नः - अस्माकं अपूर्वो विधिस्स्यात्। तयोरुभयोर्नियम्य-निवृत्त्योः प्राप्तिं कुर्वन् विधिः क्रमेण नियम—परिसंख्याविधिः स्यात्। नियम्यप्राप्तिं कुर्वन्नियमविधिः निवृत्तिप्राप्तिं कुर्वन् परिसंख्याविधिश्च स्यादित्यर्थः। तदेतल्लक्षणत्रयं विविच्य दर्शयामः—नियम्यपरिसंख्यान्यप्राप्तिकारी विधिरपूर्वविधिः। तत्प्राप्तिकारित्वञ्च यथा कथाञ्चिद्विवक्षितम्, न तु कश्चित्तत्र विशेषो विवक्षितः तेन विधिविषयस्याऽन्यस्य वा प्राप्तापोदितस्य, अत्यन्ताप्राप्तस्य वा यस्य कस्य चित् स्वरूपेण किञ्चिद्विशेषणान्तरावच्छिन्नत्वेन येन केन चिद्रूपेण प्रकृतविध्युद्देश्ये अन्यत्र वा यत्र कुत्र चित् प्रकृतविध्युद्देश्येऽपि सर्वत्र क्व चिदपि वा कियत्यां प्राप्तौ सत्यामसत्यां वा यथाकथंचित्प्राप्तिं कुर्वन्नित्ययमर्थो लभ्यते । तेन पूर्वोद्भावितसर्वाव्याप्तिनिरासः। तथा हि अग्न्यतिग्राह्यविधिषु तावन्नाव्याप्तिः। तेषां विधिविषयप्राप्तिकारित्वाभावेऽपि तदाश्रितगुणकामप्राप्तिकारित्वात्। अप्रताविधयस्तु पूतीकादिविधिवन्नियमविधयो वक्तव्या इति, न तेष्वव्याप्तिशङ्का भवति। किन्तूद्देश्यप्राप्तिकारिणि "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पूर्णमास्यां यजन्नि"ति विध्यन्तर इव इयमपि शङ्का लभते, उद्देश्येऽन्यत्र वेति विशेषानुपादानात्। स्वर्गायाऽग्निहोत्रविधिषु नानाशाखाम्नातविधिषु च नाऽव्याप्तिः, तेषां स्वरूपेण प्राप्तिकारित्वाभावेऽप्यभ्युदयशिरस्कत्वेन प्राप्तिकारित्वात्।

ननु स्वरूपेण यत्प्रापणीयम्, तदेव प्रापणीयं भवति न तु प्राप्तमप्राप्तविशेषणविशिष्टतामात्रेण स्वयं प्रापणीयतां लभते, विवक्षितविवेकेन विशेषणमात्रे प्रापणीयत्वापर्यवसानादिति चेत्। न, "पृष्ठैरुपतिष्ठते" इत्यत्रोपतिष्ठतिधातुवाच्ये समीपावस्थाने मन्त्रकरणकत्ववाचिन "उपान्मन्त्रकरण" १।३।४ इतिसूत्रविहितस्याऽऽत्मनेपदस्य निर्वाहार्थं स्वरूपेण मन्त्रकार्यस्याऽप्यग्निसमीपावस्थानस्य अग्न्यभिधानशिरस्कत्वविशिष्टत्वेन विशिष्टरूपेण मन्त्रकार्यत्वमुपपद्यत इति ९।२।८ नवमे समर्थितत्वेन तद्वत् फलभावनायाः यागकार्यत्ववच्च स्वरूपेणाऽप्रापणीयस्याऽप्यप्राप्तविशेषणवि-

शिष्टतया प्रापणीयत्वोपपत्तेः। तथाऽपि स्वरूपेणाऽप्राप्तप्रापण एव विधिव्यापार इति चेत्। न। तथा नियमाभावात्। आघाराग्निहोत्राधिकरणवार्त्तिके "दध्ना जुहोती"त्यादीनां प्राप्तहोमविषयत्वेऽपि दध्यादिविशिष्टस्वरूपेण होमप्राप्तिकारितया विधित्वस्य स्वीकृतत्वात्। अनुपादेयफल-कालादिविधीनां प्राप्तकर्मविषयत्वेऽपि फल-कालादिकसंबन्धित्वरूपेण तत्प्राप्तिकारितया विधित्वस्य स्वीकृतत्वाच्च।

निषेधरूपापूर्वविधिष्वव्याप्तिरिति तु शङ्काऽनवकाशैव, निषेधानां परिसंख्यारूपत्वस्य समर्थितत्वात्। प्रतिप्रसवविधिषु, सार्वकाम्यादिविधिषु, ब्रह्मसंबन्धविधिषु च नाऽव्याप्तिः। त्रिकालाप्राप्तस्येति विशेषस्य, उद्देश्ये सर्वत्रेति विशेषस्य क्रियत्यामपि प्राप्तावसत्यामेवेति विशेषस्य चाऽविवक्षितत्वात्। एवञ्च सर्वस्मिन्नियमविधौ, परिसंख्याविधौ चाऽतिव्याप्तिरापततीत्येतावदवशिष्यते। तन्निरासाय नियमपरिसंख्यान्यत्वं प्रापणीयविशेषणं कृतम्।

नियमपरिसंख्याभिन्नत्वे सति विधित्वमपूर्वविधित्वमिति लक्षणे शङ्कानिरासौ।

ननु किमेतया कुसृष्ट्या नियमपरिसंख्यान्यो विधिरपूर्वविधिरित्येव लक्षणमार्जवेन क्रियतामिति चेत्। न। तथा सति क्वचिदंशेऽपूर्वविधिरूपाणाम्, अंशतो नियमविधिरूपाणाम्, परिसंख्याविधिरूपाणां च विधीनां नियमपरिसंख्याभिन्नत्वाभावेनाऽसंग्रहप्रसङ्गात्। सन्ति हि तथाभूता विधयः प्रागुदाहृताः, ते चाऽनुपदमेव विवेचयिष्यन्ते।

उक्तलक्षणेऽव्याप्तिशङ्कानिरासौ

ननूक्तलक्षणमनुपपन्नम्, प्राकृतपृष्ठविध्योरव्याप्तेः। ताभ्यां विधिभ्यां प्रापणीययोर्बृहद्रथन्तरसाधनकपृष्ठाख्यस्तोत्रयोर्विकृतिविशेषेषूपहव्यादिषु विध्यन्तरैर्नियम्यत्वात्, न च प्रकृतविध्यनियम्यत्वं विवक्षितम्, प्रकृतपृष्ठविधिनियम्याप्रसिद्ध्या तदन्यत्वोक्त्यसम्भवेन, तथाप्युक्ताव्याप्तितादवस्थ्यादिति चेन्न।

किञ्चिद्विषयकप्राप्तित्वावच्छिन्नं नित्यप्राप्तौदासीन्यभिन्नकिञ्चिन्निवृत्तिनियतं यस्य भवति, तत्र तत् नियम्यमिति विवक्षितत्वात्। अस्ति च प्रकृतौ ज्योतिष्टोमे बृहत्प्राप्तित्वावच्छिन्नस्य, रथन्तरप्राप्तित्त्वावच्छिन्नस्य चौदासीन्यभिन्नविदलननिवृत्त्या नियतेभ्योऽवहननप्राप्त्यादिभ्योऽन्यत्वम्।

बृहद्रथन्तरयोः परस्परव्यावर्तकत्वेन विशेषणत्वमित्यत्र-
रथन्तराधिकरणपूर्वपक्षसिद्धान्तवर्णनमुखेन परस्परव्यावर्तकत्वाभावशंका।

ननु च बृहद्रथन्तरयोः प्रकृतौ विकल्पितत्वात्तयोः प्राप्तिरन्योन्यनिवृत्तिनियतैव। अत एव द्वितीये रथन्तराधिकरणे "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रानि" त्यत्र रथन्तरमात्रसामकस्य, बृहन्मात्रसामकस्य च गायत्रादिसामरहितस्य, क्रत्वन्तरस्य विधिरङ्गीकरणीयः। ज्योतिष्टोमे गायत्र्यामहीयवाद्यनेकसामान्तरव्यावर्त्तनाक्षमस्य, रथन्तरस्य बृहतश्च विशेषणत्वायोगेन तस्य रथन्तरविशिष्टतया, बृहद्विशिष्टतया च निर्देशायोगादिति पूर्वपक्षे प्राप्ते 'नीलमुत्पलमि'त्यादौ सर्वत्र नैल्यादिविशेषणं समानजातीयस्य रक्तिमादेरेव

व्यावर्त्तकम्, न तु गन्धादेरपि-इति । तद्वदिहाऽपि ज्योतिष्टोमे रथन्तरं बृहच्च पृष्ठस्तोत्रसाधनतया स्वसमानजातीयस्य बृहतो रथन्तरस्य च व्यावर्त्तकमिति, तयोर्नैल्यादिवद्विशेषणत्वोपपत्तेर्ज्योतिष्टोमस्यैवाऽग्रताविशेषं विधातुं बृहत्सामेति, रथन्तरसामेति च निमित्ततया निर्देशः, न तु सामविशेषविशिष्टयोः क्रत्वन्तरयोर्विधिरिति सिद्धान्तितम्, दशमे "उभयसाम्नि, नैमित्तिकम्, १०।५।१६।५९इत्यधिकरणे च, येषु संसवादिषु बृहद्रथन्तरपृष्ठसमुच्चयो विहितः तेषु बृहद्रथन्तरयोः परस्परव्यावर्त्तकत्वाभावेन निमित्तत्वाभावान्नैमित्तिकमग्रताद्वयं "उपवन्तीं रथन्तरपृष्ठस्य प्रतिपदं कुर्यात्, अग्रवतीं बृहत्पृष्ठस्ये"ति विहितं नैमित्तिकं प्रतिपदन्तरं च न कर्त्तव्यमिति सिद्धान्तितमिति चेत् ।

### तन्निरासः

उच्यते—"रथन्तरं पृष्ठं भवती"त्यादिवाक्याभ्यां तयोर्ज्योतिष्टोमे प्राप्तेर्न ते परस्परव्यावर्त्तके । अपूर्वसाधनयोस्तयोः प्रयाजादिवत्समुच्चयस्यैव ततः प्राप्तेः, किन्तु विधिवाक्यसिद्धं तदुभयमनूद्य साक्षादेव विकल्पं विदधता वचनान्तरेण रथन्तरपृष्ठम्, बृहत्पृष्ठं वा कर्तव्यं न तूभयं समुच्चितमिति सिद्धं तदुभयमनूद्य साक्षान्निर्देशा यदि बृहत्सामेत्यादयस्तैरनूद्यमान एव रथन्तरादिसंबन्धः परस्परव्यावर्त्तकः । अतस्तत्र रथन्तरप्राप्तित्वावच्छिन्नस्य, बृहत्प्राप्तित्वावच्छिन्नस्य च किञ्चिन्निवृत्तिनियतत्वाभावान्नाऽव्याप्तिः । अन्यदिह वक्तव्यशेषं लक्षणत्रयसाधारणमग्रे वक्ष्यते, तस्माद्युक्तमपूर्वविधिलक्षणम् ।

### नियमविधिलक्षणम्

नित्यप्राप्तौदासीन्यभिन्नकिञ्चिन्निवृत्तिनियतं यस्य यद्विषयप्राप्तित्वावच्छिन्नं तत्र तत्प्राप्तिकारिविधिर्नियमविधिः । अवहननस्य हि दार्शपूर्णमासिकेषु व्रीहिषु प्राप्तिराक्षेपिकी, वैधी वा । सा द्विधाऽपि नित्यप्राप्तौदासीन्याद्भिन्नस्य विदलनादेर्नियतया विदलनादिनिवृत्त्या नियता । आक्षेपिकी तु पाक्षिक्येवेत्यवहननादिप्राप्तित्वावच्छिन्ने विदलनादिनिवृत्तिनियममात्रमविशिष्टम्, यद्यप्यवहननप्राप्तित्वावच्छिन्नं विदलनादि निवृत्तिनियतं न भवति । अग्निचयने "औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति, अत्रैतदुपदधाती"त्युपधेयोलूखलसंस्कारत्वेन विहितस्याऽवहननस्य वैतुष्यार्थत्वाभावाद्विदलनादिप्रसक्त्यभावेन तत्राऽवहननप्राप्तौ सत्यामपि विदलनादिनिवृत्त्यभावादिति चेत् । सत्यम् । तथाऽपि दार्शपौर्णमासिकव्रीहिविषयकावहननप्राप्तित्वावच्छिन्नस्य विदलनादिनिवृत्तिनियतत्वमस्तीति लक्षणानुगतिः । अत एव किञ्चिद्विषयकत्वं प्राप्तिविशेषणमर्थवत् ।

### वैकृत-बृहद्रथन्तरादिष्वव्याप्तिवारणम् ।

एवञ्च वैकृतेषु रथन्तरपृष्ठादिनियमविधिष्वपि नाव्याप्तिः, प्राकृतोत्पत्तिवाक्यतः प्राप्तौ व्यभिचारेण रथन्तरप्राप्तिमात्रस्य बृहदादिनिवृत्तिनियतत्वाभावेऽप्युपहव्यादिविकृतिषु या चोदकात्पाक्षिकी रथन्तरादिप्राप्तिः, या च वैशेषिकेण नियमविधिना वैशेषिकी तत्प्राप्तिः, तस्याः द्विविधाया अपि बृहदादिनिवृत्तिनियतत्वात् । न चैवं विकृतिषु बृह-

दादिनियतप्राप्तिकस्य रथन्तरादेः प्रकृतौ प्राप्तिकारी विधिरपि नियमविधिः स्यादिति वाच्यम्। न हि यस्य किञ्चिद्विषयप्राप्तित्वावच्छिन्नमुक्तरूपनिवृत्तिनियतम्, तस्य यत्र क्वचित्प्राप्तिकारित्वं नियमविधिलक्षणमुक्तम्। किन्तु यस्य यद्विषयप्राप्तित्वावच्छिन्नमुक्तरूपनिवृत्तिनियतं तस्य तत्प्राप्तकारी विधिर्नियमविधिः-इति, ततश्च तस्याऽन्यत्र प्राप्तिकारिणि विधौ कुतो लक्षणातिप्रसङ्गः।

शङ्का

नन्ववहननस्य दार्शपौर्णमासिकेषु व्रीहिषु नियतैवाऽप्राप्तलाभापरपर्यायाप्राप्तिः न तु विलम्बितोपस्थितिकादाक्षेपादनियता काचित्प्राप्तिरस्ति; तत्कथमिह द्विविधाऽपि प्राप्तिर्निवृत्तिनियतेति लक्षणानुगतिः समर्थिता।

तन्निराकरणम्।

उच्यते—यस्य यत्र यथावत्प्रवृत्तिर्न तर्किता, न वा प्रमाणेन सम्भाविता, सर्वापि प्राप्तिरुक्तरूपनिवृत्तिशिरस्कैव भवेत्, तत्र तत्प्राप्तिकारी विधिर्नियमविधिरिति स्वतःसिद्धतर्कितसाधारण्येन सम्भावितप्राप्तिगर्भं लक्षणं विक्षितम्। तथा चाऽवहननस्य यथावत्प्रवृत्तेर्नियमविधिना तर्कितेनाऽऽक्षेपेण च सम्भाविता प्राप्तिः, रथन्तरस्य च यथावत्प्रवृत्तेन वैशेषिकवचन-वैशेषिकरचनापरामर्शात्प्रकृतौ बृहद्रथन्तरविकल्पमपि क्रोडीकृत्य प्रथमं यथाप्रवृत्तेन चोदकेन च सम्भाविता प्राप्तिश्च विदलनबृहदादिनिवृत्तिनियतैव भवेदिति, उपपन्ना लक्षणानुगतिः। एवमेवोदाहरणान्तरेष्वपि लक्षणानुगतिर्द्रष्टव्या।

नन्वेवम''व्युत्तरेऽह्न् द्विरात्रस्य गृह्यत'' इति षोडशिग्रहनियमविधौ लक्षणस्याव्याप्तिः। तत्र षोडशिग्रहप्राप्तिव्यतिरिक्तायास्तेन सह प्रकृतौ विकल्पितस्य षोडशिग्रहाभावस्य निवृत्तेरभावेन षोडशिग्रहप्राप्तौ तदभावनिवृत्तिनियतत्वासम्भवादिति चेन्न। अभेदेऽपि व्याप्तिसत्त्वेन तत्सम्भवात्, भेदगर्भव्याप्तेरविवक्षितत्वादिति संक्षेपः[१]।

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भारद्वाजकुलजलधिकौस्तुभविश्वजिद्याजिश्रीरंगराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ विधिरसायनसुखोपयोजिन्यामपूर्व-नियम-परिसंख्योदाहरणाक्षेपसमाधानम्।

समाप्तोऽयं ग्रन्थः

---

[१] ग्रन्थस्याऽन्तरङ्गपरीक्षया सम्पूर्ण इति प्रतिभाति, विशेषस्तु भूमिकायां द्रष्टव्यः।

## अकारादिक्रमेण विधिरसायन-सुखोपयोजिनीगतश्लोकानामनुक्रमणिका

समाप्ताचेयमकारादिक्रमेण श्लोकानामनुक्रमणिका

---

## शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| सर्वथा | सर्वदा | ३ | २५ |
| सामिधेनीमात्रसंबन्धम् | सामिधेनीसम्बन्धमात्रम् | ४ | १५ |
| क्लृप्तः | क्लृप्तः | ,, | १७ |
| प्राप्येन | प्राप्येण | ५ | ५ |
| परिसंख्यात्व | परिसंख्यापकत्व | ५ | १५ |
| सति सप्तम्या | सप्तम्या | ६ | २२ |
| अथाग्रयणाग्रं त्र्यनीकेत्यनन्तरं समाम्नातेति पाठः | | ७ | १५ |
| पूर्वपक्षः | पूर्वं पक्षः | ७ | १५ |
| ,, | ,, | ७ | २० |
| गवामयनिकेषु | गावामयनिकेषु | ८ | १ |
| संबन्व | संबन्ध | ,, | ७ |
| अन्तर्गतमित्यस्याऽनन्तरमाद्यमिति पठनीयम् | | ,, | १८ |
| वान्वाहार्यम् | वन्वाहार्यम् | ९ | ९ |
| तण्डुलनिर्वृति | तुषनिर्वृत्ति | ,, | २० |
| अवश्यलक्षणीयम् | अवश्यं लक्षणीयम् | ,, | २२ |
| विधिरपूर्वविधिः | विधिरप्यपूर्वविधिः | १० | ९ |
| प्राप्तौ | प्राप्तः | १० | १२ |
| यत्त | यत्तु | ११ | ३१ |
| अन्तरालस्य | अन्तरालकालस्य | १२ | ८ |
| हेतुस्वारस्यं | हेत्वसारस्यम् | ,, | १५ |
| लक्ष्यानपाय | उपलक्ष्यानपाय | ,, | २४ |
| फलसिद्धिः | फलसम्बन्धासिद्धिरेव | ,, | २६ |
| प्रायवचनात् | प्राये वचनात् | ,, | २८ |
| पक्षे | पूर्वपक्षे | १३ | २८ |
| दोष | जामितादोषः | ,, | १९ |
| प्राप्तिरुक्ता | प्राप्तिमुक्त्वा | ,, | २२ |
| सिद्ध्यति | स्यादिति | १४ | ५ |
| लक्ष्यानपाय | उपलक्ष्यानपाय | ,, | १० |
| संयोजनात् | संवेदनात् | ,, | २० |
| पीर्णमासी | पौर्णमासी | ,, | २४ |
| प्राप्ति | प्राप्तिम् | ,, | ३१ |
| उपहित इत्यनन्तरं काले इति पठितव्यम् | | १५ | १ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| एवं | एव | १६ | १४ |
| परफल | फल | ,, | ३४ |
| परसंवन्ध | फलसंवन्ध | १७ | १ |
| न स्यात् | नान्यत् | ,, | २ |
| अनीवार्या | अनिवार्या | १७ | ७ |
| अनधिगत् | अनधिकृत | ,, | १३ |
| इत्यादिषु | इत्यादिः | १८ | १ |
| विक्षणौयित्यात् | विवक्षणौचित्यात् | ,, | ३ |
| अप्राप्तिः | अप्राप्यः | ,, | ६ |
| यत्किञ्चिदिति संपातायातः | | ,, | ८ |
| फलक | फलकत्वम् | ,, | ९ |
| विघान | विधाव | ,, | १४ |
| कलपनया | कल्पनयैव | १९ | ४३ |
| कांक्षया | आकांक्षया | ,, | २० |
| पंक्तौ स्वशाखेत्यत्रोभयत्रापि अपरोप्येकः स्वशब्दः पठनीयः | | २० | २२ |
| शाखा | शाखागत | ,, | २५ |
| प्राप्तयर्थे | प्राप्तार्थक | २१ | ९ |
| अग्निहोत्रादि | अग्निहोत्र | २२ | ३१ |
| आप्तितावत् | आप्ततावत् | २३ | २ |
| सत्साप्तदृश्य | तत्साप्तदृश्य | ,, | ३ |
| व्रीहियवविध्योरित्यतः प्राकृतथेति पठितव्यम् | | ,, | १२ |
| तदा | तथाहि | ,, | २७ |
| परावृत्य | परावृत्तयोः | २३ | २८ |
| स्थालयाअस्य | स्थाल्या अपि | २४ | १ |
| लौहवाद्याज्यस्य | जौहवाज्यस्य | २४ | २ |
| तत्तद्विधि | तद्विधि | २४ | ५ |
| पृष्ट्यः षडहइत्यतः | प्राकृतथेति पठनीयम् | २४ | १० |
| विघलक्षणस्य | विधिलक्षणस्य | २४ | १४ |
| व्यतिरिक्ता | व्यतिरिक्त | २४ | १७ |
| उपाधीन् | उपाधीनाम् | २४ | २१ |
| भेदासांकर्यात् | भेदाभावात् | | |
| तदुभय | फललक्षण | २४ | २८ |
| सायमित्यतः | प्राकृतथेति | २५ | १ |
| पक्तौ कयोरित्यतः पठनीयम् प्राकृययोरिति च | | | २२ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| परिसंख्यायाः | परिसंख्ययोः | २५ | २८ |
| उपधेय | उपधेयानां | २६ | १४ |
| सोमांग | सोमयागांग | २६ | ३४ |
| व्यावृत्तस्येत्यनन्तरं तस्येति योजनीयम् | | २७ | २ |
| तयोः | द्वयोः | २७ | १९ |
| पंक्तौ प्रथमेत्यतः प्राकृतत इति, | | २७ | २० |
| पंक्तौ तत्प्रयोजकत्वेनेत्यतः प्राकृतत इति च पठनीयम् | | | २३ |
| पुरुषभेदेन | तद्व्यवस्थार्थः | २८ | ४ |
| अधिकुर्वन्ति | अधिकुर्युः | २८ | ६ |
| समुच्चय | समुच्चित | २८ | १० |
| एक | एकं | २९ | १ |
| यत् | तत् | २९ | १ |
| पावमान | पावमानगत | २९ | २६ |
| एकेत्यनन्तरं | यदैन्द्रवायवः | ३० | २४ |
| धाराग्रहाणामेवेति | पाठः | ३० | २७ |
| पुनविधानम् | पुनर्विधानम् | ३० | ३० |
| प्राकृत | प्रकृत | ३० | ३४ |
| संकरे | फलसंकरे | ३१ | १६ A. B. |
| अपश्यन् | तेऽपश्यन् | ३१ | २५ |
| कूर्मभूतं | कूर्मभूतम् | ३१ | २५ |
| गृह्णाति | कर्मभूतं हविः | ३२ | ६ |
| व्रीहिरूपप्रकृतिद्रव्योपादानमपि प्राप्नुयात् | | ३२ | ३३ |
| सतित्वस्मिन् विधौ विहितस्य श्रपणस्ये | | | |
| त्यन्तः सहेत्यनन्तरं योज्यः | | | |
| विधिरेव | विधिरिह | ३३ | १२ |
| लक्षक | लंभक | ” | १४ |
| सातिअ | सत्यप्यनियत | ” | २६ |
| अनुपपत्त्येत्यनन्तरं कल्पनीयमिति पाठः | | ३४ | २ |
| संस्कारणां | संस्काराणां | ” | ७ |
| तत्क्रिया | तत्तत्क्रिया | ” | २५ |
| द्व्यवद्रान् | द्व्यवदान | ३६ | ५ |
| फलवदफलवद् | फलवदफल | ” | २० |
| संबध | संबन्ध | ” | ३० |
| चाऽप्राप्तिः | याऽप्राप्तिः | ३७ | ५ |
| आत्मनि | आत्मने | ३८ | २८ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| धर्मातिदेश | धर्मादेः प्राप्तौ | ३८ | २९ |
| प्रवृत्त | प्रकृता | ३९ | १ |
| यजर्वेद | यजुर्वेद | " | २७ |
| अंगानीवि | अंगानीति | ४० | ३ |
| चनाश्रवस्य | वचनाश्रयस्य | " | २० |
| विधिनियम | नियमविधि | " | ३१ |
| प्रागृवाव | प्रागृभाग | " | ३३ |
| पदवोगस्य | पदप्रयोगस्य | ४१ | २१ |
| समान | तत्समान | " | २९ |
| रहितेऽपूर्व | रहितापूर्व | ४१ | ३१ |
| सोकर्ये | फलसांकर्ये | " | ३३ |
| प्रवृतौ | प्रवृत्तौ | ४२ | १७ |
| योनिष्वित्यस्यानन्तरं गीयमानानां क्रतुसाम्नामेकं साम तृचे क्रियते स्तोत्रीयमिति योजनीयम् | | " | ३२ |
| योन्यामित्यस्यानन्तरं गायतीति योज्यम् | | " | ३३ |
| अपेक्षयैव | अपेक्ष्यैव | ४३ | ८ |
| विशष | विशेष | ४५ | ५ |
| एकदेश | एकदेशाः | " | १४ |
| प्रकृति | प्राकृत | " | २३ |
| अविह्रियन्ते | आह्रियन्ते | ४६ | ४ |
| दुप्टका | दुप्टीका | " | ७ |
| दधिश्रत् | दधि-श्रृत | " | ९ |
| दाशिक | दार्शिक | " | १९ |
| उपाशुयाज | उपांशुयाज | " | ३० |
| दाशिक | दार्शिक | ४७ | १ |
| अप्रस्प्तः | अप्राप्तेः | " | १८ |
| कप्तम् | क्लृप्तम् | ४८ | १० A. B. |
| उद्वेण्य | उद्देश्य | | |
| अह्रश | अह्न | ४८ | १७ |
| तयारे | तयोरेव | " | २७ |
| आह्नः | अह्नः | " | ३३ |
| पक्षसीत्यनन्तरं प्रथमस्येति षाडहिकस्येत्यनन्तरमादित इति च योज्यौ | | ४९ | ५ |
| छन्दोऽनीक | छन्दोमत्र्यनीक | " | ८ |
| अनुष्ठान | अनुष्ठानस्य | " | ३२ |
| अपूर्वश्रपणम् | अपूर्वं श्रपणम् | ५२ | ७ |
| इत्यत्र | इत्येतावत् | " | १३ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| नैशकांक्ष्यतया | निराकांक्षतया | ५२ | २३ |
| किम्मीरितत्वं | किम्मीलितत्वं | " | ७ |
| गावामयनिकाग्रुत | गावामयनिकाग्रता | " | १३ |
| अवच्छेदेनाग्राप्तिः | अवच्छेदेनाप्राप्तिः | " | २१ |
| किन्तु | किन्नु | | |
| भिदा | भिदाम् | ५४ | १३ |
| संत्धार्थं | संबद्धप्राप्त्यर्थक | " | २९ |
| कात्स्नेंन | कात्स्न्येंन | ५५ | ७ |
| अतेषाम् | तेषाम् | " | २४ |
| त्यत्तर | त्युत्तर | ५६ | ६ |
| इश्यते | दृश्यते | ५७ | ८ |
| उदाहरणत्व | उदाहरण | " | १४ |
| नियम् | नियमः | " | १६ |
| आत्तेपा | आक्षेपो | ५६ | १६ |
| विन्देत् | विन्देत | " | २४ |
| लक्षणन | लक्षणेन | ५९ | ६ |
| उदाहरणेन्व | उदाहरणेषु | ६० | २० |
| प्रमाणादि | प्रमाण | " | " |
| अगृम्णन | अगृभ्णन् | ६२ | ८ |
| स्तेन | तेन | " | २० |
| सामान्तराणां | साममन्त्राणां | ६३ | १२ |
| रथम्तर | रथन्तर | " | १६ |
| अशेष | शेष | ६४ | १४ |
| वैय्याधि | वैयधिकरण्येन | ६५ | २ |
| वैय्याधिकरण्य | वैयधिकरण्य | " | १० |
| एषेत्यनन्तरं यदैन्द्रवायव इति पठनीयः | | " | २२ |
| त्रिंशदात्रे | त्रिंशद्रात्रे | " | ३१ |
| वर्मास्य | वर्गस्य | ६६ | १४ |
| पत्नीसंयाज्यन्तरयां | पत्नीसंयाजान्ततयां | " | २४ |
| संभववेन | संभवेन | ६७ | ५ |
| वोधः | बाधः | ६८ | २ |
| आज्यभागयो | आज्यभागयोः | " | ९ |
| सवन्धेन | संबन्धेन | " | ३० |
| प्रकृति | प्रकृत | ७० | १७ |
| अवहनस्य | अवहननस्य | " | २६ |
| लक्षणो | लक्षणे | ७१ | ७ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| विधेय | विधेयतया | ” | १३ |
| अहभेद | अहर्भेद | ” | २१ |
| अवछद | अवच्छेद | ” | ” |
| संग्रहीतुं | न संग्रहीतुं | ७२ | १२ |
| प्रपञ्चाते | प्रपञ्चते | ७२ | १३ |
| प्रकृति | प्रकृत | ” | २१ |
| विधयत्वेन | विधेयत्वेन | ” | २२ |
| तुतीये | तृतीये | ७४ | १७ |
| आयुधाना | आयुधानि | ” | २७ |
| संभरंन्ति | संभरति | ” | २८ |
| विधौ | विधी | ७५ | ११ |
| नित्यप्राप्त | नित्याप्राप्त | ” | |
| अभ्युदयार्थं | अभ्युदयार्थत्वं | ” | १२ |
| आद्रायते | आद्रियते | ६७ | १६ |
| नियमपेक्ष्य | नियममपेक्ष्य | ७७ | ११ |
| परिसंक्याया | परिसंख्याया | ७८ | ६ |
| स्पृशति-इत्येवं | स्पृशत्येव | ” | १४ |
| निपम्यस्या | नियमस्य | ” | १६ |
| सुनिरुपणे | तुनिरूपणे | ७९ | ७ |
| अवहननविधौ | अवहननविधी | ” | १४ |
| अधिश्रयन्ती | अभिश्रयती | ” | २६ |
| अशक्यात्वादित्यनन्तरमदुष्टार्थतापत्तेरिति योजनीयम् | | ” | ३३ |
| संपादनात्मनोत्यस्यानन्तरं विधानात्तु इति योज्यम् | | ८० | |
| यथाऽध्वर्यंव | यद्याध्वर्यव | ” | ३ |
| नियमार्थंप्रथन | नियमार्थप्रथन | ” | २२ |
| परिसंख्यत्याशंका | परिसंख्येत्याशंका | ” | २७ |
| शब्द्ध | शब्द | ८१ | २ |
| वैय्यर्थं | वैयर्थ्यम् | ” | १७ |
| मन्त्रधिवि | मन्त्रविधि | ” | ” |
| निवम | नियम | ” | ३३ |
| तथाषि | तथाऽपि | ८१ | २७ |
| ग्रस्तेत्यग्रानन्तरमग्रे | इति योजनीयम् | ” | २८ |
| विधिमूलेतु | विधिमूलेति तु | ” | ” |
| अगृम्णन | अगृभ्णन | ८३ | २ |
| ग्रोक्षण | प्रोक्षण | ” | २१ |
| अपूर्वसाधनत्वेन | अपूर्वसाधनत्वेन | ८४ | २९ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| अनिर्देशः | निर्देशः | ८५ | १ |
| अपूर्वार्धत्व | अपूर्वार्थत्व | ” | ४ |
| तयोरर्थात | तयोरप्य | ” | ९ |
| विधीयर्थातमानस्य | विधीयमानस्य | ” | १० |
| शब्दान्वय | शब्दान्वय | ” | १५ |
| चमसद्वारं | फलचमसोद्वारं | ” | ३१ |
| प्रसंगी | प्रसंगः | ८६ | ३४ |
| तिच | तेच | ” | ” |
| एव | एवम् | ” | २५ |
| तद्वारं | तदद्वारम् | ८७ | १ |
| राज्यन्य | राजन्य | ” | १२ |
| निराकरणस्यानुपयोग | निराकरणस्यनुपयोग | ” | ३० |
| साधारण्यतया | साधारण्येन | ८८ | १४ |
| साधना | साधन | ८९ | १० |
| लक्षण | लक्षणा | ८९ | १० |
| मुख्यार्था | मुख्यार्थ | ” | १२ |
| निपपादनादिना | निष्पादनेनैव | ९० | १६ |
| सपानविध्य | सामानविध्य | ” | १६ |
| अशकयात्वात् | अशक्यत्वात् | ” | ३० |
| अवश्य | अवश्यम् | ” | ३४ |
| व्यवस्था वादनं | व्यवस्थापन-तन्निरासौ | ९१ | २ |
| शकयो | शक्यो | ” | ४ |
| अपूर्व्रीय | अपूर्वीय | ” | ११ |
| व्ययस्थायां | व्यवस्थायाम् | ” | १८ |
| विधेयत्वे | विधेयत्वे | ” | १९ |
| स्वाहेत्येव | स्वाहेति | ” | २७ |
| सायं होमे इत्यस्यानन्तरं सूर्यवाकूयेनेति | पठनीयम् | ९१ | २९ |
| होमाङ्गतया | होमांगतया | ९२ | १ |
| निर्देशभात्रात् वस्था | निर्देशमात्राद्व्यवस्था | ” | ८ |
| पवमानानन्तर | पवमानानन्तरं | ९२ | २८ |
| धारयेदित्यादि | धारयेत्यादि | ९४ | १४ |
| रन्तर | रथन्तर | ” | २१ |
| मर्यः | मर्थः | ९४ | ३१ |
| उदाहरणयोर अपूर्वं | उदाहरणयोरपूर्वं | ९५ | ३ |
| व्यव | यव | ” | ४ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| प्रत्यक्षां | प्रत्यक्षा | ९६ | १७ |
| व्ववस्था | व्यवस्था | ९७ | ३ |
| निराकाङ्ध्यत्वे | निराकांक्षत्वे | ” | ६ |
| मन्त्राकांङ्ध्यया | मंन्त्राकांक्षया | ” | ” |
| असक्कत्वात् | अशक्यत्वात् | ” | ७ |
| निराकांद्धत्वे | निराकांक्षत्वे | ” | ९ |
| शक्यवात् | शवयत्वात् | ” | ११ |
| जन्यौपकार | जन्योपकार | ” | २० |
| आम्नाने | आम्नानेनोक्तस्य | ” | २३ |
| लाभं | लाभे | ९८ | ४ |
| विध्मर्थे | विधिनाऽर्थलभ्य | ” | १७ |
| सर्वविधीनाम् अपूर्वनियमपरिसंख्याविधीनां | | ” | ११ |
| भवेत् | भवत् | ” | ३१ |
| उद्यावितभव्याप्न | उद्यावितान्याप्ति | ९९ | ९ |
| प्राचर्थाः | प्रप्तार्थाः | ” | ११ |
| मूलांगत्वाभावेन | मूलभूतांगत्वाभावेन | ” | १८ |
| उत्पन्नस्थाग्नेः | उत्पन्नस्याग्नेः | ९९ | २२ |
| एषेत्यनन्तरं यदैन्द्रवायवं इति योज्यम् | | ” | २५ |
| क्रत्वर्थे | क्रत्वर्था | १०० | २१ |
| बद् | वात् | १०१ | १८ |
| पाप्ते | प्राप्ते | ” | ३० |
| पाक् | प्रागु | ” | ३१ |
| वःक्य | वाक्यो | ” | ३२ |
| अहः | अहन् | १०२ | ३ |
| संथा | संस्था | ” | ६ |
| एवग | एवम् | ” | ९ |
| उत्कृत्थ्य | उत्कृष्ण | ” | १५ |
| ब्योतिष्टोम | ज्योतिष्टोमः | ” | २१ |
| मध्यगङ्गं | मप्यंगं | १०३ | १२ |
| प्रवृत्युप | प्रवृत्त्युप | ” | ” |
| | | ” | २३ |
| १०-९-३४ | १०-५-९-३४ | | |
| वाक्येंषु | वाक्येषु | १०४ | ८ |
| अंगः | अङ्गोः | ” | ३१ |
| विलङ्वित | विलम्बित | १०७ | १ |

| अशुद्धम् | शुद्धम् | पृ० | प० |
|---|---|---|---|
| प्रथमबुद्धिः | प्रथमं बुद्धि | १०७ | १ |
| वरमिति | वरमित्युक्त | १०८ | ३ |
| विहित | विहित | ११० | ११ |
| सातत्र | तत्र | १११ | ४ |
| इतिकर्तव्यतायाः | इतिकर्तव्यता या | " | " |
| साप्तदशस्थातिदेशकेन | साप्तदश्यस्यातिदेशकेन | " | " |
| साप्तदश | साप्तदश्य | ११२ | ६ |
| स्ववैर्यर्थ्यम् | स्ववैयर्थ्यम् | " | १५ |
| तण्हुल | तण्डुल | " | २९ |
| विधेयमिति | विधेय इति | ११३ | ३० |

शुद्धिपत्रं समाप्तम्

———

